# अतिदेशसूत्रव्याख्यानम्

( महाभाष्यानुसारि )

लेखकः
पण्डितरामरूपमिश्रः

प्रधानसम्पादकः
प्रो० अर्कनाथ चौधरी

सम्पादको भूमिकालेखकश्च
डा० बोधकुमारझाः



राष्ट्रियसंस्कृतसंस्थानम्
मानितविश्वविद्यालयः
( मानवसंसाधनविकासमन्त्रालयभारतसर्वकाराधीनम् )
क.जे. सोमैयासंस्कृतविद्यापीठम्, विद्याविहारः,
मुम्बई-७७ ( महाराष्ट्रम् )

राष्ट्रियसंस्कृतसंस्थानमुम्बईपरिसरस्य प्रथमं पुष्पम्

॥ श्रीः ॥

व्याकरणदर्शनादिशास्त्रपारावारीणेन

पण्डितरामरूपमिश्रेण

प्रणीतम्

# अतिदेशसूत्रव्याख्यानम्

( महाभाष्यानुसारि )

प्रधानसम्पादकः

प्रो० अर्कनाथ चौधरी, प्राचार्यः

सम्पादको भूमिकालेखकश्च

डा० बोधकुमारझाः




राष्ट्रियसंस्कृतसंस्थानम्

मानितविश्वविद्यालयः

( मानवसंसाधनविकासमन्त्रालयभारतसर्वकाराधीनम् )

क.जे. सोमैयासंस्कृतविद्यापीठम्, विद्याविहारः,

मुम्बई-७७ ( महाराष्ट्रम् )

प्रकाशकः प्रधानसम्पादकश्च
प्रो. अर्कनाथचौधरी, प्राचार्यः
राष्ट्रियसंस्कृतसंस्थानम्, मानितविश्वविद्यालयः
क.जे. सोमैयासंस्कृतविद्यापीठम्, मुम्बई।

ISBN -



प्रकाशनवर्षम् – २०११

प्रथमं संस्करणम् – ५००

मूल्यम् – १६४/- रूप्यकाणि।

सम्पादकः
डा० बोधकुमारझाः

अक्षरसंयोजकः
श्रीवामदेवमिश्रः
दूरभाषः – ०७३०३५२०४२८

मुद्रकः
जगदीश संस्कृत पुस्तकालय
झालानियों का रास्ता, किशनपोल बाजार, जयपुर

**प्रो. राधावल्लभ त्रिपाठी**
कुलपति
**राष्ट्रिय संस्कृत संस्थान**
**(मानित विश्वविद्यालय)**
(मानव संसाधन विकास मंत्रालय,
भारत सरकार के अधीन)



**Prof. Radhavallabh Tripathi**
Vice-Chancellor
Rashtriya Sanskrit Sansthan
(Deemed University)
(Under **MHRD**, Govt. of India)

# शिवसङ्कल्पमस्तु

सुविदितमेवैतद् व्याकरणनिर्माणप्रगुणधिषणाधनिना पाणिनिना शब्द-व्याकृतिसाधनं सारवदल्पाक्षरविश्वतोमुखस्तोभरहितनिश्चयात्मकज्ञानजनकवाक्यस्वरूपचतुःसहस्रप्रायसूत्रात्मकं शब्दानुशासनापरनामकमष्टाध्यायीरूपं व्याकरणं निर्ममे इति। तत्र शक्तिनियामकं सञ्ज्ञासूत्रम्, अनियमे नियमकारकं परिभाषासूत्रम्, साधुत्वप्रकारकबोधजनकं विधिसूत्रम्, अन्यनिवृत्तिफलसिद्धार्थ-प्रतिपादकं नियमसूत्रम्, अतस्मिन् तद्धर्मारोपबोधकमतिदेशसूत्रम्, उत्तरत्रपूर्वत्रोपस्थितिरूपविनियोगकारकमधिकारसूत्रञ्चेति सूत्रषाड्विध्यं चकास्तिताम्। तेषु विधिसञ्ज्ञादिसूत्रक्षेत्रविवर्धकानामतिदेशसूत्राणामध्ययनाध्यापनावधौ दुरूहतामकलय्य राष्ट्रियसंस्कृतसंस्थानस्य मुम्बई स्थिते क. जे सोमैयासंस्कृतविद्यापीठ-परिसरे शास्त्रचूडामणिपदमधिष्ठितवता पण्डितप्रवरेण श्रीरामरूपमिश्रेणातिदेश-सूत्रविमर्श इतिशीर्षको ग्रन्थो निरमायि, प्राकाशि च परिसरीयप्रकाशनरूपं ग्रन्थरत्नमिदं मुम्बईविद्यापीठेनेति मोदस्यायमवसरः।

काशिकामहाभाष्यप्रदीपोद्योतद्युत्याऽतिदेशसूत्राणां पातञ्जलपङ्क्ति-ततिरहस्योज्जिघाटयिषया प्रणीतोऽयं ग्रन्थश्छात्राध्यापकगवेषकानुपचरीक-रीत्वित्याशास्ते।

प्रो. राधावल्लभः त्रिपाठी
कुलपतिः

# ॥ आमुखम् ॥

संस्कृतस्य प्रचाराय शास्त्राणां संरक्षणाय संवर्धनाय च, महत्त्वपूर्णानां पाण्डुलिपीनां संरक्षणपूर्वकप्रकाशनाय विशिष्टविदुषां ग्रन्थप्रकाशनाय च सर्वदा सर्वथा प्रयतमानस्य राष्ट्रियसंस्कृतसंस्थानस्य मुम्बईस्थितः तरुणायमानः परिसरः अन्यपरिसरैः सह स्कन्धात् स्कन्धं मेलयन् प्रथमं ग्रन्थकुसुमं प्रकाशयन्नितरामामोद-मावहति। व्याकरणशास्त्रस्य निष्णातेन विदुषा डा० रामरूपमिश्रेण कृतं व्याख्यान-ग्रन्थम् ''अतिदेशसूत्रव्याख्यानम्'' (महाभाष्यानुसारि) विदुषां करकमलेषु समर्पयति साम्प्रतमनुभवति चानन्दं परिसरः।

विदुषां नाविदितं यत् षड्विधसूत्रेषु अतिदेशसूत्राणां कियन्महत्त्वं व्याकरणशास्त्रीयप्रकियानिर्वाहाय। अतस्मिन् तद्धर्मारोपकमतिदेशसूत्रमिति चापि वयं जानीमहे। अतिदेशसूत्रं च सप्तविधम्। पाणिनिः क्वचित्प्रक्रियानिर्वाहाय रूपमतिदिशति यथा – तृज्वत् क्रोष्टुरिति। पूर्ववत्सनः इति निमित्तं, सुबामन्त्रिते पराङ्गवत्स्वरे इति तादात्म्यं, कर्मवत् कर्मणा तुल्यक्रियः इति शास्त्रम्, आद्यन्तव-देकस्मिन् इति व्यपदेशं (मुख्यव्यवहारं) गोतो णित् इति णित्कार्यञ्चातिदिशन्ति। एवमेव आङो यमहनः इति हन्तेर्विधीयमानमात्मनेपदं तत्स्थाने जातस्य वधेरपि स्यादिति स्थानिवदादेशोऽनल्विधौ इति सूत्रम्, अचः परस्मिन् पूर्वविधौ इति भावाभावयोरतिदेशकं, न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु इति तत्स्थले अतिदेशेन जायमानान् दोषान् निराकर्तुम्, चक्रतुरित्यादिसिद्धये च द्विर्वचनेऽचीति सूत्रम्, प्रत्ययलोपे प्रत्ययलक्षणमिति निमित्तातिदेशसूत्रं, न लुम-ताङ्गस्य, अन्तादिवच्च, असिद्धवदत्राभात्, पूर्वत्रासिद्धमित्यादिसूत्राणि पाणिनिना कृतानि। तेषां तेषां सूत्राणां विशिष्टं व्याख्यानं भाष्यरूपं लभ्यत एव। सरलभाषया सरसशैल्या च विहितं भाष्यरूपं व्याख्यानं भावदृष्ट्याऽतिगभीरमिति काले काले पुनरपि भाष्यकर्तुर्भावं स्फोरयितुं विद्वान्सोऽचेष्टन्त।

तेष्वेव क्रमेषु एतेषां सूत्राणां भावस्फोरणाय शङ्कासमाधानपूर्वकं व्याख्यानं डा० रामरूपमिश्रेण कृतमतिमनोहारिण्या शैल्या सरसया च वाचा। अस्य व्याख्यानग्रन्थस्य प्रकाशनमासीन्महत्त्वपूर्णमिति धिया राष्ट्रियसंस्कृतसंस्थानेन परीक्ष्यानुमतिर्दत्ता प्रकाशनायातो हेतोर्मुम्बईपरिसरः कार्तज्ञं विज्ञापयति कुलपतीनां प्रो. राधावल्लभत्रिपाठिनाम्।

विश्वसिमि सहृदयहृदयाः सुधियो ग्रन्थरत्नमेतत् समवाप्य भृशं मुदिताः स्युरिति। परिसरस्थव्याकरणविभागस्य आचार्याः डा० बोधकुमारझा निर्दुष्ट-सम्पादनकर्मणि च बहुमूल्यं सहयोगं प्रादुरिति ते प्रशंसावचनैः सभाज्यन्ते। व्याख्यानकर्तारश्च प. श्रीरामरूपमिश्राः शरदः शतं जीव्यासुरिति भगवन्तं परमशिवं प्रार्थये।

**प्रो. अर्कनाथचौधरी**
**प्राचार्यः**
**प्रधानसम्पादकश्च**

# लेखकीयम्

अयि मान्या विद्वान्सः!

सुविदितमेतच्छ्रीमतां यदन्यतन्त्रेषु सूत्रव्याख्यानानि वार्त्तिकव्याख्यानानि वा भाष्यपदेनोच्यन्ते, किन्तु व्याकरणतन्त्रे तत्कृतं व्याख्यानं महाभाष्यपदेनोच्यते। तत्र किं कारणम्? महत्पदमधिकृत्य कैयटादिभिः व्याख्यातृभिः इष्ट्याद्युपसंख्या-नादस्य व्याख्यानस्यास्ति महत्त्वमित्युक्तम्। तत्रादिपदेन अन्येऽपि हेतवः सन्ति महत्त्वस्य। तद्यथा सामान्यनियमेन कस्यापि सूत्रस्य पुनः कथनं दोषावहमिति कृत्वा तस्य वैयर्थ्यमापाद्य परिभाषाज्ञापनम्। अन्यच्च वार्त्तिकानां युक्तियुक्त्या खण्डनं ततः तस्य मण्डनम्, किञ्च सूत्रकाराणामपि कुत्रचित् खण्डनं विधाय पुनः सश्रद्धं वर्णेनाप्यनर्थकेन न भवितव्यम्, किं पुनरियता सूत्रेण, अथ च किञ्चिच्छुद्धादृष्टार्थवत् किञ्चिद्दृष्टादृष्टार्थवत्, इत्याद्युक्तिभिः समाहितम्। कुत्रचित् नागवत् सरला भाषा, कुत्रचित् कुण्डलिता भाषेत्यादिविश्लेषणैरन्यतन्त्रभाष्या-पेक्षयाऽस्ति महत्त्वं व्याकरणतन्त्रमहाभाष्यस्य। इदमपि श्रीमन्तो विजानन्ति यद् महाभाष्ये छात्राणामध्ययनपरम्परामनुसृत्य सूक्ष्मातिसूक्ष्मं विषयविवेचनं दृश्यते। महाभाष्ये दर्शनतत्त्वान्यपि निहितानि। तेषां विवेचनं शब्दतत्त्वज्ञेन राजर्षिणा महादार्शनिकेन च भर्तृहरिणा कृतम्। स ग्रन्थो वाक्यपदीयनाम्ना सुप्रतिष्ठितः। अयं ग्रन्थः शब्दार्थकल्पवृक्ष इव चकास्ति। पाणिनीयसूत्रं बीजरूपेण वार्तिकं मृत्तिकारूपेण महाभाष्यव्याख्यानं जलरूपेण संहत्य शब्दार्थकल्पवृक्षो वाक्यपदी-यनामा ग्रन्थो बभूव। विद्वत्सु एषोक्तिः प्रचलति –

**अहो भाष्यमहो भाष्यमहो वयमहो वयम्।**
**मामदृष्ट्वा गतः स्वर्गमकृतार्थः पतञ्जलिः॥**

वाराणस्यामन्यत्र च संस्कृतसंस्थासु महाभाष्यग्रन्थ उपक्षित इव अस्ति। कश्चनांश: परीक्षासु निर्धारितोऽस्ति। नव्यव्याकरणपाठने प्रायो विद्वांसो गम्भीराशयं ज्ञातुं महाभाष्यमवलोकयन्ति। इत्येतदर्थं मयि जिज्ञासैतादृशी आसीत्, विशेषतोऽतिदेशसूत्राणि सम्पूर्णायामष्टाध्याय्यां शब्दसाधनविधिषु प्रभवन्ति। अत: तदतिदेशसूत्राणि अत्रत्यानां व्याकरणविभागाध्यक्षपदमलङ्कुर्वतां श्रीमतां प्रोफेसर-प्रकाशचन्द्रमहोदयानामथ च श्रीमतां बोधकुमारझाशर्मणां पुस्तकस्यास्य भूमिकासम्पादनकर्मानुष्ठितवतां सत्प्रेरणया प्रज्ञा विवेकं लभत इति न्यायेन व्याख्यातुं मे मन: प्रवृत्तम्।

अत्र कैयटनागेशानां गुरुगुरूणां टीकामवलोक्य महाभाष्ये मे काचन गतिरभूत्। एवञ्च काशीस्थान् गुरुनपि संस्मृत्य संस्मृत्यागतं काठिन्यं दूरीकृतम्। यानि काशिकायामुदाहरणानि, तान्येव महाभाष्ये उदाहरणानि सन्ति। अतोऽत्र पुस्तके तत्तदतिदेशसूत्राणां काशिकाग्रन्थांश: तत्र तत्र समुद्घृत:। विद्यापीठस्येदानीन्तना: प्राचार्या: व्याकरणतत्त्वज्ञा: संस्कृतहिते रता अमरवाणीं सेवमाना: प्रो. अर्कनाथचौधरीमहोदया धन्यवादपात्राणि सन्ति। येषां प्रेरणया सत्प्रयासेन च पुस्तकमिदं प्रकाशविषयतामानीतम्। अस्मिन् स्वीकृते कर्मणि मम पत्न्या: व्याकरणाचार्याया: सेवानिवृत्ताया: श्रीमत्युषारश्मिमिश्राया: पूर्णरूपेण सहयोगोऽवर्त्तत। अत: साऽपि धन्यवादार्हा। सकलतन्त्रतत्त्वज्ञानां सुरभारतीसमुपासकानामनवद्यविद्यानां कुलपतिपदमलङ्कुर्वतां श्रीमतां राधावल्लभत्रिपाठिमहोदयानां कृतेऽस्मिन्नवसरे सादरं धन्यवादं विज्ञापयामि।

**विद्वद्वशंवद:**
**रामरूपमिश्र:**

# ॥ भूमिका ॥

**पाणिनीयव्याकरणस्यातिशायित्वम् –** शास्त्रजन्यप्रकृतिप्रत्ययागमादिस्वरूपतदर्थतत्सम्बन्धज्ञानसाधकेषु वेदस्मृतिपुरोणोक्तपुरुषार्थचतुष्टयावाप्त्यर्थहानोपादानोद्दिष्टवाक्यार्थज्ञानजन्यात:करणवृत्तिसंस्कारविशेषनामरूपकरणकजगत्कर्मकप्रकाशरूपान्यतमव्युत्पत्त्याधायकेषु सत्स्वप्यनेकेष्वैन्द्रादिव्याकरणेषु तप:प्रसादितमहेश्वरानुकम्पाकम्पितप्रज्ञाविशेषप्रणीतत्वात् श्रुत्यात्मकमाहेश्वरसूत्रकदम्बावलम्बितत्वात् प्राङ्मुखमुपविशता शुचाववकाशे दर्भपवित्रपाणिनाऽऽचार्येण प्रामाणिकेन महता प्रयत्नेन विनिर्मितत्वाल्लौकिकवैदिकोभयविधशब्दानुशासनत्वात् प्रतिपदमुदात्तानुदात्तस्वरितानां स्वराणां शिक्षणत्वाद्वेदाङ्गत्वादनेकव्याकरणपर्यालोचनपूर्वकविरचितत्वादभ्यर्हिततत्वात् साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिरितिभर्तृहरिस्मृतत्वान्मुनित्रयसंमतत्वाद् व्याख्यानेन मुनिद्वयेन कात्यायनपतञ्जल्यभिधेयेनापमृष्टत्रुटिकत्वादर्धमात्रापर्यन्तशब्दलाघवदृशा विनिर्मितत्वान्नानालौकिकन्यायेष्वाश्रितत्वाद्विलक्षणनिर्माणकौशलकुशलत्वाच्च सर्वाण्यतिशेतेतरां नितरां पाणिनीयव्याकरणमिति नाप्रत्यक्षं प्रेक्षावताम्।

**सूत्रलक्षणम् –** इदञ्च व्याकरणं सूत्रात्मकम्। तत्रा ''ल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखमस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुरि''तिशिष्टोक्त्या सारवदल्पाक्षरत्वे सति, विश्वतोमुखत्वे सति स्तोभरहितत्वे च सति निश्चयात्मकज्ञानजनकवाक्यत्वमिति सूत्रलक्षणमवाप्यते। ''वर्णेनाऽप्यनर्थकेन न भवितव्यं किं पुनरियता सूत्रेण'', ''सामर्थ्ययोगान्न हि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्'' ''सूत्रं हि नाम तद् ध्वनति, भ्रमति, मुहूर्त्तमपि नावतिष्ठत'' इत्यादिवचोभि: पतञ्जलिनाऽपि समर्थ्यत एतत्।

**सूत्रषाड्विध्यम्** – तत्र "सञ्ज्ञा च परिभाषा च विधिर्नियम एव च। अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणमि" त्यभियुक्तोक्त्या सञ्ज्ञापरिभाषाविधिनियमातिदेशाधिकारशास्त्ररूपाणि षड्विधानि पाणिनीयसूत्राणि सन्तीति ज्ञायते।

**सञ्ज्ञासूत्रम्** – तत्र तावत्सञ्ज्ञाशास्त्रं नामाधुनिकशक्तिग्राहकम्। तच्च वृद्धिरादैजित्यादि। शब्दार्थयोस्तादात्म्यमभ्युपगच्छतां शाब्दिकानां मते यस्मिन् शब्दे यस्यार्थस्य तादात्म्यम्, तस्य तदर्थवाचकत्वमिति व्यवस्थासत्त्वाद् वृद्धिरादैजिति सूत्रेण वृद्धिशब्दे आदैच्तादात्म्यग्रहद्वारा तस्यादैज्वाचकता सिद्ध्यति। वृद्ध्यादेरादैच्तादात्म्यव्यवहारस्याधुनिकत्वाच्छक्तिराधुनिकी।

**परिभाषासूत्रम्** – परिभाषाशास्त्रत्वञ्च शास्त्रीयविषयतावृत्तिन्यूनवृत्तित्वाधिकवृत्तित्वान्यतरसम्पादकत्वम्। तथाहि "तस्मिन्नि"त्यादयः परिभाषा "निर्दिष्टे" "पूर्वस्ये"ति पदद्वयोपस्थापनेन "इको यणची" त्यादिशास्त्राणामच्त्वावच्छिन्नविषयत्वादौ न्यूनवृत्तित्वं सम्पाद्य "सुद्ध्युपास्य" इत्यादावुकारादावतिव्याप्तिमपाकरोति। "स्थानिवदादेशः" "यदागमा" इत्यादयस्तु आदेशादौ स्थानिधर्मादेरतिदेशसम्पादनेन "आङो यमहन" इत्यादिशास्त्रीयहन्त्वाद्यवच्छिन्नविषयतायामादेशीभूतवधादिवृत्तित्वप्रयोजकतयाऽधिकदेशवृत्तित्वं सम्पादयन्ति।

**विधिसूत्रम्** – विधिशास्त्रञ्चाबोधितार्थबोधकम्। यथे "को यणची"ति। अस्य हि निर्दिष्टेऽचि पूर्वस्येकः स्थानेऽन्तरतमो यण् प्रयोक्तव्यः स साधुरित्यर्थः। न च सञ्ज्ञाशास्त्रस्याप्यबोधितार्थबोधकतया तत्त्वमिति वाच्यम्, साक्षात्साधुत्वबोधकत्वे सत्यबोधितार्थबोधकमिति विधिलक्षणम्। सञ्ज्ञाशास्त्रञ्च न साक्षात्साधुत्वबोधकमिति न तत्रातिव्याप्तिः।

**नियमसूत्रम्** – नियमत्वञ्चान्यनिवृत्तिफलकसिद्धविषयकविधित्वम्। अर्थाद्यदीयमुद्देश्यं प्रकारान्तरेण सिद्धं तादृश आरभ्यमाणो विधिरेव नियमः। यथा समासस्य प्रातिपदिकसञ्ज्ञा "अर्थवदि"तिसूत्रसिद्धा, पुनः "कृत्तद्धिते"ति सूत्रे समासस्य प्रातिपदिकत्वसिद्धय आरभ्यमाणो विधिः नियमः। तत्र नियमशास्त्राणां विधिमुखेन



निषेधमुखेन वा प्रवृत्तिरिति भट्टोजिदीक्षितादयः। विधिमुखेनैव प्रवृत्तिरिति नागेशभट्टः। विधिमुखेन प्रवृत्तिसम्भवे तथैव प्रवृत्तिः, तदसम्भवे तु निषेधमुखेनेत्याधुनिकाः।

**अतिदेशसूत्रम्** – अतिदेशसूत्रलक्षणञ्च वतिप्रत्ययघटितत्वम्। यस्य सूत्रस्य घटकीभूतं पदं वतिप्रत्ययप्रकृतित्वेन गृहीतं भवति अथवा, विनापि वतिं वत्यर्थस्तत्र ज्ञातो भवेत्, तत्सूत्रमतिदेशसूत्रम्। यथा 'स्थानिवद्०' इति स्थानिवत्पदघटितमेवास्ते। 'असंयोगाल्लिट् कित्' 'गाङ्कुटादि०' इत्यादीनि द्वितीयस्योदाहरणानि, 'किद्वत्' 'ङिद्वदि'त्याद्यर्थकरणात्।

किञ्च, बाधज्ञानसमकालिकेच्छाजन्यज्ञानरूपाहार्य्यारोपबोधकत्वमतिदेशत्वम्। यथा 'रामाये'त्यत्र यादेशे सुप्त्वाभावेऽपि "यादेशः सुप्" इति ज्ञानं 'स्थानिवद'तिदेशसूत्रं बोधयति।

**सप्तधाऽतिदेशः** – तदाहार्यारोपश्च सप्तविधः – **निमित्तातिदेशो**, यथा 'पूर्ववत्सन' इत्यनेन प्रकृतिगतमेवानुदात्तेत्त्वम्, ङित्त्वम्, ञित्त्वं वा सन्नन्तेऽतिदिश्यते, तेन 'एदिधिषत' इत्यादावात्मनेपदं सिद्ध्यति। **व्यपदेशातिदेशो** यथा – 'आभ्यामि'त्यत्र "अ" रूपेऽङ्गे 'आद्यन्तवदेकस्मिन्नि' त्यनेनादन्ताङ्गत्वातिदेशः। **शास्त्रातिदेशो** यथा – "परिवीरि"त्यत्र व्येञ्धातोः क्विपि, तस्य लोपे, सम्प्रसारणे च शास्त्रातिदेशेन "ह्रस्वस्य पिति०" इति तुकं बाधित्वा "हल" इत्यनेन परत्वाद्दीर्घः। **रूपातिदेशो** यथा – "वतण्डाच्चे"ति यञि वतण्ड–स्यापत्यम् "वातण्ड्ये"ति। स्त्रियां "यञश्चे"ति ङीपि वातण्डी, सा चासौ वृन्दारिका च "वातण्ड्यवृन्दारिका" अत्र "पुंवत्कर्मधारय०" इत्यनेन पुंवाचक–वातण्ड्यरूपमतिदिश्यते। **तादात्म्यातिदेशो** यथा "द्रवत्पाणी शुभस्पती"त्यत्र "सुबामन्त्रिते पराङ्गवत्स्वर" इत्यनेन शुभ इति षष्ठ्यन्तस्य पतिशब्दतादात्म्यमतिदिश्यते। तादात्म्यं नाम तदङ्गता। तेन चा "मन्त्रितस्य चे"त्यनेन "शुभस्पती"ति समुदायस्यामन्त्रितत्वात् शकारोकारस्याद्युदात्तत्वं सिध्यति। **कार्याति**–

**देशो** यथा – ''गोतो णिदि''त्यनेन णिति वृद्धिरूपं यत्कार्य्यं तदतिदिश्यते। तेन ''गौः'' ''गावा'' वित्यादि सिध्यति। **अर्थातिदेशो** यथा – ''जात्याख्यायामि''त्यनेनैकत्वविशिष्टेऽर्थे बहुत्वरूपार्थातिदेशः। तेन विशेषणानां विशेष्यार्थगतसंख्याबोधकत्वात्ततोऽपि ''ब्राह्मणाः पूज्या'' इत्यत्र बहुवचनम्।

**अधिकारसूत्रम्** – अधिकारत्वञ्च स्वदेशे शाब्दबोधाजनकत्वे सति स्वरितत्वनामकदोषविशेषवद्वर्णयुक्तत्वम्। ''स्त्रीभ्यो ढगि''त्यत्र स्वरितवत्त्वेऽपि स्वदेशे वाक्यार्थबोधकत्वेनातिव्याप्तेरभावः। एवञ्च ''ख्यत्यादि''त्यादौ क्रमिकान्वयसूचकस्वरितयुक्तत्वेऽपि शाब्दबोधजनकतयैवातिव्याप्त्यभावः।

**विवेच्यसूत्राणि** – पुस्तकेऽस्मिन् दशातिदेशसूत्राणामधोलिखितानां महाभाष्यपङ्क्तिरण्यारूढेन पण्डितरामरूपमिश्रेण भूयान् विमर्शः प्रास्तावि। तानि सन्ति सूत्राणि – १. आद्यन्तवदेकस्मिन्, २. स्थानिवदादेशोऽनल्विधौ, ३. अचः परस्मिन् पूर्वविधौ, ४. न पदान्तद्विर्वचन०, ५. द्विर्वचनेऽचि, ६. प्रत्ययलोपे प्रत्ययलक्षणम्, ७. न लुमताङ्गस्य, ८. अन्तादिवच्च, ९. असिद्धवदत्राभात्, १०. पूर्वत्रासिद्धमिति चेति।

**विवेच्यसूत्राणां प्रतिपाद्यविषयाः** – महाभाष्यमनुसृत्योपर्युक्तविवेच्यसूत्राणां प्रतिपाद्यविषया उद्देध्रीयन्ते। तत्र प्रथमन्तावत् – **१. ''आद्यन्तवदेकस्मिन्'' १।१।२१ इति।**

क. सूत्रप्रयोजननिरूपणम्,

ख. आद्यन्तवदेकस्मिन्नितिस्थाने व्यपदेशिवदेकस्मिन्निति परिभाषास्वीकारः,

ग. लोकतः सिद्धेः द्वयोः खण्डनम्,

घ. ग्रामशब्दस्य विविधार्थकत्वम्,

ङ. वार्त्तिककारादतिरिच्याद्यन्तयोर्विलक्षणं लक्षणं विदधतो महाभाष्यकृतः सूत्रस्वीकारः,

च. आद्यन्तवद्भावस्य सकलप्रयोजनप्रतिपादनम्।



**२. ''स्थानिवदादेशोऽनल्विधौ'' १।१।५६ इति।**

क. सूत्रपदकृत्यप्रदर्शनम्,

ख. शास्त्रीयज्ञापकमाश्रित्य सूत्रखण्डनम्,

ग. अनल्विधिग्रहणस्य प्रयोजनानि,

घ. सामान्यातिदेशे विशेषातिदेशसिद्धिः,

ङ. स्थानिसम्बन्ध्यल्विधावेव स्थानिवद्भावनिषेधो न त्वादेशसम्बन्ध्यल्विधौ,

च. नित्यशब्दवादे बुद्धिविपरिणाममात्रस्य स्थानिवद्भावत्वम्,

छ. स्थानिवत्सूत्रदोषान् प्रदर्श्य तेषां समाधानानि।

**३. ''अचः परस्मिन्पूर्वविधौ'' १।१।५७ इति।**

क. सूत्रपदकृत्यप्रदर्शनपूर्वकविधिग्रहणप्रयोजनम्,

ख. पूर्वविधिशब्दे पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासस्यापि स्वीकृतिपूर्वकं प्रयोजनम्,

ग. आदेशस्येव निमित्तात्पूर्वोऽपि विधिः पूर्वविधिरिति मत्वा स्वविधावपरविधौ वा स्थानिवद्भावप्रयोजनानामन्यथासिद्धिः,

घ. विधिशब्दस्य भावसाधनकर्मसाधनोभयत्वम्,

ङ. लोकव्यवहारतोऽसिद्धं बहिरङ्गमन्तरङ्ग इति परिभाषास्वीकारः,

च. वैयाकरणः, सौवश्व इत्यादौ स्थानिवद्भावाऽभावः,

छ. 'असिद्धवचनात्सिद्धमि'ति वार्त्तिकखण्डनम्, सूत्रेणानेन भावाभावातिदेशोभयसिद्धिः,

ज. स्थान्यादेशयोरव्यवहिताऽव्यवहितसाधारणे पूर्वमात्रविधौ स्थानिवद्भाव:,

झ. शास्त्रीयेऽशास्त्रीये च कार्ये स्थानिवद्भावसिद्धान्त:।

**४. "न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु" १। १। ५८ इति।**

क. विधिशब्दस्य भावकर्मसाधनताया गुणदोषा:,

ख. वरेयलोपविधावित्यत्र वरेऽयलोपविधिरिति प्रश्लेषानुसारं वरपरेऽवर्णयलोपविधाने स्थानिवद्भावनिषेध:,

ग. स्वरदीर्घयलोपविधिषु लोपरूपाजादेश एव स्थानिवद्भावनिषेधो न तु लोपभिन्नेऽजादेशे,

घ. क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्सेषूपसंख्यानम्' इति वाक्यस्य सोदाहरणं व्याख्यानम्,

ङ. 'पूर्वत्रासिद्धे न स्थानिवदि'ति वार्त्तिकस्य सोदाहरणव्याख्यानपूर्वकं तदपवादभूतस्य "तस्य दोष: संयोगादिलोपलत्वणत्वेष्वि"ति वार्त्तिकस्य स्वीकरणम्।

**५. "द्विर्वचनेऽचि" १। १। ५९ इति।**

क. सूत्रेणानेन स्थानिवद्भावे कार्यातिदेशममत्वा रूपातिदेशस्वीकरणम्,

ख. द्विर्वचनशब्द एकशेषं मत्वाऽर्थद्वयं स्वीकृत्य "कृत्येजन्तदिवादिनामधातुष्वभ्यासरूपमि"ति वार्त्तिकखण्डनम्,

ग. "ओ: पुयण्ज्यपरे" इति ज्ञापकाद् णिचोऽपि द्वित्वस्य निमित्तत्वं स्वीकृत्य स्थानिवद्भावस्य तत्परत्वम्,

घ. सूत्रप्रयोजनं प्रदर्श्य "द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्य" इत्यनेन सूत्रस्यास्यान्यथासिद्धत्व-



खण्डनम्, ततश्च पूर्वविप्रतिषेधवचनापेक्षया स्थानिवद्विधायकस्य सूत्रस्यैवोचिततरत्वप्रतिपादनम्।

**६. "प्रत्ययलोपे प्रत्ययलक्षणम्" १। १। ६२ इति।**

क. अन्यथासिद्धे: प्रथमप्रत्ययग्रहणखण्डनम्, द्वितीयप्रत्ययग्रहणस्वीकरणञ्च,

ख. सूत्रस्य सामान्यप्रयोजनमभिधाय "लुक्युपसंख्यानमि"ति वार्त्तिकखण्डनम्,

ग. प्राप्तदोषान् परिमार्जितुं "स्थानिसञ्ज्ञान्यभूतस्यानल्विधा" विति न्यस्य तत्खण्डनम्, वर्णाश्रयेऽपि प्रत्ययलक्षणनिषेधस्वीकरणम्,

घ. स्थानिवद्भावेनान्यथासिद्धिं प्रदर्श्य सूत्रस्य नियमार्थत्वं प्रतिपाद्य प्रत्ययस्यासाधारणरूप आश्रीयमाण एव प्रत्ययलक्षणमिति प्रतिपादनम्।

**७. "न लुमताङ्गस्य" १। १। ६३ इति।**

क. यथास्थितसूत्रे दोषान् समाधातुं "न लुमता तस्मिन्नि"ति न्यास:,

ख. "उत्तरपदत्वे चापदादिविधौ" वार्त्तिकव्याख्यानम्,

ग. उक्तन्यासस्य च खण्डनम्।

**८. "अन्तादिवच्च" ६। १। ८५ इति।**

क. स्थानिवत्सूत्रेण पूर्वपरसमुदायवृत्तिधर्मस्यातिदेश:, पूर्वं परञ्चातिदेष्टुं सूत्रमिदम्,

ख. पूर्वपरयोरित्यधिकारात् पूर्वस्य कार्यं प्रत्यन्तवत्, परस्य कार्यं प्रत्यादिवद् भवति,

ग. लोकदृष्टान्ताद् "उभयत आश्रयणे नान्तादिवदि"ति वचनस्यावक्तव्यता,

घ. अन्तवत्त्वप्रयोजनानि,

ङ. आदिवत्त्वप्रयोजनानि,

च. एकादेशस्यान्तरङ्गत्वबोधनम्, तत्र च दोषं प्रदर्श्य परिमार्जनम्,

छ. अन्तादिवद्भावनिषेधस्थलानि प्रदर्श्य ''न वाऽताद्रूप्यातिदेशादि'' त्यनेन निषेधवार्त्तिकप्रत्याख्यानम्।

**९. ''असिद्धवदत्राभात्'' ६।४।२२ इति।**

क. पदकृत्यप्रदर्शनपूर्वकं सूत्रप्रयोजननिरूपणम्, सूत्रासत्त्वे च दोषप्रतिपादनम्, तद्दोषवारणञ्च,

ख. ''वुग्युटावुवङ्यणोः सिद्धौ वक्तव्या''विति वार्त्तिकव्याख्यानम्,

ग. ''आभादि''त्यत्राऽऽङो मर्यादार्थकत्वाऽभिविध्यर्थकत्वप्रदर्शनम्, तत्रत्यदोषापाकरणञ्च।

**१०. ''पूर्वत्रासिद्धम्'' ८।२।१ इति।**

क. अत्र शास्त्राद्धित्वमाश्रीयते न तु कार्याद्धित्वमिति प्रतिपादनम्,

ख. सपादायां सप्ताध्याय्यामयं पादोनोऽध्यायोऽसिद्ध' इत्युक्तौ दोषप्रदर्शनम्, संज्ञापरिभाषस्य च कार्यकालपक्षेण तत्समाधानम्,

ग. पूर्वत्रासिद्धे विप्रतिषेधाभावस्य सकारणं निरूपणम्,

घ. ''पूर्वत्रासिद्धमि''त्यस्याधिकारत्वे प्रयोजनम्, तदनधिकारत्वे च दोषप्रसङ्गः,

ङ. असिद्धवचनप्रयोजननिरूपणम्।

**ग्रन्थप्रणेतुः परिचयः –**

भारतवर्षस्य मध्येदेशं मध्यप्रदेशप्रान्तान्तर्गतपन्नानाममण्डलावस्थितो गुनौरतहसीलस्थितो लुहरगाँवपत्रालयवर्ती सिठौलीनामको ग्रामो विलसति। तत्र



नभोवेदरत्नभूमिते १९४० खृष्टाब्दे व्याकरणदर्शनादिशास्त्रतत्त्वाववोधानुगुणं संस्कारं बिभ्रद्रामरूपमिश्रो विद्याविनयतपःसम्पन्ने विप्रकुले कुलालङ्कारभूतोऽजनिष्टा असावनन्तीदेव्या गर्भजः पण्डितप्रवरस्य व्रजभूषणमिश्रस्य पुत्रः। ''शाब्दबोधव्युत्पन्ना एव विद्वांसः शास्त्रीयव्यवसाये भवन्ति पटीयांस'' इति निश्चित्य बाल्ये स्वगृह एव शास्त्रे विहितप्रवेशः पश्चादन्नपूर्णाविश्वनाथयोः साक्षाद्विग्रहगृहे गाङ्गपयःपावितभूम्यां वाराणस्यां तदर्थमानुकूल्यमाकलय्य न्यवात्सीत्। तदानीं वैयाकरणविद्वद्व्राताग्रणीभ्यः पण्डितभूपनारायणझा–शुकदेवझा–कालिकाप्रसादशुक्लेभ्यो व्याकरणादिप्रौढग्रन्थानध्यगीष्ट। स्वाध्ययनकाल एव निरन्तरशास्त्रानुशीलननिरतोऽसौ नवनवार्थनिरूपणनैपुण्येन तत्रत्यगुणिजनहृदयमावर्ज्य विद्वद्गोष्ठ्यां गरिष्ठां प्रतिष्ठामलब्ध।

**अध्यापनम् –**

''ज्ञानं भारः क्रियां विने''ति विभाव्य मिश्रचरणो देहलीस्थे श्रीविश्वनाथ–संस्कृतमहाविद्यालये, श्रीविश्वसंस्कृतविद्यापीठे च, हरियाणास्थे श्रीहरियाणा–संस्कृतविद्यापीठे, ओडीसास्थे श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठे चाष्टादश–वर्षाण्यगणितच्छात्रानध्यापिपत्, तत्र तत्र चानितरसाधारणीमध्यापनपद्धतिमुपा–तिष्ठिपत्।

**प्रशासनम् –**

पठनपाठनपरम्परामग्रेसारयितुमध्यापनमतिरिच्य प्रशासनस्यापि बोभवीति महत्त्वमिति हृदि निधायायं १९८८ खीष्टाब्दतः २००० खीष्टाब्दस्य मार्चमासं यावच्छ्रीमुम्बादेवी आदर्शसंस्कृतमहाविद्यालये मुम्बईस्थभारतीयविद्याभवने प्राचार्यपदवीं विभूष्यादर्शप्रशासनपरिपाटीं काञ्चिदाविश्चकार।

**प्रकाशनम् –**

प्राचीनां गुरुशिष्यपरम्परामविचलमसौ श्रद्दधदध्यापनमेव निजजीवनस्य परमं लक्ष्यं विदधद्यद्यपि प्रकाशनकर्मण्याधुनिकविदुषामिव न श्रद्धात्तथापि

संविद्वाण्डीवादिषु प्रतिष्ठितपत्रिकासु काले काले नैकानि शोधपत्राणि प्राकाश्यं गतान्यदसीयं पाण्डित्यं प्रामासत। "पातञ्जलमहाभाष्ये दर्शनान्तरीयतत्त्वविचार" इतिशीर्षकमनुसृत्य विद्यावारिधि (पी-एच्० डी०)रित्युपाधयेऽनुसन्धाय शोधप्रबन्धं सपरिणामं पुरस्कृत्य च स्वं व्याकरणतन्त्रातिरिक्ततन्त्रस्वातन्त्र्यं प्रास्तोष्ट।

**पुरस्कारः –**

"सत्त्वमनुधावति सकलमि"ति कृत्वा भारतवर्षस्य प्रतिष्ठितः शास्त्रार्थ-पुरस्कारः श्रीशङ्कराचार्यशृङ्गेरीमठेन द्विरस्मै विदुषे १९८३ मिते १९९३ मिते च वर्षे व्यतारि।

**वर्त्तमानं जीवनम् –**

२००० तमे वर्षे सर्वकारीयसेवातोऽयं न्यवर्तिष्ट। ततो नवदेहलीस्थ-राष्ट्रियसंस्कृतसंस्थानं क.जे. सोमैयासंस्कृतविद्यापीठे वर्षद्वयस्य कृते शास्त्रचूडा-मणिपदे विद्वांसममुं प्रत्यतिष्ठिपत्। तदवधावेवास्य ग्रन्थस्य निर्माणमनेनाऽकारि। इदानीमसौ महाराष्ट्रराज्यराजधान्यां स्वस्वामित्ववद्गृहे सांसारिकं समग्रोत्तरदायित्वं सफलं निभाल्य वेदोपनिषद्वेदान्तान्तस्तत्त्वपरिशीलनपरो वार्धक्येऽपि समागत-शास्त्रबुभुत्सावद्भ्यो विद्याऽमृतवितरणशीलो राराजीति।

**प्रकृतग्रन्थस्य वैशिष्ट्यम् –**

महर्षिपाणिनेः सूत्राणां सत्यप्यसन्दिग्धत्वे विश्वतोमुखत्वानवद्यत्वकारणात् आ पाणिनिकालादद्य यावत्कात्यायनपतञ्जलिभर्तृहरिकैयटवामनजयादित्यदीक्षित-नागेशप्रभृतिभिराधुनिकमनीषिभिश्च घृतमिव पयसि निगूढं सूत्रविज्ञानमनुसन्धि-त्सुभिरात्मनीना लेखनी व्यापार्यते। तत्क्रम एव पण्डितरामरूपमिश्रमहाभागोऽपि समाधुनिकच्छात्राध्यापकानामतिदेशसूत्रपाशाबद्धताप्रयुक्तव्याकुलतामुपकलय्या-कुलीभूतचेता भाष्याब्धिं स्वशेमुषीप्रमथिन्या प्रमथ्य ग्रन्थग्रन्थिविभेदनप्रवणचातुरी-चतुरोऽतिदुरूहविषयगाम्भीर्यसत्त्वेऽपि सरलताशालिनमल्पावधानेनान्तेवासिहृदयं भूषयत् प्राध्यापकांश्च प्रसादयदतिदेशसूत्रव्याख्यानं व्यातानीत्। तदत्र किञ्चिद्वैशिष्ट्यं ग्रन्थस्यास्य प्रतुष्टूषामि –



१. ग्रन्थादौ सूत्राणां सामान्यमर्थं प्रयोजनं प्रत्युदाहरणं चाध्येतृणां सम्मुखं मुखयितुं प्रत्यतिदेशसूत्रं काशिकाऽत्र काशते।

२. कात्यायनस्य वार्त्तिकानि पतञ्जलेश्च व्याख्यानान्यविकलानि समुप-न्यस्य तदीयार्थतत्त्वं निपुणं विमृश्यते।

३. प्रक्रियासिद्धौ व्यक्तिप्रतिभाऽप्यकिञ्चित्करीति मत्वा सम्बद्धभाष्ये समागतसमस्तप्रक्रियाणां शिष्योपदेशसरण्या सिद्धिरत्र सूत्रप्रदर्शनसहिता विलसति।

४. "अत्रायं भावः" "अत्रेदं तात्पर्य्यम्" "अत्रेदं रहस्यम्" "अयमाशय" इत्यादिशीर्षकेण कैयटनागेशयोः प्रदीपः प्रदीपयति, उद्द्योतश्चो-द्द्योतयति, यतः पाठकानां शोभना धीरुदयते।

५. क्वचिद् "वस्तुतस्त्वि"ति कृत्वा टिप्पणीविशेषेण च विवेच्य विषयं चिन्तनपराकाष्ठां नीयते।

६. प्रक्रियाजगतः सुचर्चितानि दशातिदेशसूत्राण्यत्र प्रकामं विमृष्टानि।

एतादृशं वैशिष्ट्यं पाठकाः पुस्तकस्यास्य पठनपाठने प्रतिपदमनुभूयासुरिति विश्वसिमि।

**कृतज्ञताज्ञापनम् –**

सप्ततेः समाभ्योऽप्यधिके वयसि विद्याव्यसनिना वैयाकरणभूषणेन पण्डितरामरूपमिश्रेणच्छात्राध्यापकगवेषकहितसाधनासिद्धेनातिदेशसूत्रव्याख्याना-भिधेयग्रन्थं निर्माय विद्यापीठीयां प्रतिष्ठां समेधयितुं प्रकाशनायात्रार्पितं निजपुस्तकम्, तदर्थं धन्यवादवाक्सुमनांसि तस्मै समर्प्य तदीयं शतायुष्टं कामये। राष्ट्रियसंस्कृत-संस्थानमानितविश्वविद्यालयस्य सम्मानिताः कुलपतयो विश्वविश्रुतयशसो राधा-वल्लभवल्लभमानप्रतिष्ठाः प्रोफेसरराधावल्लभत्रिपाठिमहोदया विद्यापीठीयप्रकाशनरूपे प्रकाशयितुं ग्रन्थममुमन्वमन्यन्तैतदर्थं स्वपक्षतः परिसरपक्षतश्च धन्यवादैस्तान् पिपर्मि। क.जे.सोमैयासंस्कृतविद्यापीठस्याऽऽद्यपुरुषा विद्याविनययोः प्राणवद्विग्रहाः प्रोफेसरप्रकाशचन्द्रमहाशया लेखकमिश्रमहोदयं सन्ततं लेखनीं व्यापारयितुं

प्रेरयन्तः, पुस्तकं प्रकाशयितुं समग्रामौपचारिकतां सम्पाद्य व्याकरणमधिजिगांसमानेभ्यः पुस्तकं पुरस्कर्तुं यत्सहयोगं व्यदधुस्तत्स्मारं स्मारं तेभ्यः कार्तज्ञं बिभर्मि। विद्यापीठस्यास्य सञ्चितसञ्चीयमानपुण्यपुञ्जप्रभावप्रयोज्याऽऽसीनप्राचार्यपदाः स्वौजस्वित्वेन यूनोऽपि लज्जयन्तोऽहर्निशं विद्यापीठश्रियं विवर्धयितुं सज्जयन्तो मान्याः प्रोफेसरार्कनाथचौधरीमहाशया ग्रन्थस्यास्य प्रकाशनपथे समापतितविघ्नव्यूहमुपशमय्य विश्वसंस्कृतसम्मेलनस्य सुप्रतिष्ठितमञ्चे पुस्तकस्यास्य लोकार्पणाय सौविध्यं प्रदाय प्रधानसम्पादकत्वञ्च सकुशलं न्यभालयन्, तदेतदर्थं कार्तज्ञं विज्ञपयामि। समग्रस्य मुण्ड्यक्षरसमन्वितस्य पुस्तकस्यास्याङ्क्षेक्षणाक्षरसंयोजनं विदधते तत्रत्यपाटवपरिपुष्टमतये श्रीवामदेवमिश्राभिधेयाय परिश्रमिणे च साधुवादं वितरामि, निवेदयामि चाऽत्र सम्पादनकर्मणि जातत्रुटये क्षन्तुं परिशीलनपरान् सज्जनानिति शम्।

**सम्पादको**

**बोधकुमारझाः**

# विषयसूची

***

॥ श्रीः ॥

## मङ्गलाचरणम्

नत्वा गणेशपादाब्जं, सर्वदां भारती तथा।
कालिकादिगुरुन् वन्दे, काश्यां विद्यारतांस्तथा॥ १॥

चरकं योगसूत्रं च, महाभाष्यं विरच्य च।
शरीरचित्तवाचां यः, कृतवान् मलशोधनम्॥ २॥

शब्दार्थकल्पवृक्षं तद्, महाभाष्यं विरच्य च।
नौमि शेषावतारं तम्, भगवन्तं पतञ्जलिम्॥ ३॥

प्रदीपोद्योतकर्त्तारौ, वन्दनीयौ सदा मम।
शब्दतत्त्वज्ञराजर्षि, बुधो भर्त्तृहरिस्तथा॥ ४॥

रामरूपेति विख्यातः, मिश्रोपाधियुतस्तथा।
भाष्येऽतिदेशसूत्राणि, व्याख्यामि सुधियां मुदे॥ ५॥

### ॥ आद्यन्तवदेकस्मिन्॥ १। १। २१॥

अत्र **''काशिकावृत्तिः''** –

**असहायस्य आद्यन्तोपदिष्टानि कार्याणि न सिद्ध्यन्तीत्ययमतिदेश आरभ्यते। सप्तम्यर्थे वतिः। आदाविव अन्त इव एकस्मिन्नपि कार्यं भवति। यथा – कर्त्तव्यमित्यत्र प्रत्ययाद्युदात्तं भवति। एवमौपगवमित्यत्रापि यथा स्यात्। यथा वृक्षाभ्यामित्यत्रातोऽङ्गस्य दीर्घत्वमेवमाभ्यामित्यत्रापि यथा स्यात्। एकस्मिन्निति किम्? सभासन्नयने भवः साभासन्नयनः। आकार-माश्रित्य वृद्धसंज्ञा न भवति।**

**विवरणम् –** एकस्मिन्नित्यत्रोपमेयबोधके सप्तम्या निर्देशात् उपमान-वाचकादाद्यन्तशब्दात् ''तत्र तस्येव'' इति सप्तम्यर्थे वतिः। आदिश्चान्तश्चेति

द्वन्द्वे, आद्यन्तयोरिवेति आद्यन्तवत्। द्वन्द्वान्ते श्रूयमाणस्य वतेरुभयत्रान्वयः। उपमेयोपमानयोर्द्वयोरुपमानप्रकारकोपमेयविशेष्यकशाब्दबोधे समानवचनकत्वनियमात्। एकस्मिन्नित्यत्रैकशब्दोऽसहायवाची। आद्यन्तवदित्यत्रादिशब्दः सत्यन्यस्मिन् यस्य पूर्वो नास्ति सः। अन्तशब्दश्च स सत्यन्यस्मिन् यस्य परो नास्ति। अत आद्यन्तशब्दयोरसहाये प्रयोगासम्भवात् तदादितदन्तयोः क्रियमाणानि कार्याणि तदादौ इव तदन्त इव चासहायेऽपि स्युरिति भगवता पाणिनिनेदं सूत्रमारब्धम्। तेनौपगवः, आभ्याम् इत्यादयः प्रयोगाः सिद्ध्यन्ति। तथाहि – उपगोः अपत्यम् औपगवः इत्यत्र (उपगु अस् अण् (अ)) अणोऽकारस्यासहायस्य आद्युदात्तश्च (३। १। ३) इत्याद्युदात्तत्वं न प्राप्नोति। आद्यन्तेति सूत्रेणाद्युदात्तस्वरोऽकारस्य भवति।

एवम् ''आभ्यामित्यत्र'' (इदम् भ्याम्) अत्त्वे पररूपे 'हलि लोपः' (७। २। ११३) इतीद्भागस्य लोपे 'सुपि च' (७। ३। १०२) इति दीर्घो न प्राप्नोति अकारस्य अदन्तत्वाभावात्। आद्यन्तेति सूत्रेण दीर्घोऽसहायेऽपि भवति।

षड्विधानि सन्त्यतिदेशसूत्राणि – रूप-निमित्त-तादात्म्य-शास्त्र-व्यपदेश-कार्यातिदेशश्चेति। तत्रैतेषां कतमत् ''आद्यन्तवदेकस्मिन्'' इति सूत्रम्? उच्यते – कैयटनागेशयोर्मते कार्यातिदेशत्वमेवास्य सूत्रस्य। ''सर्वातिदेशानां कार्यातिदेशस्य प्राधान्यात् तस्यैवेहाश्रयणमिति कैयटः'' 'सर्वेषां कार्यार्थत्वादिति भावः' इति तत्रैव नागेशः। एतेषामुदाहरणानीत्थम् – रूपातिदेशस्य यथा – तृज्वत्क्रोष्टुः। निमित्तातिदेशस्य यथा – ''पूर्ववत् सनः''। तादात्म्यातिदेशस्य यथा – ''सुबामन्त्रिते पराङ्गवत्स्वरे''। शास्त्रातिदेशस्य यथा – ''कर्मवत् कर्मणा तुल्यक्रियः''। व्यपदेशातिदेशस्य यथा – आद्यन्तवदेकस्मिन्निति। किन्त्विदं चिन्त्यम्, महाभाष्यविरोधात्। अस्मिन्नेव सूत्रे भाष्यकारैः बहुत्र 'कार्याणि' ''कार्यं वे''ति कृतप्रयोगत्वात्। कार्यातिदेशस्य यथा – ''गोतो णित्''।

**''म० भा० – किमर्थमिदमुच्यते?''**

**''सत्यन्यस्मिन्नाद्यन्तवद्भावादेकस्मिन्नाद्यन्तवद्ववचनम्''॥ १॥**
**सत्यन्यस्मिन् यस्मात् पूर्वं नास्ति परमस्ति स आदिरित्युच्यते। सत्यन्यस्मिन् यस्मात् परं नास्ति पूर्वमस्ति सोऽन्त इत्युच्यते। सत्यन्यस्मिन्नाद्यन्तवद्भावात्,**



**एतस्मात् कारणादेकस्मिन्नाद्यन्तापदिष्टानि कार्याणि न सिद्ध्यन्ति। इष्यन्ते च स्युरिति। तान्यन्तरेण यत्नं न सिद्ध्यन्तीत्येकस्मिन्नाद्यन्तवद्वचनम्। एवमर्थमिदमुच्यते। अस्तिप्रयोजनमेतत्? किं तर्हीति''।**

**इदं तात्पर्यम्** – किमर्थमितिपदेन सूत्रप्रयोजनं पृच्छति। तदुत्तरं वार्तिके प्रस्तूयते। यस्मात् पूर्वं नास्ति परं चास्ति स आदिर्भवति। एवं च यस्मात् परं नास्ति पूर्वं च विद्यते सोऽन्त इत्युच्यते। अन्यस्मिन् सति आद्यन्तवद्भावात् एकस्मिन् असहाये आद्यन्तप्रयुक्तानि कार्याणि न सिद्ध्यन्ति। इष्यन्ते च तानि कार्याणि। तानि यत्नं विना न सिद्ध्यन्ति तदर्थमाद्यन्तवद्वचनमस्ति। एवंप्रयोजनकमिदं सूत्रमस्ति। किम् वर्तत एतत्प्रयोजनम्? अस्ति।

**म० भा० ''तत्र व्यपदेशिवद्वचनम्''॥ २॥**

**तत्र व्यपदेशिवद् वक्तव्यः। व्यपदेशिवत् कार्यं भवतीति वक्तव्यम्। किं प्रयोजनम्?**

**इदं तात्पर्यमस्ति** – यत्राद्यन्तपदघटितानि सूत्राणि तत्रैवैतस्य प्रवृत्तिः स्यात्। यथा – आद्युदात्तश्च सुपि च इत्यादिषु प्रवृत्तिर्भवेदस्य सूत्रस्य। यत्राद्यन्तपदानपदिष्टानि तत्रास्य प्रवृत्तिर्नस्यात्। यथा – ''एकाचो द्वे प्रथमस्येत्यादिवक्ष्यमाणेषूदाहरणेषु।'' अत एव कैयटोऽपि लिखति – सर्वकार्यसिद्ध्यर्थं व्यापकं कर्त्तव्यमित्यर्थः।

तत्र व्यपदेशो मुख्यव्यवहारः। निमित्तसद्भावाद् मुख्यो व्यपदेशोऽस्यास्तीति व्यपदेशी। व्यपदेशिना तुल्यं व्यपदेशिववत्। यत्र व्यपदेशनिमित्ताभावेन अव्यपदेशो भवति स व्यपदेशिवद् भवतीत्यर्थः सम्पद्यते।

इदानीमस्य प्रयोजनानि –

**म० भा० ''एकाचो द्वे प्रथमस्य''॥ ३॥**

**वक्ष्यति – एकाचो द्वे प्रथमस्येति बहुव्रीहिनिर्देश इति। तस्मिन् क्रियमाणे इहैव स्यात् – पपाच पपाठ, इयाय, आर इत्यत्र न स्यात्। व्यपदेशिवदेकस्मिन् कार्यं भवतीत्यत्रापि सिद्धं भवति।**

**अयं भावः** – एकाचो द्वे प्रथमस्येतिसूत्रे एकाच् इत्यत्र बहुव्रीहिसमासे (एकोऽज्यस्य स एकाच्) पपाठ पपाच इत्यत्र पच्पठ्धातोर्लिटि तिपि णलि (पच् अ, पठ् अ इत्यत्र) बहुव्रीहिसमासस्यान्यपदार्थः पच् पठ् धातुश्च भवति। तत्र द्वित्वादिकार्ये पपाच पपाठ इत्यादिरूपाणि सिद्ध्यन्ति। किन्तु इयाय आर इत्यत्र द्वित्वं न स्यात्। असहाये इण् ऋ धातुभ्यां द्वित्वं न प्राप्नोति। व्यपदेशिवदेकस्मिन् इति परिभाषया वचनेन वा केवलेऽपि मुख्यव्यवहारो भवति।

**म० भा० "षत्वे चादेशसम्प्रत्ययार्थम्"॥ ४॥**

**वक्ष्यति – "आदेशप्रत्यययोरित्यवयवषष्ठ्येषेति। एतस्मिन् क्रियमाणे इहैव स्यात् - करिष्यति हरिष्यति। इह न स्यात् – "इन्द्रो मा वक्षत्" "स देवान् यक्षत्"। व्यपदेशिवदेकस्मिन् कार्यं भवतीत्यत्रापि सिद्धं भवति।"**

**अयं भावः** – एकाऽपि षष्ठी विषयभेदात् भिद्यते। यथा – आदेशप्रत्यययोरित्यत्र प्रत्ययाऽवयवबोधिका षष्ठी विद्यते। आदेश इत्यत्र स्थानबोधिका षष्ठी विद्यते। एतेन यत्र प्रत्ययावयवो भवति तत्र षत्वं भवति। यथा – करिष्यति हरिष्यति। अत्र प्रत्ययः स्य, तस्यावयवः सकारः, तत्रैव मूर्धन्यषकारो भविष्यति। यत्र प्रत्ययमात्रसकारो भवति तत्र मूर्धन्यषकारो न भवति। यथा – 'इन्द्रो मावक्षत्' इति वाक्ये वक्षत् वचः लुङि तिपि सिचि अडागमे च कृते अनुबन्धलोपे (वच् स् त्) चकारस्य कुत्वे प्रत्ययरूपस्य सकारस्य प्रत्ययावयवत्वाभावात् षत्वं न प्राप्नोति। व्यपदेशिवदेकस्मिन् कार्यं भवतीत्यत्रापि सिद्धं भवति।

**म० भा० "स तर्हि व्यपदेशिवद् वक्तव्यः? न वक्तव्यः। अवचनाल्लोकविज्ञानात् सिद्धम्"॥ ५॥**

**अन्तरेणैव वचनं लोकविज्ञानात् सिद्धमेतत्। तद्यथा – लोके शालासमुदायो ग्रामः इत्युच्यते। भवति चैतदेकस्मिन्नपि - 'एकशालो ग्रामः' इति। विषम उपन्यासः। ग्रामशब्दोऽयं बह्वर्थः। अस्त्येव शालासमुदाये वर्तते। तद्यथा – 'ग्रामो दग्धः' इति। अस्ति वाटपरिक्षेपे वर्तते। तद्यथा – 'ग्रामं प्रविष्टः' इति। अस्ति च मुनष्येषु वर्तते। तद्यथा – 'ग्रामो गतो' 'ग्राम आगतः' इति। अस्ति सारण्यके ससीमके सस्थण्डिलके वर्तते। तद्यथा – 'ग्रामो लब्धः' इति। तद्यः सारण्यके ससीमके सस्थण्डिलके वर्तते, तमभिसमीक्ष्यैतत् प्रयुज्यते – 'एकशालो ग्रामः' इति॥**



**अयं भावः** – व्यपदेशिवद्भावस्य प्रयोजनद्वयमभिधाय पृच्छति व्यपदेशिवद्भावः कर्त्तव्यः? उत्तरति न कर्त्तव्यः।

वचनस्याभावोऽवचनम् तस्मादवचनात् अर्थात् वचनं विनैव लक्ष्याणि सेत्स्यन्ति। कथम्? लोकव्यवहारात्। यथा – शालानां समूहो 'ग्रामः' इत्युच्यते लोके। किन्तु लोके एकशालाकेऽपि "एकशालो ग्रामः" इति प्रयोगो भवति।

ग्रामस्योदाहरणं समीचीनं नास्ति। यतो हि ग्रामशब्दस्य बहवोऽर्थाः सन्ति। शालासमुदाये ग्रामशब्दस्य प्रयोगो भवति, यथा – ग्रामो दग्धः इति। वाटपरिक्षेपेऽपि ग्रामशब्दस्य प्रयोगो भवति। वाटपरिक्षेपस्य तात्पर्यं क्षेत्रपरिच्छित्तिः।

मनुष्येष्वपि भवति ग्रामशब्दस्य प्रयोगः। यथा ग्रामं जिगमिषुः ग्रामादागतं विलोक्य कथयति 'ग्राम आगतः' इति। यदि च कश्चन ग्रामात् किञ्चिद्दूरंगतो मनुष्यमपश्यन् 'ग्रामो गतः' इति व्यवहरति। अरण्ये क्षेत्रे सीम्नि चिह्नविशेपेऽपि स्थिते एकस्मिन् गृहे भवति प्रयोग 'एकशालो ग्रामः' इति।

**म० भा० "यथा तर्हि वर्णसमुदायः पदम्। पदसमुदाय ऋक्। ऋक्समुदायः सूक्तमित्युच्यते। भवति चैतदेकस्मिन्नप्येकवर्णं पदम्, एकपदा ऋक्। एकर्चं सूक्तमिति। अत्राप्यर्थेन युक्तो व्यपदेशः। पदं नामार्थः। ऋङ् नामार्थः। सूक्तं नामार्थः।"**

**अयं भावः** – तर्हि ग्रामशब्दस्योदाहरणं नास्ति सम्यक्। अन्यदुदाहरणं गृह्यताम्। वर्णानां समूहः पदमुच्यते। पदानां समूह ऋगुच्यते। ऋचां समूहः सूक्तमित्युच्यते। किन्तु लोके एकस्मिन्नपि वर्णे पदशब्दस्य प्रयोगः क्रियते। एकस्मिन्नपि पदे ऋक्शब्दस्य प्रयोगो दृश्यते। एकस्यामपि ऋचि सूक्तमित्युच्यते।

एकपदा ऋग् भवतीत्यत्र पदशब्देन पादशब्दो विवक्षितः। यतो हि कस्याश्चिदपि ऋच एकपदं न भवति। वर्णसमुदायः पदमित्यत्र तु यथोक्तमेव साधु। एकवर्णं पदम् इत्यादिष्वपि पदादिभिरर्थानामभेदं मत्वा पदं नामार्थः, ऋङ् नामार्थः, सूक्तं नामार्थः इति व्यवहारः व्यपदेशिवद्भावं विनैव कृतः।

म० भा० – ''यथा तर्हि – बहुषु पुत्रेष्वेतदुपपन्नं भवति - अयं मे ज्येष्ठोऽयं मे मध्यमोऽयं मे कनीयानिति। भवति चैतदेकस्मिन्नपि – अयं मे ज्येष्ठोऽयं मे मध्यमोऽयमेव मे कनीयानिति।''

अयं भावः – यस्यैकाधिका पुत्राः स्युः तस्यायं व्यवहारः समीचीनो भवति। अयं मे ज्येष्ठोऽयं मे मध्यमोऽयं मे कनीयानिति। यस्यैक एव पुत्रो भवति, तस्यापि – अयमेव मे ज्येष्ठोऽयमेव मे मध्यमोऽययमेव मे कनीयानिति। अतः लोकप्रमाणेन शास्त्रीयव्यवहारोऽपि व्यपदेशिववद्भावं विनैवोपपन्नो भवति। नास्ति वचनस्यावश्यकतेतिभावः।

म० भा० – ''तथाऽसूतायामसोष्यमाणायां च भवति प्रथमगर्भेण हतेति। तथाऽनेत्यानाजिगमिषुराह – इदं मे प्रथममागमनमिति''॥

अयं भावः – अपरमपि विद्यत उदाहरणम्। यथा – या स्त्री पुत्रोत्पादनं पूर्वं न कृतवती। नापि भाविनि काले पुत्रोत्पादनं करिष्यति। तस्यामपि लोके व्यवहारो भवति – प्रथमपुत्रेण हतेति। एवं व्यपदेशिवद्भाववचनं विनैव शास्त्रेऽपि व्यवहारो भविष्यति। नास्ति वचनस्यावश्यकतेति।

एवं या व्यक्तिः कस्यापि जनस्य गृहं नागता नापि भविष्यत्काले तस्य गृहमागमिष्यति, तत्रापि भवति व्यवहारः इदं मे प्रथममागमनमिति। तस्मात् शास्त्रेऽपि भविष्यति आद्यन्तवद्भावं विना व्यवहार इति।

म० भा० – ''आद्यन्तवद्भावश्च शक्योऽवक्तुम्। कथम्? अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धमेकस्मिन्''॥ ६॥

''अपूर्वलक्षण आदिः। अनुत्तरलक्षणोऽन्तः। एतस्मात् कारणादेकस्मिन्नप्याद्यन्तापदिष्टानि कार्याणि भविष्यन्तीति नार्थ आद्यन्तवद्भावेन।''

अयं भावः – आद्यन्तशब्दयोः पूर्वोक्तार्थो न क्रियते। यथा – यस्मात् पूर्वं नास्ति परोऽस्ति स आदिः। एवं यस्मात् परो नास्ति पूर्वोऽस्ति सोऽन्त इति। किन्तु यस्मात् पूर्वो नास्ति स आदिः। यस्मात् परो नास्ति सोऽन्तः। इत्येवं लक्षणे कृते सति यथा – तैत्तिरीयः इत्यादिषु भवत्यनेकाक्षरेषु प्रत्ययेषु आद्युदात्तश्चेति-



सूत्रेणाद्युदात्तत्वम्। तथा – एकाक्षरेषु प्रत्ययेषु औपगवः इत्यादिषु प्रत्ययस्याद्युदात्तस्वरो भविष्यति। नास्ति आद्यन्तवद्भावस्यावश्यकतेति।

म० भा० – ''गोनर्दीयस्त्वाह – सत्यमेतत् - ''सत्यस्मिन्नि''ति''।

अयं भावः – आद्यन्तयोः शब्दयोः सत्यपरस्मिन् वर्णे व्यवहारो भवतीति स्वीकृते आद्यन्तवदेकस्मिन्निति सूत्रस्यावश्यकतास्ति।

म० भा० – ''कानि पुनरस्य योगस्य प्रयोजनानि?

आदिवत्त्वे प्रयोजनं प्रत्ययञ्निदाद्युदात्तत्वे॥ ६॥

प्रत्यस्यादिरुदात्तो भवतीतीहैव स्यात् कर्त्तव्यं तैत्तिरीयः। औपगवः कापटव इत्यत्र न स्यात्। ''ञ्नित्यादिर्नित्यम्'' ( ६। १। १९७ ) इतीहैव स्यात् – आहिचुम्बकायनिः आग्निवेश्यः। गार्ग्यः कृतिरित्यत्र न स्यात्।''

अयं भावः – अन्यस्मिन् सत्येवाद्यन्तयोर्व्यवहार इति सिद्धान्तमनुसृत्याद्यन्तवद्भावस्यावश्यकतेति निश्चित्य तत् प्रयोजनानि प्रस्तौति भगवान् पतञ्जलिः–

तत्र प्रथमप्रयोजनमेकाक्षरेषु प्रत्ययेषु ''आद्युदात्तश्च'' (३। १। ३) इत्याद्युदात्तत्वस्य विधानम्। तथाहि – यथा कर्त्तव्यमित्यत्र ''तव्यत्तव्यानीयरः'' (३।१।९६) इति कर्मणि तव्यप्रत्यये सति अनेकाक्षरत्वेनाद्युदात्तश्चेति तकारोत्तरवर्तिनोऽकारस्याद्युदात्तता भवति, एवं तित्तिरिणा प्रोक्तमधीते – इत्यर्थे तैत्तिरीयः इत्यत्र तित्तिरिशब्दात् तित्तिरिवरतन्तुखण्डिकोखाच्छण् (४। १। १०२) इति छणि प्रत्यये आदिवृद्धौ छस्येयादेशे प्रत्ययस्यानेकाक्षरत्वात् ईकारस्याद्युदात्तत्वं भवति। तथैकाक्षरेषु प्रत्ययेषु न भवितुमर्हत्याद्युदात्तत्वम्। तथाहि – उपगोरपत्यमौपगवः कापटोरपत्यम् कापटव इत्यत्र ''तस्यापत्यम्'' (४। १। ९२) इत्यणि वृद्ध्यादिकार्ये अणुप्रत्ययस्यैकाक्षरत्वात् आद्युदात्तस्वरोऽकारस्य न प्राप्नोति। तस्मादाद्यन्तवद्भावस्यास्त्यावश्यकता।

एवञ्चाहिचुम्बकस्यापत्यमित्यर्थे ''आहिचुम्बकायनिः इत्यत्र प्राचामवृद्धात् फिन् बहुलम् (४।१।१६०) इति फिनि प्रत्यये तस्यायनादेशे, अग्निवेशस्यापत्यमित्यर्थे आग्निवेश्यः इत्यत्र गर्गादिभ्यो यञ्'' (४। १। १०५) इति यञि प्रत्यये च सति ञिति णिति च प्रत्यये परत आद्युदात्तो भवतीत्यर्थकेन

"ञ्नित्यादिर्नित्यम् (६।१।१९७) इति सूत्रेणोभयत्राद्युदात्तता भवति यथा, तथा गर्गस्य गोत्रापत्यमित्यर्थे गार्ग्यः इत्यत्र गर्गादिभ्यो यञ्" (४।१।१०५) इति यञि प्रत्यये सति भत्वात् यस्येति चेति गकारोत्तरवर्त्तिनोऽकारस्य लोपे प्रकृतेरेकाक्षरत्वेनादित्वाभावेनाद्युदात्तत्वं न प्राप्नोति। एवं च कृतिरित्यत्र क्तिनि प्रत्यये सति प्रकृतेरेकाक्षरत्वेनाद्युदात्तता न भवेत्। अतोऽसहायेषु आद्यन्तवद्भावस्य पठनमावश्यकमस्ति।

**म० भा० – "वलादेरार्धधातुकस्येट्"॥ ८॥**

**"वलादेरार्धधातुकस्येट् प्रयोजनम्। आर्धधातुकस्येड्वलादेः (७।२।३५) इहैव स्यात् – करिष्यति हरिष्यति। जोषिषत् मन्दिषदित्यत्र न स्यात्।"**

**अयं भावः** – 'करिष्यति' 'हरिष्यति' इत्यत्र कृधातोर्लृटि तस्य स्थाने तिपि स्यविकरणस्यार्धधातुकत्वात् विकरणस्यानेकाक्षरत्वात् "आर्धधातुकस्येड् वलादेः (७।२।३५) इतीडागमो भवति। जोषिषत् मन्दिषत् इत्यत्र जुष् मन्द धातुभ्याम् लिङर्थे लेटि तस्य तिपि "सिब्बहुलं लेटि" (३।१।३४) इति – सिपि तस्यार्धधातुकत्वेऽपि विकरणस्यैकाच्त्वात् तस्य वलादित्वाभावादिडागमो न प्राप्नोति। तस्मादाद्यन्तवद्वचनमवश्यमेव कर्त्तव्यमित्यभिप्रायः।

**म० भा० – "यस्मिन् विधिस्तदादित्वे"॥ ९॥**

**यस्मिन् विधिस्तदादित्वे प्रयोजनम्। वक्ष्यति – "यस्मिन् विधिस्तदावल्ग्रहणे" इति। तस्मिन् क्रियमाणे "अचिश्नुधातुभ्रुवां य्वोरियङुवङौ" इहैव स्यात् श्रियः भ्रुवः। श्रियौ भ्रुवौ इत्यत्र न स्यात्।**

**अयं भावः** – 'येन विधिस्तदन्तस्य' (१।१।७२)। इति सूत्रे "यस्मिन् विधिस्तदादावल्ग्रहणे" इत्येषा परिभाषा पठिता। तस्याः तात्पर्यमस्ति या सूत्रेष्वल्ग्रहणविषयिणी सप्तमी अन्यत्र विशेषणत्वं निर्वहन्ती सा तदादिविधिं लभते। यथा – अचि श्नुधातुभ्रुवां य्वोरियङुवङौ (६।४।७७) इत्यत्र 'अचि' इति सप्तम्यन्तं पदं प्रत्ययपदे विशेषणत्वमनुभवत् तदादिविधिं प्राप्य "अजादौ प्रत्यये परत इवर्णोवर्णयोरियङुवङौ भवत" इत्यर्थं प्राप्नोति। श्रियः भुवः इत्यत्र (श्री अस् भ्रू अस्) विद्यतेऽजादित्वं जस्प्रत्ययस्यातो भवत इयङुवङौ। किन्तु श्रियौ 'भ्रुवौ' इत्यत्र (श्री औ भ्रू औ) औप्रत्ययस्यैकाक्षरत्वादजादित्वाभावात् इयङु-वङोः प्राप्तिर्नास्ति। प्राप्तिश्चेष्टा। अत आद्यन्तवदेकस्मिन्नत्यस्यासहाये आदिवद्भावायावश्यकता विद्यत एव।



**(म० भा०) – "अजाद्याट्त्वे"॥ १०॥**

**"अजाद्याट्त्वे प्रयोजनम्। आडजादीनामितीहैव स्यात् ऐहिष्ट ऐक्षिष्ट। ऐष्ट अध्यैष्ट इत्यत्र न स्यात्।"**

**अयं भावः** – ईह् ईक्ष् धातुभ्यां (लुङि तिपि सिचि) तयोरनेकाक्षरत्वात् आडजादीनामिति लब्धेऽजादित्वे आडागमो भवति, किन्तु इण् इङ् धातुभ्यामडागमो दुर्लभः स्यात्। तयोरेकाक्षरत्वे अजादित्वस्याभावात्।

अत एकाक्षरेषु अजूरूपधातुषु आदिवद्भावार्थं सूत्रं करणीयम्। येन ऐष्ट अध्यैष्ट इत्यादीनि रूपाणि सिद्ध्यन्ति।

**(म० भा०) "अथान्तवत्त्वे कानि प्रयोजनानि?**

**अन्तवद्द्विवचनान्तप्रगृह्यत्वे"॥ ११॥**

**अन्तवद्द्विवचनान्तप्रगृह्यत्वे प्रयोजनम्। "ईदूदेद्द्विवचनं प्रगृह्यम्" (१।१।११) इहैव स्यात् – पचेते इति पचेथे इति। खट्वे इति माले इतीत्यत्र न स्यात्।**

**अयं भावः** – "ईदूदेद्द्विवचनं प्रगृह्यम्" (१।१।११) इति सूत्रेणै-दन्तस्य प्रगृह्यसंज्ञायां 'पचेते इति' 'पचेथे इति' इत्यत्र प्रगृह्यत्वाद् प्रकृतिभावो भवति। तत्र पच्धातोः आताम् आथामित्येतौ प्रत्ययौ स्तः अनेकाचौ। तेनैदन्तं द्विवचनमित्यर्थो भवत्युपपन्नः। किन्तु 'खट्वे इति' 'माले इति' इत्यत्र (खट्वा औ माला औ) औविभक्तेरेकाच्त्वात् एदन्तं द्विवचनं नास्ति। तस्मात् प्रगृह्यसंज्ञा न भवति। अतोऽन्तवद्भावार्थं आद्यन्तवदेकस्मिन्निति सूत्रं कर्त्तव्यमेवेति वार्त्तिककृतोऽभिप्रायः।

वस्तुतोऽत्र "येन विधिस्तदन्तस्येति सूत्रेणैव तदन्तविधौ सति पचेते इति पचेथे इति" अत्र एदन्तस्य द्विर्वचनस्य प्रगृह्यसंज्ञा भवति। यत्रैकाक्षरो भवति

प्रत्ययः तत्र स्वस्यापि प्राप्तो विधिर्भवतीत्यर्थकरणेन खट्वे इति माले इति इत्यत्रापि प्रगृह्यसंज्ञा भवति। यथा – एरच्। इत्यत्रेवर्णान्तात् चिधातोरच्प्रत्ययो भवति। एकाच इण्धातोरपि भवत्यच्प्रत्ययः। तेन चयः अयः इत्यादयः प्रयोगाः सिद्ध्यन्ति।

**(म० भा०) – ''मिदचोऽन्त्यात् परः''॥ १२॥**

**''मिदचोऽन्त्यात् परः'' (१।१।४७) प्रयोजनम्। इहैव स्यात् - ''कुण्डानि वनानि। तानि यानि'' इत्यत्र न स्यात्।**

**अयं भावः** – अन्त्यादचः मित् परो भवतीत्यर्थकेन ''मिदचोऽन्त्यात् परः'' इति सूत्रेण 'कुण्ड इ वन इ' इत्यत्र कुण्डवनशब्दयोरनेकाच्त्वात् भवत्यन्त्योऽच्। तेनात्र नुम् भवति। किन्तु तानि यानि इत्यत्र प्रकृतेरेकाक्षरत्वेनान्त्याचोऽसंभवात् नुम् न प्राप्नोति। तस्मादन्तवद्भावाय आद्यन्तवदेकस्मिन् इति सूत्रं पठनीयमेव, तेन तानि यानि प्रयोगौ सिद्ध्यतः।

**(म० भा०) – ''अचोऽन्त्यादि टि''॥ १३॥**

**'अचोऽन्त्यादि टि' (१।१।६४) प्रयोजनम्। कुर्वाते कुर्वाथे इत्यत्र (कृ आताम् कृ आथाम्) प्रत्ययस्यानेकाच्त्वात् 'अचोऽन्त्यादि टि' इति ''टि संज्ञा ''टित आत्मनेपदानां टेरे'' (३।४।७९) इति टेरेत्वे कुर्वाते कुर्वाथे इति प्रयोगः सिद्ध्यतः। कुरुते कुर्वे इत्यत्र 'त' इट्प्रत्ययोरेकाच्त्वेन टिसंज्ञाया अभावेन टेरेत्वं न स्यात् तदर्थमन्तवद्वचनं कर्त्तव्यमिति।**

**(म० भा०) – ''अलोऽन्त्यस्य''॥ १४॥**

**''अलोऽन्त्यस्य प्रयोजनम्। अतो दीर्घो यञि' (७।३।१०१) 'सुपि च' (७।३।१०२) इहैव स्यात् – पदाभ्यां घटाभ्याम्। आभ्यामित्यत्र न स्यात्।''**

**अयं भावः** – पटभ्याम् घटभ्याम् इत्यत्रैव ''अतो दीर्घो यञि'' (७।३।१०१) इत्यस्याङ्गाधिकारत्वात् अनुवृत्तस्यात्पदस्याङ्गं प्रति विशेषणत्वात् तदन्तविधौ सति अलोऽन्त्यस्येति सूत्रसहकारेण दीर्घो भवति। आभ्यामित्यत्र प्रकृतेरेकाक्षरत्वात् अदन्तत्वाभावेन दीर्घो न प्राप्नोति। तदर्थमन्तवद्वचनं कर्तव्यमिति तात्पर्यम्।



**(म० भा०) – ''येन विधिस्तदन्तस्य''॥ १५॥**

**''येन विधिस्तदन्तत्वे प्रयोजनम्। 'अचो यत्' (३।१।९७) इहैव स्यात् – चेयम् जेयम्। एयम् अध्येयमित्यत्र न स्यात्।''**

**अयं भावः** – अचो यत् इति सूत्रे अचः इति पञ्चम्यन्तस्य पदस्याधिकारप्राप्तस्य धातोरिति पञ्चम्यन्तस्य पदस्य विशेषणत्वात् येन विधिस्तदन्तस्येति। तदन्तविधौ सति एरच् इति सूत्रस्यार्थो भवति – ''इवर्णान्ताद्धातोरच्प्रत्ययो भवति भावे अकर्त्तरि च कारके'' इति।

तेन चिजिधातुभ्यामचि प्रत्यये गुणे च चेयं जेयमेव सिद्ध्यतः, एयम् अध्येयमिति प्रयोगौ न सिद्ध्यतः। तत्र इवर्णान्तत्वाभावात्। एकाज्भ्यो धातुभ्योऽप्यच् प्रत्ययः स्यात् तदर्थम् अन्तवद्वचनं कर्त्तव्यमिति।

॥ ''आद्यन्तवदेकस्मिन्''॥

*****

## ॥ स्थानिवदादेशोऽनल्विधौ ॥ १ । १ । ५६ ॥

अत्र "काशिकावृत्तिः" –

**स्थान्यादेशयोः पृथक्त्वात् स्थान्याश्रयं कार्यमादेशे न प्राप्नोतीत्ययमतिदेश आरभ्यते। स्थानिना तुल्यं वर्तत इति स्थानिवत्। स्थानिवदादेशो भवति स्थान्याश्रयेषु कार्येष्वनलाश्रयेषु स्थान्यलाश्रयाणि कार्याणि वर्जयित्वा। अनल्विधिरनेकाल्विधिरित्यर्थः। किमुदाहरणम् – धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः। धात्वादेशो धातुवद्भवति, "अस्तेर्भूः" (अ. सू. २।४।५२) "ब्रुवो वचिः" (अ. सू. २।४।५३) आर्धधातुकविषये प्रागेवादेशेषु कृतेषु धातोरिति तव्यदादयो भवन्ति। भविता, भवितुं, भवितव्यम्। वक्ता, वक्तुं, वक्तव्यम्। अङ्गादेशोऽङ्गवद्भवति, केन, काभ्यां, कैः। किमः कादेशे कृतेऽङ्गाश्रया इन्दीर्घत्वैस्भावा भवन्ति। कृदादेशः कृद्वद् भवति, प्रकृत्य, प्रहृत्य। ल्यबादेशे कृते "ह्रस्वस्य पिति कृति तुग्" इति तुग्भवति। तद्धितादेशः तद्धिवद्भवति, दाधिकम्, अद्यतनम्। "कृत्तद्धितसमासाश्च" (अ. सू. १। २। ४६) इति प्रातिपदिकसंज्ञा भवति। अव्ययादेशोऽव्ययवद्भवति, प्रस्तुत्य, प्रहृत्य, उपस्तुत्य 'अव्ययात्' (अ. सू. २।४।८२) इति सुब्लुक् भवति। सुबादेशः सुब्वत् भवति। वृक्षाय प्लक्षाय। "सुपि च" (अ. सू. ६। ३। १०२) इति दीर्घत्वं भवति। तिङादेशस्य तिङ्वद्भवति। अकुरुताम्, अकुरुतम्। "सुप्तिङन्तं पदम्" (अ. सू. १।४।१४) इति पदसंज्ञा भवति। पदादेशः पदवद्भवति। ग्रामो वः स्वम्, जनपदो नः स्वम्। 'पदस्य' इति रुत्वं भवति। वत्करणं किम्, स्थानी आदेशस्य संज्ञा मा विज्ञायीति।**

**आवधिष्ट – स्वाश्रयमपि यथा स्यात्। "आङो यमहनः" (अ. सू. १। ३।२८) आहत, आवधिष्ट, इत्यात्मनेपदमुभयत्रापि भवति। आदेशग्रहणं**



**किम् आनुमानिकस्याप्यादेशस्य स्थानिवद्भावो यथा स्यात्, पचति, "एरुः" (अ. सू. ३।४।८६)। अनल्विधाविति किम्, द्युपथितदादेशाः न स्थानिवद्भवन्ति। द्यौः पन्थाः स इति। 'हल्ङ्याब्' (६।१।६८) इति सुलोपो न भवति।** इति काशिकावृत्तिः।

स्थानिवत्सूत्रस्य महाभाष्यानुसारिव्याख्यानम्। स्थानिवत् इत्यत्र वतिग्रहणप्रयोजनं पृच्छति। **(म० भा०) – "वत्करणं किमर्थम्? स्थान्यादेशेऽनल्विधावितीयत्युच्यमाने संज्ञाधिकारोऽयं तत्र स्थानी आदेशस्य संज्ञा स्यात्। तत्र को दोषः?" "आङो यमहनः (१। ३। २८) आत्मनेपदं भवतीति वधेरेव स्याद् हन्तेर्नस्यात्। वत्करणे पुनः क्रियमाणे न दोषो भवति। स्थानिकार्यमादेशे अतिदिश्यते गुरुवद् गुरुपुत्रे यथा।"**

**अत्रेदं तात्पर्यं** यथा – "गाङ्कुटादिभ्योऽञ्णिन्ङित्" इति सूत्रे वतिप्रत्ययं विना गाङ्कुटादिभ्यो ञिद्णिद्भिन्नः प्रत्ययो ङित्तुल्यो भवतीत्यर्थः प्रतीयते तथैव प्रकृतसूत्रे वतिप्रत्ययं विना "स्थनिना तुल्यमादेशः स्यादनल्विधौ" इत्यर्थः प्रतीयेतेति प्रश्नः। यदि वत्करणं न क्रियते "स्थान्यादेशोऽनल्विधौ" इत्येतन्मात्रं सूत्रं क्रियते तर्हि "आवधिष्ट" इत्यत्र आङ्पूर्वकाद् हन्धातोर्लुङि प्रथमपुरुषस्यैकवचनविवक्षायाम् "लुङि च" इति सूत्रेण हनो वधादेशे कृते "आङो यमहनः" (१।३।२८) इति सूत्रेण (वधादेशे कृते) हन्धातोरभावात् आत्मनेपदं न प्राप्नोति। तत्र संज्ञायाः प्रस्तावाद् हन् वधरूपस्यादेशस्य संज्ञेति सूत्रार्थो निष्पन्नो भवति। संज्ञा च संज्ञिनं प्रत्याय्य निवर्तते। तस्माद्वधादेशादेवात्मनेपदं भवेत्, हन्धातोर्नैवात्मनेपदं प्राप्नोति। तस्माद् वतिकरणं कर्त्तव्यमेव। यथा लौकिके प्रयोगे 'गुरुवद् गुरुपुत्रे' इति।

आदेशग्रहणस्य प्रयोजनम् (म० भा०) – **"आदेशग्रहणम् किमर्थम्? स्थानिवदनल्विधावितीयत्युच्यमाने क इदानीं स्थानिवत् स्यात्? यः स्थाने भवति। कश्च स्थाने भवति? आदेशः। इदं तर्हि प्रयोजनम् आदेशमात्रं स्थानिवद् यथा स्यात्। एकदेशविकृतस्योपसंख्यानं चोदयिष्यति, तन्न वक्तव्यं भवति।"**

**अत्रेदं तात्पर्यम्** – यदि ''स्थानिवदनल्विधौ'' इत्येव सूत्रं स्यात्, सूत्रे आदेशपदस्य पाठो न स्यात्। अत्र प्रश्नो भवति कस्य स्थानिवद्भावो भवेत्? यः स्थाने भवति तस्य स्थानिवद्भावो भवेत्। कश्च स्थाने भवति? आदेशः। आदेशश्च द्विविधो भवति। प्रथमस्तावत् – ''अस्तेर्भूः'' (२।४।५२) अत्र भगवान् पाणिनिरुभयोः स्थान्यादेशयोः ग्रहणं करोति। अस्धातुः स्थानी भूरित्यादेशः। द्वितीयो यथा – ''एरुः'' (३।४।८६) इति सूत्रे भगवान् पाणिनिः इकारस्य स्थाने उकारस्य विधानं करोति। ईदृशोः स्थान्यादेशयोः दर्शनं 'पचति', पचतु इत्यादिषु प्रयोगेषु भवति। अत्र ते स्थाने 'तु' इति प्रयोगः कर्त्तव्यः इत्यनुमानेन आदेशः प्राप्तो भवति। अतोऽयमानुमानिक आदेशः। अतः आदेशग्रहणं विना प्रत्यक्षस्यैवादेशस्य ग्रहणं प्राप्नोति नत्वानुमानिकस्यादेशस्य। तस्मात् आदेशग्रहणेनोभयविधस्यादेशस्य स्थानिवद्भावो भवति। अत एव 'सुप्तिङन्तं पदम्' (१।४।१४) इति सूत्रेण 'पचतु' इत्यादिप्रयोगाणां पदत्वं भवति। तेन 'पदस्य' (८।१।८६) इत्यधिकारे देवदत्तः पचतु इत्यत्र ''तिङतिङ'' (८।१।२८) इति सूत्रेण पचतु इत्यस्य तिङन्तं मत्वा निघातो भवति। एवं पचतु ते ओदनमित्यत्र पदात् (८।१।१७) इत्यधिकारे 'तेमयावेकवचनस्य' (८।१।२२) इत्यादय आदेशाः भवन्ति।

अनल्विधावित्यत्र विधिग्रहणप्रयोजनम् **(म० भा०) – ''अथ विधिग्रहणं किमर्थम्?'' सर्वविभक्त्यन्तः समासो यथा विज्ञायेत। अलः परस्य विधिः – अल्विधिः। अलो विधिः – अल्विधिः। अलि विधिः – अल्विधिः। अला विधिः – अल्विधिः। नैतदस्ति प्रयोजनम्। प्रातिपदिकनिर्देशोऽयम्। प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति। न काञ्चित् प्राधान्येन विभक्तिमाश्रयन्ति। तत्र प्रातिपदिकार्थे निर्दिष्टे यां यां विभक्तिमाश्रयितुं बुद्धिरुपजायते सा साऽऽश्रयितव्या। इदं तर्हि प्रयोजनम् – उत्तरपदलोपो यथा विज्ञायेत – अलमाश्रयत-अलाश्रयः, अलाश्रयो विधिः-अल्विधिः। यत्र प्राधान्येनालाश्रीयते, तत्रैव प्रतिषेधः स्यात्। यत्र विशेषणत्वेनालाश्रीयते, तत्र प्रतिषेधो न स्यात्। किम् प्रयोजनम्? प्रदीव्य प्रसीव्येति वलादिलक्षण इण्माभूत् इति।**



**अयं भावः** – अल्पदार्थान्वययोग्यपदार्थाकाङ्क्षायां विधिपदस्याध्याहारलभ्यत्वात् विधिग्रहणं किमर्थमिति प्रश्ने तदुत्तरति – अल्विधावित्यत्र विधिग्रहणं सर्वविभक्त्यन्तः समासो यथा भवेत्। तथाहि – अलः परस्य विधिः अल्विधिः। अत्र पञ्चमीतत्पुरुषसमासः। अत्रोदाहरणानि – द्यौः, पन्थाः, स इत्येतानि। द्यौरित्यत्र सौ भिवक्तौ 'दिव औदि'ति वकारस्यौत्वे, तस्य स्थानिवत्त्वाद् ''हल्ङ्याभ्य'' इति सकारलोपः प्राप्नोति। अलः परस्य सुलोपविधेरनल्विधाविति निषेधेन सुलोपो न भवति। एवं पन्था इत्यत्र (पथिन् सौ) नकारस्यात्वे तस्य स्थानिवत्त्वेन सकारलोपः प्राप्नोति। अनल्विधाविति निषेधान्न भवति सकारलोपः। स इत्यत्र तद्शब्दात् सौ ''त्यदादीनामः'' इति दस्यात्वे तस्य स्थानिवत्त्वेन सकार-लोपः प्राप्नोति। अनल्विधाविति निषेधेन सकारलोपो न भवति। अलो विधिर-ल्विधिः। अत्र षष्ठीतत्पुरुषसमासः। अत्रोदाहरणम् – द्युकामः। दिवि कामो यस्य स द्युकामः। अत्र दिवो वकारस्योत्त्वे तस्य स्थानिवद्भावेन लोपो व्योर्वलीति वकारस्य लोपः प्राप्नोति, तस्य स्थानिवत्त्वस्यानल्विधाविति निषेधेन वलोपो न भवति। अत्रोदाहरणम् – क इष्टः। अत्र यज्धातोः क्तप्रत्यये यकारस्य सम्प्रसारणे पूर्वरूपे षत्वे ष्टुत्वे क इष्टः इति रूपं भवति। किम्शब्दात् सौ कादेशे सस्य रुत्वे कर् इष्टः इत्यत्र इकारस्य स्थानिवत्त्वेन हशि चेति उत्त्वं प्राप्नोति। अनल्विधाविति निषेधात् उत्वं न भवति। तथा अला विधिरित्यल्विधिः। अत्र तृतीयातत्पुरुष-समासः। अत्रोदाहरणम् – व्यूढोरस्कः। (व्यूढमुरो यस्य सः, तेन) अत्र विसर्ग-स्थानिकस्य सकारस्य स्थानिवत्त्वेन विसर्गमादाय ''अट्कुप्वाङ्नुम्व्यवायेऽपि'' (८।४।२) इति विसर्गव्यवधानेन णत्वं प्राप्नोति। अला व्यवधानत्वात्। अनल्वि-धाविति तन्निषेधात्। अल्विधिरित्यत्र विधिग्रहणस्य महिम्ना चतुर्विधः समासो लभ्यते। एतदर्थं विधिग्रहणं न कर्त्तव्यम्। यतो हि प्रातिपदिकनिर्देशा अर्थतन्त्राः अर्थाधीनाः भवति। न काञ्चन विभक्तिं प्राधान्येनाश्रयन्ति अर्थात् विवक्षितमर्थ-मनुसृत्य यां कामपि विभक्तिमाश्रयन्ति। तथात्रापि पञ्चमीषष्ठीसप्तमीतृतीयाविभक्तीनां तासामर्थाननुसृत्योक्तः चतुर्विधः समासो लप्स्यते तदर्थं विधिग्रहणं न कर्त्तव्यमिति।

''इदं तर्हि प्रयोजनमि''त्यभिधाय विधिग्रहणस्य महाभाष्यकृतो विशेष-प्रयोजनं वदन्ति। अल्विधिरित्यत्र पदद्वयं भवति। तेन मध्यमपदलोपी समासो भविष्यति। आश्रीयत इति आश्रय, एरच् (३।३।५६) इति कर्मणि अच् प्रत्ययः।

अल् आश्रयो यस्य सः अलाश्रयः। अलाश्रयश्चासौ विधिश्चेत्यलो विधि-रिति बहुव्रीहिगर्भोत्तरपदलोपी समासः। "शाकपार्थिवादीनां सिद्धये उत्तरपदलोप-स्योपसंख्यानमिति" वार्तिकात्। अलमाश्रयते इत्यत्र नास्ति कर्मण्यण् इत्यण्, नास्त्युपपदसमासः महर्षेरत्रालाश्रयणे एव तात्पर्यम्। अत्राश्रयपदेन विधिशास्त्रेषु प्राधान्येनाप्राधान्येन वालाश्रयणेऽनल्विधाविति निषेधो भवतीत्यर्थाश्रयणे तात्पर्यम्। यत्र प्राधान्येनालाश्रयणं भवति तत्र तु भवत्येव निषेधः। यथा चतुर्विधसमासोक्तेषूदाहरणेषु प्राधान्येनालाश्रयणमस्ति प्रसीव्य प्रदीव्येत्यत्र प्रपूर्वकात् सिव्धातोः दिव्-धातोश्च क्त्वा गतिसमासे ल्यबादेशे दीर्घे कृते स्थानिवत्त्वेन "आर्धधातुकस्येड्-वलादेः" (७।२।३५) इति सूत्रे वलादेरित्यस्यार्धधातुकपदे विशेषणत्वेऽपि इडागमस्य निषेधो भवति। वलादेरित्यस्याल्विधित्वात्। अत एव यत्र विधौ प्राधान्येनाप्राधान्येन वालाश्रयणं भवति तत्रानल्विधाविति निषेधो भवति। एतच्च विधिपदग्रहणेनोत्तरपदलोपिसमासमहिम्ना ज्ञापितमिति।

तत्स्थानापन्नः तद्धर्मं लभते, अतः स्थानिकार्याणि भविष्यन्ति आदेशेषु इति मनसि निधाय प्रश्नस्तदुत्तरं च प्रस्तूयते –

**म० भा० – "किमर्थं पुनरिदमुच्यते" "स्थान्यादेशपृथक्त्वादादेशे स्थानिवदनुदेशो गुरुवद् गुरुपुत्र इति यथा"॥ १॥ अन्यः स्थानी, अन्य आदेशः। स्थान्यादेशयोः पृथक्त्वात्। तस्मात् कारणात् स्थानिकार्यमादेशे न प्राप्नोति। तत्र को दोषः? "आङो यमहन आत्मनेपदं भवतीति हन्तेरेव स्याद्वधेर्नस्यात्। इष्यते च वधेरपि स्यादिति, तच्चान्तरेण यत्नं न सिद्ध्यति। तस्मात् स्थानिवदनुदेशः। एवमर्थमिदमुच्यते। गुरुवद् गुरुपुत्र इति यथा। तद्यथा – गुरुवदस्मिन् गुरुपुत्रे वर्त्तितव्यमिति गुरौ यत् कार्यं तद् गुरुपुत्रेऽतिदिश्यते। एवमिहापि स्थानिकार्यमादेशेऽतिदिश्यते।"**

अत्रेदं तात्पर्यम् – "स्वं रूपं शब्दस्याशब्दसंज्ञा" इति सूत्रेण शब्दस्य स्वं रूपं संज्ञित्वेन गृहीतम् भवति। स्थान्यादेशयोः स्वरूपभिन्नत्वात् स्थानिकार्यमादेशे न प्राप्नोति। अतः स्थानिवत्सूत्रमारब्धव्यमेव। यथा लौकिके व्यवहारे "गुरुवदस्मिन् गुरुपुत्रे व्यवहर्त्तव्यम्" इति धर्मशास्त्रीयवचनानुसारं गुरुपुत्रे अपि गुरुवत्कार्याणि भवन्ति। तथैव शास्त्रीयकार्यमपि स्थानिवत्सूत्रमहिम्ना आदेशे



भवन्ति। यथा "आङो यमहनः" इति सूत्रेण स्थानिनि आत्मनेपदं भवति। तथा आदेशेऽपि आवधिष्ट इत्यत्रात्मनेपदं भवति।

**(म० भा०) – "नैतदस्ति प्रयोजनम्। लोकत एतत्सिद्धम्। तद्यथा लोके यो यस्य प्रसङ्गे भवति, लभतेऽसौ तत्कार्याणि। तद्यथा – उपाध्यायस्य शिष्यो याज्यकुलानि गत्वाऽग्रासनादीनि लभते। यद्यपि तावल्लोक एष दृष्टान्तः, दृष्टान्तस्यापि तु पुरुषारम्भो निवर्तको भवति। अस्ति चेह कश्चित् पुरुषारम्भः? अस्तीत्याह। कः? स्वरूपविधिर्नाम। हन्तेरात्मनेपदमुच्यमानं हन्तेरेव स्याद् वधेर्न स्यात्।"**

**अत्रेदं तात्पर्यम्** – शास्त्रीयकार्याणि लौकिकन्यायमनुसृत्य लक्ष्यानुरूपं कुत्रचित् प्रवर्तन्ते कुत्रचित् न प्रवर्तन्ते। यथा – "यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते" "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इत्यादयः परिभाषा लौकिकन्यायानुसारेण शास्त्रीयकार्याणि प्रवर्तयन्ति निवर्तयन्ति च। एवं स्थानिवद्-विषयेऽपि गुरुवद् गुरुपुत्रे वर्तितव्यमिति लौकिकं दृष्टान्तमनुसृत्य सूत्रारम्भं विना स्थानिकार्यमादेशेषु स्यात् सूत्रं न करणीयम्। भवतु, लौकिकदृष्टान्तस्य यदि शिष्टपुरुषेण निषेधो भवति, न तदा लौकिकदृष्टान्तमनुसृत्य शास्त्रीयकार्यं तत्सम्बन्धिषु भवितुमर्हति। परमत्र शास्त्रे स्वरूपमिति शास्त्रं लौकिकन्यायस्य निवर्तकं भवति। अतः सूत्रं पठनीयमेव।

स्थानिवत्त्वे ज्ञापकं प्रस्तौति – **(म० भा०) एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति स्थानिवदादेशो भवतीति, यदयं "युष्मदस्मदोरनादेशे" (७।२।८६) इत्यादेशप्रतिषेधं शास्ति। कथं कृत्वा ज्ञापकम्? युष्मदस्मदोर्विभक्तौ कार्यमुच्यमानं कः प्रसङ्गो यदादेशे(ऽपि) स्यात्। पश्यत्याचार्यः – स्थानिवदादेशो भवतीति, अत आदेशे प्रतिषेधं शास्ति।**

**अत्रेदं तात्पर्यम्** – आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरनादेशे सतीत्यर्थके "युष्मदस्मदोरनादेशे" (७।२।८६) इति सूत्रेऽनादेश इति व्यर्थमेव यदि स्थानिवत्त्वमादेशे न स्यात्। अतोऽर्थापत्त्याऽनुमीयते स्थानिवत्त्वेनादेशेषु कार्यं प्राप्नोति। अन्यथा अनादेशग्रहणं व्यर्थमेव।

प्रयोजनान्तरं दर्शयति महाभाष्ये – **"इदं तर्हि प्रयोजनम् अनल्विधाविति प्रतिषेधं वक्ष्यामि। इह माभूत् – द्यौः पन्थाः स इति।"**

दिव् शब्दात् सौ विभक्तावत्रौत्वे कृते तस्य स्थानिवत्त्वात् हल्त्वेन सकारलोपः प्राप्नोति। तदर्थं अल्विध्यर्थं प्रतिषेध इष्यते। एवं 'पन्थाः' इत्यत्राकारास्य स्थानिवत्त्वात् अल्विधित्वेन प्रतिषेधो भवति। अन्यथा स्थानिवत्त्वेनाकारस्य हल्परकत्वात् सकारलोपः प्राप्नुयात्। 'सः' इत्यत्रापि तद्शब्दात् सौ दकारस्यात्वे तस्य स्थानिवत्त्वेन हल्परकत्वात् सकारलोपः प्राप्नोति। अल्विधित्वात् तदर्थ "मनल्विधौ" इति प्रतिषेध आवश्यकः।

**(म० भा०) "एतदपि नास्ति प्रयोजनम् – आचार्यप्रवृत्तिर्ज्ञापयति –" अल्विधौ स्थानिवद्भावो न भवतीति, यदयम् – "अदो जग्धिर्ल्यप्तिकिति" (२।४।३६) इति तिकितीत्येव सिद्धे ल्यब्ग्रहणं करोति। तस्मान्नार्थोऽनेन योगेन।**

**अत्रेदं तात्पर्यम्** – अनल्विधाविति प्रतिषेधविषयकं स्थानिवदिति सूत्रं तदपि न, यदि "अदो जग्धिर्ल्यप्तिकिति" (२।४।३६) इति सूत्रे ल्यब्ग्रहणं विनैव तकारादौ किति परतोऽदो जग्ध्यादेशः स्यादित्यर्थेन स्थानिवत्सूत्रेण तादिकित्त्वमादाय जग्ध्यादेशः स्यात्। ल्यब्ग्रहणं व्यर्थम्। तदेव व्यर्थीभूय विज्ञापयति – अल्विधौ स्थानिवद्भावो न भवतीति। 'प्रजग्ध्य' इत्यादयः प्रयोगाः सिध्यन्ति नास्ति सम्पूर्णस्य सूत्रस्यावश्यकतेति।

**(म० भा०) आरभ्यमाणेऽप्येतस्मिन् योगे – "अल्विधौ प्रतिषेधेऽविशेषणेऽप्राप्तिस्तस्यादर्शनात्"॥ २॥**

**"अल्विधौ प्रतिषेधेऽसत्यपि विशेषणे समाश्रीयमाणे, असति तस्मिन् विशेषणे अप्राप्तिर्विधेः। प्रदीव्य प्रसीव्य। किं कारणम्? तस्यादर्शनात्। वलादेरित्युच्यते। न चात्र वलादिं पश्यामः।"**

**अत्रेदं तात्पर्यम्** – मन्दमत्युनग्रहार्थमुत्तरसूत्रेऽनुवृत्यर्थञ्चेदं स्थानिवदिति सूत्रं करणीयमिति हृदि निधाय भगवान् पतञ्जलिराह – "आरभ्यमाणेऽप्येतस्मिन् योगे" इति। किन्तु "विधिपदघटितोऽनल्विधावि"त्यंशो न पठनीयः। तथा च



वार्तिकम् – अल्विधौ प्रतिषेधे इत्यत्रासतीति पदं योजनीयम् – अर्थात् "अल्विधौ प्रतिषेधेऽसति, (अपि) आर्धधातुकस्येड् वलादेः" इति विधिसूत्रे वलादेरिति षष्ठ्यन्तम् पदम् आर्धधातुकस्य विशेषणम्, तच्च विशेषणत्वेन समाश्री-यमाणे, प्रदीव्य प्रसीव्य इत्यादिलक्ष्येषु नास्ति। तर्हि प्रदर्शितोदाहरणेषु नास्ति प्राप्तिरिड्विधेः। क्त्वावृत्तिसामान्यधर्मोऽतिदेष्टुं शक्यते न वलादिरूपो विशेष-धर्मोऽपि। तथाहि – प्रदीपे कैयटः – "क्त्वामात्रप्रतिबद्धं यत्कार्यं कृत्त्वप्रत्यय-त्वाव्ययत्वादि तदादेशेऽतिदिश्यताम्, न तु वलादित्वमिति ल्यपो न स्वतो नापि स्थानितो वलादित्वमितीडभाव सिद्ध एवेति भावः।"

**(म० भा०) ननु चैवमर्थ एवायं यत्नः क्रियते – अन्यस्य कार्यमुच्यमानमन्यस्य यथा स्यादिति। सत्यमेवमर्थो न तु प्राप्नोति। किं कारणम्?**

**"सामान्यातिदेशे विशेषानतिदेशः"॥ ३॥**

**सामान्ये ह्यतिदिश्यमाने विशेषो नातिदिष्टो भवति। तद्यथा – ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमिति सामान्यं यद् ब्राह्मणकार्यं तत् क्षत्रियेऽतिदिश्यते। यद् विशिष्टं माठरे कौडिन्ये वा, न तदतिदिश्यते। एवमिहापि सामान्यं यत्प्रत्ययकार्यं तदतिदिश्यते, यद्विशिष्टं वलादेरिति न तदतिदिश्यते।**

**अयं भावः** – एतदर्थं स्थानिवत्सूत्रमाचार्यः पठितवान् यतोऽन्यस्य विधीयमानं कार्यमन्यस्य स्यात्। यथा प्रदीव्य प्रसीव्येत्यत्र क्त्वावृत्तिधर्मस्य वलादित्वस्य ल्यपि आनयनं स्यात्। तन्निमित्तक इट् च प्राप्नुयात्। एवं च कित्त्वनिमित्तको गुणनिषेधोऽपि स्यात्। तत् सम्यगस्ति। तथापि प्रदीव्य प्रसीव्येत्यत्रेटः प्राप्तिर्नभवति। तथाहि – "सामान्यातिदेशे विशेषानतिदेशः" इति लोकानुसारिण्या परिभाषया सामान्यधर्मातिदेशे विशेषधर्मातिदेशो न भवति। यथा – ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमित्युपदेशेन ब्राह्मणसामान्येषु यद्व्यवहारो भवति, तस्यैव क्षत्रिये वर्त्तनं भवति। विशेषस्य माठरस्य कौडिन्यस्य वा चरणप्रक्षालनादिकस्य व्यवहारः क्षत्रिये न भवति। तथैव ल्यपि प्रत्ययत्वस्याव्ययत्वस्य च सामान्यधर्मस्य

स्थानिवत्त्वेनातिदेष्टुं शक्यते। न तु वलादित्वस्य विशेषधर्मस्य। अतो हेतोः 'सामान्यातिदेशे विशेषानतिदेशः' इति परिभाषया अनल्विधावित्यस्य निषेधस्यावश्यकता नास्ति।

**( म० भा० ) "यद्येवम् अग्रहीत्" "इट ईटि" ( ८। २। २८ ) इति सिचो लोपो न प्राप्नोति? अनल्विधाविति पुनरुच्यमाने इहापि प्रतिषेधो भविष्यति प्रदीव्य प्रसीव्येति। विशिष्टं ह्येषोऽलमाश्रयते वलं नाम। इह च प्रतिषेधो न भविष्यति – अग्रहीदिति। विशिष्टं ह्येषोऽनलमाश्रयते इटं नाम।**

**अयं भावः –** "सामान्यातिदेशे विशेषानतिदेशः" इति परिभाषयाऽनल्विधावित्यस्य खण्डने सति अग्रहीदित्यत्र "इट ईटि" (८। २। २८) इति सिचो लोपो न प्राप्नोति, इट्त्वस्य विशेषधर्मत्वात्। अनल्विधाविति विधिपदघटितं पदं विशेषातिदेशस्य ज्ञापकमस्ति। तस्य फलम् अग्रहीत् इत्यत्र इट्त्वस्य समुदायधर्मत्वेनानल्विधाविति स्थानिवत्त्वस्य निषेधाभावात् सिचो लोपो भवति। ज्ञापनस्य चारितार्थ्ये, प्रदीव्य प्रसीव्येत्यत्रेड्विधायके वलादित्वस्याल्विधित्वेन तस्य स्थानिवत्त्वस्य निषेधो भवति। अतोऽनल्विधाविति कर्त्तव्यमेव।

**विशेषः –** "न ल्यपि" (६। ४। ६९) इति सूत्रस्थेन 'ल्यपि' ग्रहणेन ज्ञाप्यते यदनुबन्धकार्येष्वनल्विधाविति निषेधो न भवतीति। तथाहि प्रदायेत्यत्र कित्त्वं विशेषधर्मं स्थानिवत्त्वेनानीय घुमास्थेति प्राप्तस्येत्त्वस्यानल्विधाविति निषेधेन तद्वारणसम्भवे तदर्थं न ल्यपीत्यत्र ल्यपो ग्रहणं व्यर्थं, तदेव व्यर्थीभूय विज्ञापयति – "अनुबन्धकार्येषु अनल्विधावि"ति निषेधो न प्रवर्तत इति। सति ज्ञापने प्रदायेत्यत्रेत्त्ववारणाय ल्यपो ग्रहणं करोत्याचार्यः। एवं च प्रदीव्य प्रसीव्येत्यत्र स्थानिवत्त्वे न कित्त्वमानीय पुगन्तेति गुणस्य निषेधो भवति। अत्र वलादित्वस्यानयनेऽनल्विधाविति निषेधो प्रवर्त्तते इति। क्वचिच्चानल्विधाविति निषेधोऽनुबन्धकार्येष्वपि प्रवर्तत एव। "हलः श्नः शानज्झौ" (३। १। ८३) इत्यत्र स्थान्यादेशयोः शकारग्रहणस्य लिङ्गात्।

**( म० भा० ) – यदि तर्हि सामान्यमप्यतिदिश्यते विशेषश्च। "सत्याश्रये विधिरिष्टः"॥ ४॥**



**सति च वलादित्वे इटा भवितव्यम्। अरुदिताम् अरुदितम् अरुदित। किमतो यत् सति भवितव्यम्?**

**अयं भावः –** ननु अनल्विधिग्रहणेन सामान्यस्य विशेपस्य चातिदेशः स्वीक्रियते तर्हि – अरुदिताम् अरुदितम् अरुदितेत्यत्र वलादित्वे सति – इट् स्यात्। किमर्थं भवितव्यमिति भवान् आक्षिपति? भवत्येवात्रेड्विधिरत्र।

**( म०भा० ) – "प्रतिषेधस्तु प्राप्नोत्यल्विधित्वात्"॥ ५॥**

**प्रतिषेधस्तु प्राप्नोति। किं कारणम्? अल्विधित्वात्। अल्विधिरयं भवति। तत्रानल्विधाविति प्रतिषेधः प्राप्नोति?**

**अयं भावः –** अरुदितामित्यादिषु सति वलादित्वे निमित्त इड्विधिरिष्टोऽस्ति, किन्त्वत्रानल्विधाविति निषेधः प्राप्नोति। यतः तस्थसोः तान्तमावादेशौ भवतः। अत्र स्थानिवद्भावेन प्राप्तस्य विशेपस्य वलादित्वस्यानल्विधाविति निषेधो भविष्यति। तर्हि "रुदादिभ्यः सार्वधातुके" (७। २। ७६) इति वलादेः सार्वधातुकस्य विधीयमान इड् न स्यादिति।

**( म०भा० )–"न वानुदेशिकस्य प्रतिषेधादितरेणभावः"॥ ६॥**

**"न वैष दोषः। किं कारणम्? आनुदेशिकस्य प्रतिषेधात् अस्त्वत्राऽनुदेशिकस्य वलादित्वस्य प्रतिषेधः, स्वाश्रयमत्र वलादित्वं भविष्यति। नैतद् विवदामहे वलादिर्न वलादिरिति। किं तर्हि? स्थानिवद्भावात् सार्वधातुकमेषितव्यम्। तत्राल्विधाविति प्रतिषेधः प्राप्नोति।"**

**इत्यत्रास्त्येतत् तात्पर्यम् –** अरुदिताम् इत्यत्र स्थानिनो वलादित्वं प्रतिषि–ध्यते। आदेशे तु सुतराम् वलादित्वमस्ति। सार्वधातुकत्वं स्थानिवद्भावे नानीयते। सार्वधातुकस्याल्विधेरभावात्। अत्र शङ्कालुः पृच्छति – इड्विधायके सूत्रे इड्विधानायाल्विधिराश्रीयते। अतः सार्वधातुकत्वस्य स्थानिवद्भावेनानयनेऽल्विधाविति प्रतिषेधः प्राप्नोति।

**( म० भा० वा० ) – "आदेश्यल्विधिप्रतिषेधे कुरुवधपिवां गुणवृद्धिप्रतिषेधः"** ॥ ७॥

**आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्ध्योः प्रतिषेधो वक्तव्यः। कुर्वित्यत्र स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं च लघूपधत्वम्, तत्र लघूपधगुणः प्राप्नोति। वधकमित्यत्र स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं च लघूपधत्वम्, तत्र वृद्धिः प्राप्नोति। पिबेत्यत्र स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं च लघूपधत्वम्, तत्र ( लघूपध ) गुणः प्राप्नोति।**

**अयं भावः –** आदेशोऽस्यास्तीति आदेशी = स्थानी। यद्यादेश्यलाश्रयणे स्थानिवद्भावस्य प्रतिषेधः स्यात्तदा प्रयोगत्रये गुणवृद्धिप्राप्तिरूपदोषो भवति, तस्य प्रतिषेधो वक्तव्यः। यथा – कुरु, वधकः पिबेत्येषु प्रयोगेषु। तथाहि – 'कृ हन् पा' इत्यत्र जातस्याङ्गत्वस्य स्थान्यल्साधारणधर्माभावेनानल्विधावित्यनेन प्रतिषेधाभावात् आदेशेषु (कुरु, वध पिब) एतेषु लघूपधत्वं सुतरामेव विद्यते। प्रथमोदाहरणे गुणप्राप्तिः, द्वितीयोदाहरणेऽकारोपधावृद्धेः प्राप्तिः, तृतीयोदाहरणे लघूपधगुणप्राप्तिश्च भवति। तेषां प्रतिषेधो वक्तव्यः इति महाभाष्यकारः भावः। अस्य पक्षस्य दूषणोद्धारं भगवान् पतञ्जलिरनुपदमेव करिष्यति। अतोऽत्र लेखनं तस्य नोचितं प्रतिभाति।

अविशेषेण आदेश आदेशिनि चालाश्रयणं यत्र शास्त्रे भवति तत्रानल्विधाविति निषेधः प्रवर्त्तते इत्याशयेनाह भगवान् पतञ्जलिः –

"अस्तु तर्ह्यविशेषेण – आदेश आदेशिनि च।"

**( म० भा० वा० ) – "आदेश्यादेश इति चेत्सुप्तिङ्कृदतिदिष्टेषूपसंख्यानम्"॥ ८॥**

**( म० भा० ) – आदेश्यादेश इति चेत्सुप्तिङ्कृदतिदिष्टेषूपसंख्यानम् कर्त्तव्यम्॥ सुप् – वृक्षाय, प्लक्षाय। स्थानिवद्भावात्सुप्संज्ञा, स्वाश्रयं च वलादित्वं, तत्र प्रतिषेधः प्राप्नोति। सुप्॥ तिङ् – अरुदिताम् अरुदितम् अरुदित। स्थानिवद्भावात् सार्वधातुकसंज्ञा, स्वाश्रयं च वलादित्वं, तत्र प्रतिषेधः प्राप्नोति। तिङ्॥ कृद् – कृदतिदिष्टम् – भुवनम् सुवनम् धुवनम्। स्थानिवद्भावात् प्रत्ययसंज्ञा, स्वाश्रयं चाऽजादित्वं, तत्र प्रतिषेधः प्राप्नोति। किं पुनरत्र ज्यायः? आदेशिन्यल्याश्रीयमाणे प्रतिषेधः इत्येतदेव ज्यायः। कुत एतत्? तथाह्ययं विशिष्टं स्थानिकार्यमादेशेऽतिदिशति – "गुरुवद् गुरुपुत्र इति यथा" तद्यथा – गुरुवदस्मिन् गुरुपुत्रे वर्तितव्यमन्यत्रोच्छिष्टभोजनात् पादोपसंग्रहणाच्चेति। यदि च गुरुपुत्रोऽपि गुरुर्भवति तदपि कर्त्तव्यं भवति॥**



**अयं भावः –** यद्यपि पूर्वमादेशिन्यल्याश्रयणे दूषणमुक्तं भाष्ये, अत्र केवलमादेश अलाश्रयणे दूषणप्रदानमिष्टं तथापि भगवतोभयमत्रोक्तम् आदेश्यादेश इति।

वृक्षाय प्लक्षाय इत्यत्र "ङेर्यः" इत्यनेन सूत्रेण ङेः स्थाने यादेशो विहितः। तत्र सुपि चेति सूत्रे यञादित्वं सुप्त्वञ्च दीर्घविधानाय प्रार्थ्यते। तत्र सुप्त्वं तु नाल्त्ववृत्तिधर्मः, तस्य स्थानिवद्भावेन यकारे आनयनं भवति, परं यञादित्वमाल्त्ववृत्तिधर्मः। तस्यानयनेऽनल्विधाविति निषेधः प्राप्नोति। तिङादेशेष्वपि तथैव दोषः प्राप्नोति। यथा – अरुदिताम् अरुदितम् अरुदित। अत्र रुद्धातोर्लङि तस्य तसादेशे अडागमे तसः सार्वधातुकत्वे तसः स्थाने तामादेशे "वलादौ सार्व–धातुके परतो रुदादिभ्यो धातुभ्य इडागमः स्यादित्यर्थकेन" "रुदादिभ्यः सार्व–धातुके" (७। २। ७६) इति सूत्रेणात्र इटोऽप्राप्तिर्भवति। तथाहि – सार्वधातुक–त्वस्यालवृत्तित्वे निषेधाभावात् स्थानिवद्भावो भवति तामादिष्वादेशेषु।

किन्तु वलादित्वं त्वादेशवृत्तिधर्मः स चाल्वृत्तिः। तस्यानयने अनल्विधाविति निषेधः प्राप्नोति। तथा कृदतिदिष्टेष्वपि तथैव दूषणं भवति। यथा भुवनं सुवनं धुवनम्। अत्र भूधातोर्ल्युटि तस्यानादेशे सति तस्मिन् स्थानिवद्भावात् प्रत्ययत्वमानीयते। परन्त्वजादित्वमलरूपेणादेशे तिष्ठति। तत्रानल्विधाविति निषेधो भवति। अजादित्वस्याल्वृत्तिधर्मत्वात्। तेनात्रोवङादेशो न प्राप्नोति।

उभयत्र दूषणं प्राप्तमादेश आदेशिनि च तत्र किं पुनर्ज्याय? आदेशिन्यल्याश्रीयमाणे प्रतिषेध इत्येव ज्यायः। कस्मात् कारणात्? यतो ह्याचार्यो विशेष–कार्यम् (स्थानिकार्यम्) आदेशेऽतिदिशति। "गुरुवद् गुरुपुत्र इति यथा" तथाहि – गुरुवदस्मिनुरुपुत्रे वर्तितव्यमन्यत्रोच्छिष्टभोजनात् पादोपसंग्रहणाच्चेति। यथा

गुरुपुत्रो याज्यकुलानि गच्छति तस्मिन् काले याज्यकुलस्य तस्मिन् गुरुवत् समादरो धर्मः। यदि गुरुपुत्रे गुरुत्वमस्ति तदा विशेषकार्यस्यातिदेशापेक्षा नास्ति। तथा प्रकृते ''अरुदिताम्'' इत्यादिप्रयोगेषु तामाद्यादेशेषु प्रत्ययत्वं स्थानिवद्भावेनानीयते किन्तु तेष्वादेशेषु वलादित्वं सुतरामस्ति, तत्रातिदेशापेक्षा नास्ति। तत्रादेशिन्यल्याश्रीयमाणे दूषणोद्धारं हृदि निधायैतमेव पक्षं स्वीकुर्वन् भगवान् पतञ्जलिर्ब्रूते –

**''अस्तु तर्ह्यादेशिन्यल्याश्रीयमाणे प्रतिषेधः।'' ननु चोक्तं – आदेशिन्यल्विधि प्रतिषेधे कुरुवधपिबां प्रतिषेध इति। नैष दोषः। करोतौ तपरकरणनिर्देशात् सिद्धम्। पिबिरदन्तः। वधकमिति। नायं ण्वुल्, अन्योऽयमकशब्दः किदौणादिकः, रुचक इति यथा।''**

**अत्रेदं तात्पर्यम् –** आदेशिन्यल्याश्रीयमाणे स्थानिवद्भावस्य प्रतिषेधे दूषणत्रयमुक्तम् – ''कुरुबधपिबां गुणवृद्धिप्रतिषेधो व्यक्तव्य'' इति। अत्र दूषणोद्धारमित्थं विधत्ते। 'कुरु' इत्यत्र कृधातोः लोटि तस्य सिपि तनादिकृञ्भ्य उ (३।१।७९) इत्युप्रत्यये, गुणे रपरत्वे च अत उत् सार्वधातुके (६।४।११०) इत्यकारस्योत्वे सेर्ह्यादेशे तल्लोपे च जाते कुरुशब्दस्य सिद्धिर्भवति। अत्र लघूपधत्वाद्गुणप्राप्तिर्भवति। पिब् इत्यत्रापि लोड्मध्यमपुरुषस्यैकवचने पाधातोः पिबादेशे लघूपधत्वेन गुणप्राप्तिः। वधक इत्यत्राप्युपधावृद्धिः प्राप्नोति। इत्थं दूषणत्रयमुक्तं पूर्वम्। समाधत्ते – 'कुरु' इत्यत्र उत्वविधायके सूत्रे तपरकरणात् तपरस्तत्कालस्येति नियमात् ह्रस्वोकारस्यैव श्रवणं भविष्यति न तु गुणस्य। 'पिब्' इत्यत्रापि पिबादेशोऽदन्तः। तत्रेकारस्योपधात्वाभावेन गुणस्य प्राप्तिरेव नास्ति। 'वधकः' इत्यत्रापि नायं ण्वुल् प्रत्ययः। किन्तु कितौणादिकोऽकप्रत्ययः। 'बहुलं तणि' इति वार्तिके ''चक्षिङः ख्याञ् (२।४।५४)'' इति सूत्रस्थेन तण्पदेन संज्ञाछन्दसोः ग्रहणमिष्यते। किमिष्यते? अन्नवधकगात्रविचक्षणाजिराद्यर्थम्। तत्र अन्नादिषु अदो जग्ध्यादयो विधयो न भवन्तीति फलम्। वधक इत्यत्रापि ण्वुलि वधादेशो न भवति। वधशब्दो हलन्त इति धिया वृद्धिप्राप्तिर्दशिता। अदन्तत्वे तु अतो लोप इत्यकारस्य लुप्तत्वेनाचः परस्मिन् पूर्वविधाविति सूत्रेण स्थानिवद्भावात् अकारस्य तद्व्यवधानेन ञ्णित्परत्वाभावात् वकारोत्तराकारस्योपधात्वाभावाच्च न वृद्धिः।



**(म० भा० वा०) – ''एकदेशविकृतस्योपसंख्यानम्''॥ ९॥**

**(म० भा०) – एकदेशविकृतस्योपसंख्यानम् कर्तव्यम्। किं प्रयोजनम्? पचतु पचन्तु। तिङ्ग्रहणेन ग्रहणं यथा स्यात्।**

**अयं भावः –** एकदेशेन विकृतस्य स्थानिवद्भावो वक्तव्यः। यथा – पचतु इत्यत्र एरुः (३।४।८६) इति सूत्रेणेकारस्योत्वं भवति। तत्र पचति पचन्ति इत्यत्र पचति पचन्तीति समुदायावयवस्येकारस्य विकारो जातः। तस्मात् तस्य स्थानिवद्भावो वक्तव्यः। यतो हि यत्र साक्षात्स्थान्यादेशयोः चरितार्थं स्थानिवत् सूत्रमेकदेशेन विकृते कथं प्रवर्तेत?

अन्यथा लक्ष्यसिद्धिं मत्वा वार्तिकं प्रस्तौति –

**(म०भा०वा०)–''एकदेशविकृतस्यानन्यत्वात् सिद्धम्''॥ १०॥**

**एकदेशविकृतस्यानन्यवद्भवतीति तिङ्ग्रहणेन ग्रहणं भविष्यति। तद्यथा – श्वा कर्णे वा पुच्छे वा छिन्ने श्वैव भवति, नाश्वो न गर्दभः।**

**अयं भावः –** अत्र ''एरुः'' (३।४।८६) इत्युत्वे सति ''एकदेशविकृतन्यायेन इकारस्य विकारेऽपि तकारे तिङ्त्वमस्त्येव। यथा पुच्छे छिन्नेऽपि शुनि विकारादधिकोऽवशिष्टावयवसन्निवेशः श्वत्वजातेरभिव्यञ्जको भवति। प्रकृते तु ति इत्यत्रेकारस्यैका मात्रा, तकारस्य त्वर्द्धमात्रा। तत्रार्द्धाधिकविकारे जाते तकारे कथं तिङ्त्वं तिष्ठेत्। अर्द्धोऽर्धाधिकविकारे चायं न्यायो न प्रवर्तत इति। अत एव लक्ष्यस्य सिद्धिरनेन न्यायेन नैव सम्भवति। अत एवोपसंख्यानस्यावश्यकत्वे ''एकदेशविकृतमनन्यवदित्यत्र दूषणमपि वदति।

तथाहि –

**(म०भा०वा०)–''अनित्यविज्ञानं तु तस्मादुपसंख्यानम्''॥ ११॥**

**(म० भा०) – अनित्यविज्ञानं तु भवति। नित्याः शब्दाः। नित्येषु नाम शब्देषु कूटस्थैरविचालिभिवर्णैर्भवितव्यमनपायोपजनविकारिभिः। तत्र स एवायं विकृतश्चेत्येतन्नित्येषु शब्देषु नोपपद्यते। तस्मादुपसंख्यानम् कर्तव्यम्।**

व्याख्यानम् – 'पचतु' इति प्रयोगे इकारस्योकारे जातेऽवशिष्टे तकारे शुन इवानित्यत्वं प्राप्नोति। वर्णाश्च नित्याः सन्ति। ते कूटस्था अविचालिनोऽनपाया अनुपजना विकाररहिताश्च सन्ति। कृते तूपसंख्याने हीकारोकाराभ्यां स्थान्यादेशयोरनुमानात् तेः प्रसङ्गे तोर्विधानं जायते। आदेशग्रहणाच्च प्रत्यक्षानुमितयोश्च स्थान्यादेशयोः स्थानिवद्भावो भवतीति। अत उपसंख्यानम् कर्तव्यम्।

इदानीं भारद्वाजीयानां मतमुपस्थापयति – **(म० भा० वा०) – ''भारद्वाजीयाः पठन्ति'' – एकदेशविकृतेषूपसंख्यानं कर्तव्यम्। किं प्रयोजनम्? पचतु पचन्तु। तिङ्ग्रहणेन ग्रहणं यथास्यात्। किं च कारणं न स्यात्? अनादेशत्वात्। आदेशः स्थानिवदित्युच्यते। न चेमे आदेशाः? कथम्? रूपान्यत्वाच्च। अन्यत् खल्वपि रूपं – पचतीति। अन्यत्पचत्विति। इमेऽप्यादेशाः। कथम्? आदिश्यते यः स आदेशः। इमे चाप्यादिश्यन्ते।**

**अत्रेदं तात्पर्यम् –** भारद्वाजीयानामपि वार्तिकाणाम् मते स्थानिवद्भावस्योपसंख्यानं कर्तव्यमिति। किं प्रयोजनमुपसंख्यानस्येति चेद्? ब्रूते। पचतु पचन्तु। तिग्रहणेन तयोरपि ग्रहणं स्यात्। किं कारणमस्ति? तिग्रहणेन तोः, न्ति ग्रहणेन न्तोश्च ग्रहणं न भवति। तत्रेकारयोः स्थान्यादेशयोरभावात्। अन्यत् रूपमिति रूपान्यत्, तस्य भावो रूपान्यत्वं, तस्मात् रूपान्यत्वात्। पदसंज्ञायामिकार आश्रीयते न तूकारः। स च नास्त्यादेशः। ननु भोः! इमेऽपि तु शब्दादय आदेशाः। आदिश्यते यः सोऽप्यादेशो भवतीति।

पुनः शङ्कते – **(म० भा०) आदेशः स्थानिवदिति चेन्नाश्रितत्वात्। आदेशः स्थानिवदिति चेत् तन्न। किं कारणम्? अनाश्रितत्वात्। योऽत्रादेशो नासावाश्रीयते। यश्चाश्रीयते नासावादेशः। नैतन्मन्तव्यं – ''समुदाये आश्रीयमाणेऽवयवो नाश्रीयते'' इति। आभ्यन्तरो हि समुदायस्यावयवः। तद्यथा – वृक्षः प्रचलन् सहावयवैः प्रचलति।**

**आश्रय इति चेदल्विधिप्रसङ्गः। आश्रय इति चेदल्विधिरयं भवति। तत्रानल्विधाविति प्रतिषेधः प्राप्नोति। नैष दोषः। नैवं सति कश्चिदप्यनल्विधिः स्यात्। उच्यते चेदनल्विधाविति, तत्र प्रकर्षगतिर्विज्ञास्यते – साधीयो सोऽल्विधिरिति। कश्च साधीयः? यत्र प्राधान्येनालाश्रीयते। यत्र नान्तरीयकोऽलाश्रीयते नासावल्विधिरिति।**



**अत्रेदं तात्पर्यम् –** भवतु नाम, आदिश्यते योऽसावादेशः। एरुः इत्यत्रेकारस्थाने उकारः आदेशोऽस्ति। पदसंज्ञायां तेः स्थाने 'तु' आदेशः। उकारो नाश्रीयते। अतः न पदत्वं स्थानिवद्भावेन प्राप्नोति। ननु भोः ''नैतन्मन्तव्यम् – समुदाये आश्रीयमाणेऽवयवो नाश्रीयते'' इति। यथा वृक्षः प्रचलति तेन सह तस्यावयवा अपि प्रचलन्ति। प्रकृतेऽपि सुप्तिङन्तमित्यत्रेकारतकारावपि सन्निविष्टौ स्तः। अवयवातिरिक्तसमुदायस्याभावात्। तत्रेकारस्यापि पदत्वात्, तत्स्थाने य उकारः तस्यापि तिङ्त्वम् स्थानिवत्त्वेन। अतः पदसंज्ञा सिद्ध्यति।

**पदसंज्ञायामिकारस्य पदसंज्ञायाः निमित्तत्वमस्ति। अतोऽल्विधित्वात् अनल्विधाविति प्रतिषेधः प्राप्नोति। न च प्राप्नोति। कथम्? तत्राल्विधौ प्रकर्षगतिः विज्ञास्यते। साधीयो योऽल्विधिरिति। कश्च साधीयः। यत्र प्राधान्येनालाश्रीयते। यथा – अनचि चेत्यादौ यरमुद्दिश्य द्वित्वं विधीयते। यर्प्रत्याहारस्याल्प्रत्याहारान्तर्गतत्वात् भवति तत्राल्विधिः। सम्भवमात्रेणानुमीयमानेऽल्विधौ नास्ति प्रतिषेधः। प्राधान्यग्रहणं प्रत्यक्षोपलक्षणम् आनुमानिकस्याल्विधेर्व्यावर्तकम्।**

स्थानिवत्सूत्रे आदेशग्रहणं विना स्थानिवत्पदमहिम्नादेशपदलाभे सम्भवति पुनः आदेशपदं व्यर्थीभूय विज्ञापयति यदनुमानिकस्यापि स्थानिवद् भवतीति वदति भगवान् भाष्यकारः – **(म० भा०) – अथवोक्तमादेशग्रहणस्य प्रयोजनम् आदेशमात्रं स्थानिवद् यथा स्यादिति।**

**(म० भा० वा०)** –''अनुपपन्नं स्थान्यादेशत्वं नित्यत्वात्''॥ १२॥

**(म० भा०)** – ''स्थानी आदेश इत्येतन्नित्येषु शब्देषु नोपपद्यते। **किं कारणम्?** नित्यत्वात्। स्थानी हि नाम - यो भूत्वा न भवति। आदेशो **हि नाम**-योऽभूत्वा भवति। एतच्च नित्येषु शब्देषु नोपपद्यते। – यत् **सतो नाम विनाशः स्यादसतो वा प्रादुर्भाव''** इति।

**अत्रेदं तात्पर्यम्** – शब्दा नित्याः सन्ति। नित्यत्वं नाम यस्योत्पत्तिविनाशौ न भवतः। यस्य प्रागभावप्रध्वंसाभावौ न स्तः। प्रागभावाऽप्रतियोगित्वे सति ध्वंसाऽप्रतियोगित्वं नित्यत्वम् इति लक्षणं पर्यवसन्नम्। शब्दस्य स्थान्यादेशभाव-स्वीकारे तस्य नित्यत्वहानिर्जायते। स्थानी हि नाम य उत्पद्य विनश्यति। आदेशो हि नाम – असतः प्रादुर्भावः। अतो नित्येषु शब्देषु स्थान्यादेशभावो विरुणद्धि।

**(म० भा०) –''सिद्धं तु यथालौकिकवैदिकेष्वभूतपूर्वेऽपि स्थानशब्दप्रयोगात्''॥ १३॥**

**सिद्धमेतत्। कथम्? यथा – लौकिकवैदिकेषु च कृतान्तेषु अभूतपूर्वेऽपि स्थानशब्दो वर्तते। लोके तावत् – ''उपाध्यायस्य स्थाने शिष्यः'' इत्युच्यते न च तत्र उपाध्यायो भूतपूर्वो भवति। वेदेऽपि सोमस्य स्थाने पूतीकतृणान्यभिषुणुयादित्युच्यते। न च तत्र सोमो भूतपूर्वो भवति।**

**अत्रेदं तात्पर्यम्** – महाभाष्ये स्यान्यादेशयोः स्वरूपं पर्यालोचितम् – ''यो भूत्वा न भवति'' स स्थानी। ''योऽभूत्वा भवति स आदेश'' इति। अर्थात् भूतपूर्वस्थानी अभूतपूर्व आदेशः। तत्र भगवान् पतञ्जलिरन्यथा व्याख्याति लौकिकवैदिकोदाहरणं प्रस्तुत्य।

लौकिकेषु वैदिकेषु च सिद्धान्तेषु स्थानशब्दोऽभूतपूर्वेऽपि प्रयुज्यते। लोके तावत् – 'उपाध्यायस्य स्थाने शिष्यः' इत्युच्यते। तत्रोपाध्यायो भूतपूर्वो न भवति। वेदेऽपि – ''सोमस्य स्थाने पूतीकतृणान्यभिषुणुया'' दित्युच्यते। सोमः = तृणविशेषः। तत्र सोमतृणस्याभावे पूतीकतृणानि प्रतिनिधीयन्ते। तत्र सोमो भूतपूर्वो न भवति।

पक्षान्तरमाह –

**(म० भा० वा०) – ''कार्यविपरिणामाद्वा सिद्धम्''॥ १४॥**

**(म० भा०) – ''अथवा कार्यविपरिणामात् सिद्धमेतत्। किमिदं कार्यविपरिणामादिति? कार्या बुद्धिः सा विपरिणम्यते। ननु कार्याविपरिणामादिति भवितव्यम्। सन्ति चैव ह्यौत्तरपदिकानि ह्रस्वत्वानि। अपि**



**च ''बुद्धिसम्प्रत्यय'' इत्यनर्थान्तरम्। कार्या बुद्धिः कार्यः सम्प्रत्ययः। कार्यस्य सम्प्रत्ययस्य विपरिणामः – कार्यविपरिणामादिति।''**

**अत्रेदं तात्पर्यम्** – बुद्धेर्व्यतिरिक्तस्यान्यस्य विपरिणामासम्भवात् सामर्थ्यात् कार्यत्वेन बुद्धिर्गृह्यते। बुद्धेः विपरिणामो भवति न तु शब्दस्य। तेन नित्येषु शब्देष्वनित्यत्वरूपं दूषणं न भवति। ननु यदि कार्यपदेन बुद्धिर्गृह्यते तर्हि कार्याविपरिणामादिति प्रयोगेण भवितव्यम्? तत्र ''ङ्यापो संज्ञाच्छन्दसोर्बहुलमि''ति बहुलग्रहणेन विज्ञायते। तदेवोक्तम् ''भगवता सन्ति चैव ह्यौत्तरपदिकानि ह्रस्वत्वानि।'' इति। अपि च, सम्प्रत्यय इति बुद्धेः पर्यायः। तदेवोक्तं भाष्ये – ''बुद्धिसम्प्रत्यय'' इत्यनर्थान्तरमिति। कार्यस्य सम्प्रत्ययस्य विपरिणामः कार्यविपरिणामः, तस्मात् कार्यविपरिणामादिति।

**''परिहारान्तरमेवेदं पठितम्। कथं चेदं परिहारान्तरं स्यात्? यदि भूतपूर्वे स्थानशब्दो वर्तते। भूतपूर्वे चापि स्थानशब्दो वर्तते। कथम्? बुद्ध्या। तद्यथा – कश्चित् कस्मैचिदुपदिशति – प्राचीनं ग्रामादाम्रा इति। तस्य सर्वत्राम्रबुद्धिः प्रसक्ता। ततः पश्चादाह – ''ये क्षीरिणोऽवरोहवन्तः पृथुपर्णास्ते न्यग्रोधाः'' इति। स तत्राम्रबुद्ध्यां न्यग्रोधबुद्धिं प्रतिपद्यते। स ततः पश्यति बुद्ध्या आम्रांश्चापकृष्यमाणान् न्यग्रोधांश्चोपधीयमानान्। नित्या एव च स्वस्मिन् विषये आम्राः, नित्याश्च न्यग्रोधाः, बुद्धिस्तस्य विपरिणम्यते। एवमिहाप्यस्तिरस्मायविशेषेणोपदिष्टः, तस्य सर्वत्रास्तिबुद्धिः प्रसक्ता। सः अस्तेर्भूर्भवतीत्यस्तिबुद्ध्या भवतिबुद्धिं प्रतिपद्यते। स ततः पश्यति – बुद्ध्या अस्तिं चापकृष्यमाणं, भवतिं चोपधीयमानं, नित्य एव च स्वस्मिन् विषयेऽस्तिर्नित्ये। भवतिश्च। बुद्धिस्त्वस्य विपरिणम्यते।''**

**अयं भावः** – भूतपूर्वे स्थानशब्दो वर्तत इत्यभ्युपगम्य परिहारान्तरं बोद्धव्यमन्यथानर्थक्यप्रसङ्गः स्यात्। प्राच्यां वसतीति प्राक्। प्राचीशब्दात् अस्तातिप्रत्यये तस्य 'अञ्चेर्लुक्' (५।३।३०) इति लुकि, ''लुकृतद्धितलुकि'' (१।२।४९) इति स्त्रीप्रत्ययस्यापि लुकि ततः स्वार्थे खप्रत्यये प्राचीनशब्दो निष्पद्यते। प्राचीनशब्दः पूर्वदेशार्थे विद्यमानः।

लौकिकेषु वैदिकेषु कृतान्तेषु स्थानशब्दोऽभूतपूर्वे वर्तत इति प्रथमः परिहारः। द्वितीयः परिहारः कार्यविपरिणाद् वेति। अन्यः परिहारः इति परिहारान्तरम्। कथं चेदं परिहारान्तरं स्यात् यदि भूतपूर्वे स्थानशब्दो वर्तते। अयं स्थानशब्दो भूतपूर्वेऽपि वर्तते। कथम्? बुद्ध्या। तथाहि – कश्चित् कस्मैचिदुपदिशति – प्राचीनग्रामादाम्राः। प्राच्यां वसतीति प्राक्। देशवाचकात् प्राचीति शब्दात् "अस्तातिः" प्रत्ययः तस्याञ्चेर्लुक् अर्थात् ग्रामापेक्षया प्राग्देशे आम्राः सन्ति इति प्राप्तोपदेशस्य जनस्याम्रबुद्धिः प्रसक्ता। तदनन्तरम् तस्मै पुनरुपदेष्टोपदिशति ये क्षीरिणोऽवरोहवन्तः पृथुपर्णास्ते न्यग्रोधाः इति। स तत्राम्रबुद्ध्यां न्यग्रोधबुद्धिं प्राप्नोति। अर्थात् आम्रबुद्धिं परित्यज्य न्यग्रोधबुद्धिं करोति। तदनन्तरं सः यथाम्रेषु अपकर्षं न्यग्रोधेषूपधानमारोपयति। तथाऽत्रापि बुद्धिगतोत्पादविनाशयोः स्थान्यादेशभावस्य च शब्देष्वारोपः इति तात्पर्यम्। तथाहि – अस्तेर्भूरिति सूत्रेण अस्तेर्भूर्भवतीत्यस्तिबुद्ध्या भवतिबुद्धिं प्राप्नोति। स तत्र विचारयति यदस्तिबुद्धिं परित्यज्य, भवतिबुद्धिं प्रतिपद्यते। अपकर्षोह्युपधानञ्च बुद्धेरेव किन्तु अस्तिभवत्योरारोप्यते। नित्य एवास्तिर्नित्य एव भवतिश्चेति।

अतो बुद्धेरेव विपरिणामो भवति। शब्दास्तु नित्या एव।

**( म० भा० वा० ) –"अपवादप्रसङ्गस्तु स्थानिवत्त्वात्"॥ १५॥**

अपवादे उत्सर्गकृतं च प्राप्नोति। 'कर्मण्यण्' (३।२।१) 'आतोऽनुपसर्गेकः' (३।२।३) इति। केऽपि अणिकृतं प्राप्नोति। किं कारणम्? स्थानिवत्त्वात्।

**अत्रेदं तात्पर्यम्** – सामान्यधातुमात्रात् कर्मण्युपपदेऽण् प्रत्ययो भवतीति 'कर्मण्यण्' (३।२।१) इति सूत्रार्थः। आकारान्तेभ्योऽनुपसर्गेभ्यः कर्मण्युपपदे कः प्रत्ययो भवतीति "आतोऽनुपसर्गे कः" (३।२।३) इति सूत्रार्थः। तत्र पूर्वसूत्रस्योत्सर्गत्वं सर्वधातुभ्योऽण्प्रत्ययस्य विधानात्। द्वितीयस्योपसर्गभिन्नेभ्य आकारान्तेभ्यो धातुभ्यः 'क' प्रत्ययस्य विधानात् तस्यापवादत्वमस्ति। उत्सर्गापवादयोः प्रसङ्गे स्थानिवद्भावात् कप्रत्ययविषयेऽप्यण्कार्यं प्राप्नोति। ननूत्सर्गापवादयोः स्थान्यादेशभावाऽभावात् कथं स्थानिवत्त्वमिति चेदुच्यते। बुद्धिविपरि-



णाममात्रं यदि तर्हि स्थान्यादेशभावो भवितुमर्हति। अतो 'गोदः' इत्यादिप्रयोगाणां सिद्धिर्दुःशका स्यात्।

**( म० भा० वा० ) – "उक्तं वा" ॥ १६॥**

**( म० भा० ) – "किमुक्तम्? विषयेण नानालिङ्गकरणात् सिद्धमि"ति।**

**अत्रेदं तात्पर्यम्** – लक्ष्यमनुसृत्य भगवान् पाणिनिः कुत्रचित् णकारमितं करोति ककारमितं करोति। तेन ज्ञायते नोत्सर्गकृतमपवादे भवति। अत्र ज्ञापकं "गापोष्टक्" (३।२।८) इति कापवादस्य टकः कित्करणमस्ति।

पुनरतिप्रसङ्गम् वारयति –

**( म० भा० वा० ) अथवा – "सिद्धन्तु षष्ठीनिर्दिष्टस्य स्थानिवद्वचनात्"॥ १७॥**

**सिद्धमेतत्। कथम्? षष्ठीनिर्दिष्टस्यादेशः स्थानिवदिति वक्तव्यम्। तत् तर्हि षष्ठीनिर्दिष्टग्रहणं कर्तव्यम्? न कर्तव्यम्। प्रकृतमनुवर्त्तते। क्व प्रकृतम्? "षष्ठी स्थाने योगा" (१।१।४९) इति।**

**अत्रेदं तात्पर्यम्** – यत्र विधिशास्त्रे स्थानिनि षष्ठी आदेशे च प्रथमा स्यात् तत्रैव स्थानिवद्भावो भवति। यथा 'इको यणचि' इत्यत्रेकः इति षष्ठ्यन्तं पदम्। यणिति प्रथमान्तम् पदम्। उत्सर्गापवादयोस्तु न तथा। तर्हि षष्ठीनिर्दिष्टस्यस्थानिवद्भावो भवतीति वक्तव्यम्। प्रकृतमनुवर्तिष्यते। कुत्र प्रकृतम्? "षष्ठी स्थाने योगा" (१।१।४९) इत्यस्मात् षष्ठीति पदं स्थानिवत् सूत्रेऽनुवर्तिष्यते। यत्र षष्ठ्यन्तं पदं स्यात् तत्रैव स्थानिवद्भावः स्यादिति।

**( म० भा० ) "अथवाऽचार्यप्रवृतिर्ज्ञापयति – नापवादे उत्सर्गकृतं भवतीति यदयं श्यनादीन् कांश्चिच्छितः करोति। श्यन्, श्नम्, श्ना शः, श्नुरिति।"** (सुस्पष्टम्)

**( म०भा०वा० ) –"तस्य दोषस्तयादेश उभये प्रतिषेधः"॥ १८॥**

**तस्यैतस्य लक्षणस्य दोषः तयादेशे प्रतिषेधो वक्तव्यः। उभये देवमनुष्याः। तयपो ग्रहणेन ग्रहणाज्जसि विभाषा प्राप्नोति। नैष दोषः।**

**अयच् प्रत्ययान्तरम्। यदि प्रत्ययान्तरम्, 'उभयी'ति ईकारो न प्राप्नोति। मा भूदेवम्। मात्रच् इत्येवं भविष्यति। कथम्? 'मात्रजि'ति नेदं प्रत्यय-ग्रहणम्। किं तर्हि? प्रत्याहारग्रहणम्। क्व सन्निविष्टानां प्रत्याहार:? मात्र-शब्दात् प्रभृति आ अयचश्चकारात्। यदि प्रत्याहारग्रहणं, 'कति तिष्ठन्ति' अत्रापि प्राप्नोति। 'अत' इति वर्तते। एवमपि "तैलमात्रा" "घृतमात्रा" अत्रापि प्राप्नोति। सदृशस्याप्यसन्निविष्टस्य न भवति प्रत्याहारग्रहणेन ग्रहणम्।**

**अत्रेदं तात्पर्यम् –** उभये देवमनुष्याः इत्यत्र स्थानिवत्त्वेन दोषः प्राप्नोति। को दोषः? उच्यते – उभशब्दात् "संख्याया अवयवे तयप्" (५।२।४२) इति तयपि "उभादुदात्तो नित्यम्" (५।२।४४) इति तयपोऽयजादेशे बहुत्व-विवक्षायां जसि सर्वादीनि सर्वनामानि" (१।१।१) इति नित्यसर्वनामसंज्ञायां श्यादेशे अनुबन्धलोपे गुणे सति 'उभये' इति नित्यं रूपं भवति। स्थानिवदादेशोऽन-ल्विधाविति सूत्रेणायचः स्थानिवद्भावेना तयपो ग्रहणेन ग्रहणे 'प्रथमचरमत-याल्पार्धकतिपयनेमाश्च' (१।१।३३) इति विकल्पेन सर्वनामसंज्ञा प्राप्नोति। तेन उभये उभयाः इति रूपद्वयं प्राप्नोति। न चेष्यते। अत्र भगवान् पतञ्जलिर्दूषणं निराकरोति। नास्त्यत्र दोषः। भिन्न एवायमयच् प्रत्ययः। अन्यः प्रत्ययः इति प्रत्ययान्तरम्। यदन्यः प्रत्ययः तर्हि उभयीत्यत्र ङीपः प्राप्तिर्न जायते। भवतु तयप्लक्षणो ङीप् न स्यात्। किन्तु मात्रच्ग्रहणेन ङीप् भविष्यति। कथं मात्रच् इत्यनेन ङीप् स्यात्? उच्यते मात्रच् प्रत्याहारः। "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" (५।२।३७) इत्यस्य मात्रशब्दादारभ्य "तस्यायज्वा" (५।२।४३) इत्यस्य चकारान्तो मात्रच् प्रत्याहारः। उभयीत्यत्र नास्ति दोषः। यदि प्रत्याहारग्रहणं स्यात् तर्हि 'कति तिष्ठन्ति' इत्यत्रापि ङीप् प्राप्नोति। सत्यम् "अजाद्यतष्टाप्" (४।१।४) इति सूत्रात् 'अतः' इत्यस्यानुवृत्तिः क्रियते। तेन कति इत्यस्यादन्ता-भावात् ङीपः प्रसक्तिर्नास्ति। तैलमात्रा घृतमात्रा अत्रापि मात्रशब्दस्य प्रत्याहारान्त-र्गतत्वात् टिड्ढाणेति सूत्रेण ङीप् प्राप्नोति। तत्र, मात्रशब्दो द्विविधो वर्तते। प्रत्ययः प्रातिपदिकञ्चेति। टिड्ढाणञिति सूत्रे प्रत्ययानुकरणम् साहचर्यात्। अतो मात्रमिति प्रातिपदिके सत्यपि सादृश्ये तस्य ग्रहणं प्रत्याहारग्रहणेन न भवति। घृतमेव यस्यां सेति घृतमात्रा। अथवा घृतस्य मात्रेति घृतमात्रा।



अन्यातिव्याप्तिः स्मार्यते भगवता –

**(म० भा० वा०) – "जात्याख्यायां वचनातिदेशे स्थानिवद्भाव प्रतिवेधः"॥ १९॥**

**(म० भा०) – जात्याख्यायां वचनातिदेशे स्थानिवद्भावस्य प्रतिषेधो वक्तव्यः। व्रीहीभ्य आगत इत्यत्र "घेर्ङिति" (७।३।१११) इति गुणः प्राप्नोति। नैव दोषः। उक्तमेतत् – 'अर्थातिदेशात्' सिद्धम् इति।**

**अत्रेदं तात्पर्यम् –** "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" (१।२।५८) इति सूत्रेणैकस्मिन् यदेकवचनं प्राप्नोति। तस्मिन् प्रसङ्गे बहुवचन-स्यातिदेशो भवति। तत्र एकवचनत्वं स्थानिवद्भावेनादाय घिसंज्ञकस्य तस्य गुणः प्राप्नोति। इति कृत्वा दूषणमुपन्यस्तम्। तत्र भगवतोक्तमेतत् "अर्थातिदेशात् सिद्ध-मिति वचनात् दूषणं वारितम्।" तत्र बहुवचनशब्दः प्रत्ययपरो नास्ति किम्त्वर्थ-परकोऽस्तीति नास्ति स्थानिवद्भावेनोपात्तो दोषः।

**(म० भा० वा०) – "ङ्याब्ग्रहणेऽदीर्घः"॥ २०॥**

**ङ्याब्ग्रहणेऽदीर्घ आदेशो न स्थानिवदिति वक्तव्यम्। किं प्रयोजनम्? निष्कौशाम्बिः अतिखट्वः। ङ्याब्ग्रहणेण ग्रहणात् सुलोपो मा भूदिति। ननु च दीर्घादित्युच्यते। तन्न वक्तव्यं भवति। किं पुनरत्र ज्यायः? स्थानिवत्त्वप्रतिषेध एव ज्यायान्। इदमपि सिद्धं भवति। अतिखट्वाय अतिमालाय। 'याडापः' (७।३।११३) इति याण्ण भवति। अथेदानीम-सत्यपि स्थानिवद्भावे दीर्घत्वे कृते पिच्चासौ भूतपूर्वः इति कृत्वा 'याडापः' इति याट् कस्मान्न भवति? लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति। ननु चेदानीं सत्यपि स्थानिवद्भावे एतया परिभाषया शक्यमिहोपस्थातुम्। नेत्याह। न हीदानीं क्वचिदपि स्थानिवद्भावः स्यात्। तत् तर्हि ङ्याब्ग्रहणेऽ-दीर्घ इति वक्तव्यम्? न वक्तव्यम्। प्रश्लिष्टनिर्देशात् सिद्धम्। ङी-ई ईकारा-न्तात् आ-आप् आकारान्तादिति।**

**अत्रेदं तात्पर्यम्** – कौशाम्ब्या निष्क्रान्त इति निष्कौशाम्बिः ''निरादयः क्रान्ताद्यर्थे पञ्चम्या'' इति वार्त्तिकेन ''कुगतिप्रादयः'' (२।२।१८) इति सूत्रेण समासे समासत्वात् प्रातिपदिकत्वे सुपो लुकि प्रथमानिर्दिष्टत्वे 'निर्' शब्दस्योपसर्जनत्वे पूर्वनिपाते रेफस्य विसर्गे षत्वे ''एकविभक्ति चापूर्वनिपाते'' (१।२।४४) इति कौशाम्बीशब्दस्योपसर्जनत्वे गोस्त्रियोरुपसर्जनस्येति ह्रस्वे निष्कौशाम्बिः प्रयोगो निष्पद्यते। तत्र कृतह्रस्वस्येकारस्य स्थानिवत्त्वेन दीर्घेकारामादाय ''हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्'' (६।१।६८) इति सोर्लोपः प्राप्नोति। एवमतिमालः इत्यत्रापि स एव दोषः। अतो ङ्याब्ग्रहणे अदीर्घ आदेशो न स्थानिवदिति वक्तव्यम्। ननु हल्ङ्यादिसूत्रे दीर्घादिति पदमुपात्तम्, तत्सामर्थ्यादेव निष्कौशाम्बिरित्यादौ सुलोपो न भविष्यति। स्थानिवत्त्वस्य निषेधे सति दीर्घादिति न वक्तव्यम्। दीर्घादिति पठनीयमाहोस्वित् स्थानिवत्त्वस्य प्रतिषेधः कर्त्तव्यः? किं पुनरत्र ज्यायः? स्थानिवत्प्रतिषेध एव ज्यायान्। इदमपि सिद्धं भवति अतिखट्वाय अतिमालाय। स्थानिवद्भावादत्र ह्रस्वाकारस्य सत्त्वेन 'याडापः' (७।३।११३) इति सूत्रेण याडागमो न प्राप्नोति। नन्वितिपदेनात्र शङ्कते दीर्घवादी। स्थानिवद्भावेऽसत्यपि दीर्घस्य सुतराम् सत्त्वात् पिच्चासौ भूतपूर्वः इति कृत्वा 'याडापः' इत्यनेन याट् कथं न भवति? लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति परिभाषया तन्निषिध्यते। 'अतिखट्वाय' इत्यत्र मध्ये ह्रस्वे कृते स एव (पित्त्वविशिष्ट एव) इति बुद्धेर्विच्छेदः। तेन पिच्चासौ भूतपूर्वः इति बुद्धिर्नैकीकर्त्तुं शक्येतिभावः। न हि सत्यपि स्थानिवद्भावे परिभाषयाऽनया शक्यमिहोपस्थातुम्? इति चेत्? यतो हि सर्वत्रैव स्थानिवद्भावो न स्यात्। यदिष्यते तत् स्थानिन्यसत्त्वात्। तर्हि दीर्घग्रहणं कर्त्तव्यम्? न कर्त्तव्यम्। हल्ङ्यादिसूत्रे ङ्यापोः प्रश्लिष्टनिर्देशो वर्तते। ङी ई ईकारान्तात् आ–आप् आकारान्तादिति।

**(म० भा० वा०) – ''आहिभुवोरीट्प्रतिषेधः''॥ २१॥**

**आहिभुवोरीटः प्रतिषेधो वक्तव्यः। आत्थ अभूत्। अस्ति ब्रुग्रहणेन ग्रहणादीट् प्राप्नोति। कथम्? स्थानिवद्भावेन। तदर्थं स्थानिवद्भावस्य प्रतिषेधो न वक्तव्यः। यतो ह्याचार्यव्यवहारो ज्ञापयति यद् ब्रूस्थाने कृतस्याहादेशस्येट् न भवति।** कीदृशो व्यवहार इति चेदुच्यते – आचार्यो झलादिप्रकरणे ''आहस्थः'' (८।२।३५) इति थत्वं विधत्ते। ननु झलादिप्रकरणविहितस्य थत्वस्यान्यत् प्रयोजनमस्ति। भूतपूर्वगतिर्यथा विज्ञायेत, झलादिर्यो भूतपूर्व इति। तन्न, यद्येवं तर्हि ''ब्रुवः पञ्चानामादित आहो ब्रुवः'' (३।४।८४) इति सूत्रे ब्रुवः पञ्चानामादित आथो ब्रुवः इति वदेत्। न चोक्तं तथा। तस्मान्नास्ति ज्ञापकम्। अतः ''आत्थ'' इत्यत्र स्थानिवद्भावप्रतिषेधस्यावश्यकता नास्ति। थकारविधायकस्य झलादिप्रकरणस्थत्वेन नास्त्यत्रेटः प्रसक्तिः। एवम् अभूत् इत्यत्रापि स्थानिवद्भावस्यावश्यकता नास्ति। यतो हि ''अस्तिसिचोऽपृक्ते'' (७।३।९६) इति सूत्रे सकारद्वयस्य निर्देशोऽस्ति अस्तेः सकारान्तादिति। तच्च 'अभूत्' इत्यत्र अस्धातुर्नास्ति यः सकारान्तोऽस्ति।



**(म० भा० वा०) – ''वध्यादेशे वृद्धितत्वप्रतिषेधः''॥ २२॥**

(म० भा०) वध्यादेशे वृद्धितत्वयोः प्रतिषेधो वक्तव्यः। वधकं पुष्करमिति स्थानिवद्भावाद्वृद्धितत्वे प्राप्नुतः। नैष दोषः। उक्तमेतत्। नायं ण्वुल्, अन्योऽयमकशब्दः किदौणादिको रुचक इति यथा। पूर्वत्रव्याख्यातमिदमिति कृत्वा न पुनर्व्याख्यातम्।

**(म० भा० वा०) – ''इड्विधिश्च''॥ २३॥**

(म० भा०) इड् विधेयः। ''आवधिषीष्ट'' एकाच उपदेशेऽनुदात्तात् (७।२।१०) इति प्रतिषेधः प्राप्नोति। नैष दोषः। आद्युदात्तनिपातनं करिष्यते। स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति। एवमपि व्यपदेशिवद्भावो वक्तव्यः। यथैव हि निपातनस्वरः प्रकृतिस्वरं बाधते एवं प्रत्ययस्वरमपि बाधेत – आवधिषीष्टेति। आर्धधातुकीयाः सामान्येन भवन्ति अनवस्थितेषु प्रत्ययेषु। तत्रार्धधातुकसामान्ये वधिभावे कृते सति शिष्टत्वात् प्रत्ययस्वरो भविष्यति।

**अत्रेदं तात्पर्यम्** – 'आवधिषीष्ट' इत्यत्र ''आङो यमहनः'' इति सूत्रेण स्थानिवद्भावेन हन्त्वमादायात्मनेपदं भवति। स्थानिवत्त्वेनैव वधादेशेऽङ्गत्व–

मादाय। ''एकाच उपदेशेऽनुदात्तात्'' (७।२।१०) इति इटः प्रतिषेधः प्राप्नोति। स च नेष्टः। अतः स्थानिवद्भावस्याङ्गत्वानयने प्रतिषेधो वक्तव्यः। तत्प्रतिषेधेन वधादेशेऽङ्गत्वाभावान्नेट्प्रतिषेधो भवति। तस्मादिड्विधानाय स्थानिवद्भावस्य प्रतिषेधः कर्तव्य इति। अत्रानुदात्तत्वं स्थानिवद्भावेनादेशे (वधरूपे) नैवानेतुं शक्यम्। अनल्विधाविति प्रतिषेधात्। किन्तु 'एकाच उपदेशेऽनुदात्तात्' इति सूत्रे हन्रूपस्थान्यनुरूपानुदात्तस्य वधेरप्युच्चारणेनानुदात्तत्वं बोद्धव्यम्।

तस्मादङ्गत्वानयने स्थानिवद्भावस्य प्रतिषेधो वक्तव्यः। तत्र 'नैष दोषाः' इति कृत्वा परिहरति भाष्यकारः – आद्युदात्तनिपातनं करिष्यते। कस्य? प्रकृतितः स्थान्यनुरूपतया प्राप्तस्यानुदात्तत्वस्य। स निपातनस्वरः प्रकृतिस्वरस्य (अनुदात्तस्य) बाधको भविष्यति। तत्र प्रत्याक्षेपभाष्ये आद्युदात्तनिपातने उपदेशिवद्भावो वक्तव्यः। अन्यथा यथा निपातनस्वरः प्रकृतिस्वरं बाधते तथैव प्रत्ययस्वरमपि बाधेत। अत्र क्रमश्चेत्थम् – आवधिषीष्ट इत्यत्र हन्धातोर्विधीयमानः प्रत्ययो लिङ् तस्य स्थाने आत्मनेपदसंज्ञकः 'त' प्रत्ययः तस्य स्वरश्च। ततः तस्य ''लिङाशिषि'' इत्यनेनार्धधातुकसंज्ञा। तत् आर्धधातुकाधिकारे ''हनो वध लिङि'' इति वधादेशः तत्काले एव निपातनस्वरः। निपातनस्वरस्य सति शिष्टत्वात्, स यथा प्रकृतिस्वरमनुदातं बाधते तथैव प्रत्ययस्वरमपि बाधेत। तस्मात् निपातनस्वरे उपदेशिवद्भावो वक्तव्यः। परमिड्निषेधाय तत्र निपातनस्वरस्य उपदेशिवद्भावस्य च करणे गौरवं विद्यते। तस्मात् स्थानिवद्भावस्य प्रतिषेधो वक्तव्यः। इदानीं सिद्धान्तपक्षमाह भगवान् भाष्यकारः – नैष दोषः इत्यादि भाष्येण। तथाहि – आर्धधातुके इति यथा विषयसप्तमी वर्तते। तथैव ''लिङाशिषि'' इत्यत्रापि विषयसप्तमी विद्यते। अत आर्धधातुकसामान्ये वधिभावे कृते तस्याद्युदात्तानिपातने च कृते ततः प्रत्ययः सति शिष्टत्वात् तस्य स्वरश्च भविष्यति 'एकाच उपदेशेऽनुदात्तात्' इति सूत्रे एकग्रहणेनोपदेशावच्छेदेनानुदात्तत्वस्य लाभाद्, स्थान्युपदेशेऽनुदात्तत्वस्य सत्त्वेप्यादेशोपदेशे प्रकृतिस्वरं प्रबाध्य निपातनस्वरेणाद्युदात्तत्वस्य विधानाद् उपदेशत्वावच्छेदेनानुदात्तत्वस्याभावाद् एकाच इति सूत्रेणेण्निषेधाभावात् तस्य प्रतिषेधस्यावश्यकता नास्ति।



**(म० भा० वा०) – ''आकारान्तान्नुक्षुक्प्रतिषेधः''॥ २४॥**

**आकारान्तान्नुक्षुकोः प्रतिषेधो वक्तव्यः। विलापयति भापयते। लीभीग्रहणेन ग्रहणात् नुक्षुकौ प्राप्नुतः। (नैष दोषः) लीभियोः प्रश्लिष्टनिर्देशात्सिद्धम्। लीभी प्रश्लिष्टनिर्देशोऽयम् – ली ई ईकारान्तस्य, भी ई ईकारान्तस्य चेति।**

**अत्रेदं तात्पर्यम्** – वि पूर्वकाद् ङकारेत्संज्ञकात् णिजन्ताद् लीधातोः 'विभाषा लीयतेः' (६।१।५१) इति सूत्रेण विकल्पेनात्वे अर्तिह्रीत्यादिना पुकि लडादिके गुणेऽवादेशे 'विलापयति' रूपं भवति। 'ञि' इत्संज्ञकात् णिजन्तात् भीधातोः ''बिभेतेर्हेतुभये'' (६।१।५६) इत्यात्वे पुकि ततो लडादिकार्ये गुणेऽवादेशे भापयते इति रूपं भवति। आत्वाभावे ''लीलोर्नुग्लुकावन्यतरस्याम्। स्नेहविपातने'' (७।३।३९) इति (णिचि सति) नुकि लुकि च ततो लडादिकार्ये 'विलीनयति' 'विलीलयति' इति रूपद्वयं भवति।

एवं भीषयते इत्यत्रापि भीधातोः णिचि सति 'भियो हेतुभये षुक्' (७।३।४०) इति षुकि लडादिकार्ये सति भीषयते इति रूपं भवति। लीलीङ् श्लेषणार्थकयोः क्र्यादिदिवादिस्थयोः धात्वोर्ग्रहणमस्ति। तत्र ''विभाषा लीयतेः'' इत्यात्वे सति स्थानिवत्त्वे लीलोर्नुक्षुकावन्यतरस्यां स्नेहविपातने इति नुक्षुकौ प्राप्नुतः। तत्र, ली इत्यत्रेकारस्य प्रश्लेषो विद्यते। तेन कृतात्वयोः लीलीङोः नुक्षुकौ न भवतः। एवं भापयते इत्यत्रापि ''बिभेतेर्हेतुभये'' इति कृतात्वस्य भीधातोः 'भियो हेतुभये षुक्' इति षुगागमः प्राप्नोति। अत्रापि भी – ई इति प्रश्लेषो विद्यते। तेनेकारन्तस्यैव भीधातोः षुक् भवतीत्यर्थो बोधनीयः।

''लीभियोः प्रश्लिष्टनिर्देशात् सिद्धम्'' इत्यत्र भी ई ईकारान्तस्यैव षुगागमो भवति। ली ई ईकारान्तस्य नुक्षुकौ भवतः नत्वाकारान्तयोरिति भाष्ये दर्शितम्। तत्र लीभियोरित्यत्रेयङो निर्देशः सौत्रत्वादिति नागेशः। मन्मते द्वयोरीकारयोः सवर्णदीर्घे कृते ''अन्तादिवच्च'' इति सूत्रेण पूर्वान्तवद्भावेन धातुत्वमानीय ''अचिश्नुधात्वित्यादिनेयङ्विधानमुपपद्यते सुतराम्। तत्र नागेशः'' अचः परस्मिन् पूर्वविधाविति सूत्रमुपस्थाप्येयङो विधाने दीर्घेकारस्य व्यवधानं ब्रूते। तन्नास्त्यु–

चितम्। 'नासूया कर्तव्या यत्रानुगमः क्रियते' इत्यभियुक्तानां विरोधात्। अन्यच्च अचः परस्मिन्निति सूत्रार्थमनुसृत्य लक्ष्यन्नास्ति। 'क्षियो निष्ठायाम्' इत्यत्र ह्रस्वेकारो विद्यते। तेन इकारान्तस्य गुणप्राप्तिः भवति। अतः तत्र सौत्रत्वादियङादेश इति कथनं समीचीनमस्ति। न केवलं भगवतः पतञ्जलेरेव लीभियोरिति निर्देशोऽपि त्वाचार्यस्य पाणिनेरपि – तथाहि – 'भियोऽन्यतस्याम्' (६। ४। ११५) 'भियो हेतुभये षुक्' (७। ३। ४०)।

**(म० भा० वा०) – ''लोडादेशे शाभावजभावधित्वहिलोपैत्वप्रतिषेधः''॥ २५॥**

**(म० भा०) – ''लोडादेशे एषां प्रतिषेधो वक्तव्यः। शिष्टात् हतात् भिन्तात् कुरुताम् स्यात्। लोडादेशे कृते शाभावो जभावो धित्वं हि लोप एत्वमित्येते विधयः प्राप्नुवन्ति।''**

**अत्रेदं तात्पर्यम् –** शिष्टात् इत्यकारेत्संज्ञकादनुशिष्टार्थकात् 'शास् धातोः' लोटि लकारस्य मध्यमैकवचने सिपि सार्वधातुकत्वात् शपि तस्य लुकि च कृते सेर्ह्यपिच्चेति हित्वे तस्य तातङादेशे च कृते तस्य स्थानिवत्त्वेन शासो हौ परतः शादेशः स्यादित्यर्थके 'शा हौ' (६। ४। ३५) इत्यनेन शाभावः प्राप्नोति तस्य प्रतिषेधो वक्तव्यः। एवमन्येषु प्रयोगेषु तातङः स्थानिवद्भावेन क्रमशो जभावः, धित्वम् हि लोपः एत्वञ्चेति विधयः प्राप्नुवन्ति। तेषां प्रतिषेधो वक्तव्य इति। **(म० भा०) नैष दोषः। इदमिह, सम्प्रधार्यम् – लोडादेशः क्रियताम्, एते विधय इति किमत्र कर्त्तव्यम्? परत्वाल्लोडादेशः। अथेदानीं लोडादेशे कृते पुनः प्रसङ्गविज्ञानात् कस्मादेते विधयो न भवन्ति। सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेवे'ति कृत्वा।**

**अत्रेदं तात्पर्यम् –** प्रकृते लोडादेशविधायकं सूत्रमस्ति – ''तुह्योस्तातङ्ङाशिष्यन्यतरस्यामि''ति (७। १। ३५) शिष्टात् इत्यत्र शादेशविधायकं सूत्रं ''शा हौ'' (६। ४। ३५) हतात् इत्यत्र जादेशविधायकं 'हन्तेर्जः' (६। ४। ३६) इति सूत्रं वर्त्तते। भिन्तात् इत्यत्र ''हुझल्भ्यो हेर्धिः'' (६। ४। १०१) सूत्रं धित्वविधायकमस्ति। कुरुताम् इत्यत्र हिलोपविधायकम्। ''उतश्च प्रययादसंयोगपूर्वात्'' (६। ४। १०६) इति सूत्रमस्ति। स्तात् इत्यत्र ''ध्वसोरेद्धावभ्यासलोपश्च'' (६। ४। ११९) इतिसूत्रमेत्वविधायकमस्ति। उक्तेषु प्रयोगेषु शादेशादिविधीन् परत्वात् सूत्रं तातङादेशं विधत्ते। स्थानिवत्त्वेन शादेशादयो विधयः पुनः प्रसङ्गविज्ञानात् कथं न प्राप्नुयुरिति तन्न, सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति कृत्वा न पुनः प्राप्तिरिति भावः।



**(म० भा० वा०) – ''त्र्यादेशे स्रन्तस्य प्रतिषेधः''॥ २६॥**

**त्र्यादेशे स्रन्तस्य प्रतिषेधो वक्तव्यः।** तिसृणाम्। तिसृभावे कृते **त्रेस्त्रयः (७। १। ५३)** इति त्र्यादेशः प्राप्नोति। नैष दोषः। इदमिह **सम्प्रधार्यम् – तिसृभावः क्रियतां त्र्यादेश इति किमत्र कर्तव्यम्? परत्वात् तिसृभावः। अथेदानीं तिसृभावे कृते पुनः प्रसङ्गविज्ञानात् त्र्यादेशः कस्मान्न भवति? विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति।** (अत्र तिसृभावे कृते स्थानिवद्भावेन पुनः त्र्यादेशः प्राप्नोतीति तात्पर्यम्।)

**(म० भा० वा०) – ''आम् विधौ च''॥ २७॥**

**(म० भा०) – आम्विधौ च स्रन्तस्य प्रतिषेधो वक्तव्यः। चतस्रस्तिष्ठन्ति। चतसृभावे कृते चतुरनडुहोरामुदात्तः (७। १। ९८) इत्याम्प्राप्नोति।**

**नैष दोषः। इदमिह सम्प्रधार्यम् – चतसृभावः क्रियताम् चतुरनडुहोरामुदात्तः इत्यामिति किमत्र कर्त्तव्यम्? परत्वाच्चतसृभावः। अथेदानीं चतसृभावे कृते पुनः प्रसङ्गविज्ञानादाम् कस्मान्न भवति? सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति।**

(अत्रापि पूर्ववत् चतस्रादेशे स्थानिवद्भावेन त्र्यादेशः प्राप्नोतीति तात्पर्यम्।)

**(म० भा० वा०) – ''स्वरे वस्वादेशे''॥ २८॥**

**(म० भा०) – स्वरे वस्वादेशे प्रतिषेधो वक्तव्यः।** विदुषः पश्य **'शतुरनुमो नद्यजादी' (६। १। १७३)** अन्तोदात्तादित्येष स्वरः प्राप्नोति। **नैष दोषः 'अनुमः' इति प्रतिषेधो भविष्यति। 'अनुमः' इत्युच्यते। न चात्रनुमं**

**पश्यामः। अनुमः इति नेदमागमग्रहणम्। किं तर्हि? प्रत्याहारग्रहणम्। क्व सन्निविष्टानां प्रत्याहारः? उकारात् प्रभृत्यानुमो मकारात्। यदि प्रत्याहारग्रहणं लुनता पुनता अत्रापि प्राप्नोति। अनुम्ग्रहणेन न शत्रन्तं विशिष्यते। किं तर्हि? शतैव विशेष्यते। शता योऽनुम्कः। अवश्यञ्चैतदेवं विज्ञेयम्। आगमग्रहणं हि सतीह प्रसज्येत मुञ्चता मुञ्चतः इति।**

**अत्रेदं तात्पर्यम्** – विद्धातोः लटि तस्य शत्रादेशे तस्यापि 'विदेः' शतुर्वसुः इति शतुर्वस्वादेशे विद्वस् शब्दात् प्रातिपदिकात् शसि भत्वात् 'वसोः सम्प्रसारणम्' (६। ४। १३१) इति सम्प्रसारणे, पूर्वरूपे विभक्तिकार्ये च विदुषः इति रूपं भवति। अत्र वस्वादेशे सति स्थानिवद्भावेन ''शतुरनुमो नद्यजादी'' (६। १। १७३) इति शस्विभक्तेरुदात्तत्वं प्राप्नोति तच्च नेष्यते। अस्तु, अत्र तु नुमोऽभावादेवान्तोदात्तं न प्राप्नोति। 'अनुमः' इति प्रतिषेधात्। यदि नुम आगमस्य ग्रहणं क्रियते तदा दोषो नास्ति। इदमागमस्य ग्रहणं नास्ति किन्तु प्रत्याहारस्य। तर्हि क्व सन्निविष्टानां प्रत्याहारः? उच्यते – ''तनादिकृञ्भ्य उः'' (३। १। ७९) इत्यतः आरभ्य ''इदितो नुम् धातोः'' (७। १। ५८) इत्यस्य मकारान्तम् यावत्। यदि प्रत्याहारग्रहणं क्रियते तर्हि लुनता पुनता इत्यत्रापि 'अनुमः' इति प्रतिषेधः प्राप्नोति। अत्रेष्यतेऽन्तोदात्तत्वम्। तथाहि – यदि शतृप्रत्ययान्तस्यानुम्कत्वमिष्यते, तर्हि लुनता पुनता इत्यन्तोदात्तत्वं न प्राप्नोति। अनुमः इति निषेधो भवति श्ना प्रत्ययस्यानुम्प्रत्याहारेऽन्तर्भावात्। तस्मात् केवलस्य शतृप्रत्ययस्यैव 'नुमः' इति विशेषणम्। तस्मात् – अनुम् यः शतृप्रत्ययः तदन्तादन्तोदात्तात् परा नदी अजादिश्च शसादिर्विभक्तिरूदात्तेत्यर्थः सम्पद्यते। 'अनुमः' इत्यनेन शत्रन्तस्य विशेषणे आगमग्रहणे सतीह प्रतिषेधः प्राप्नुयात् मुञ्चता मुञ्चतः इति।

न तु शतुरपि प्रत्याहारान्तर्गतत्वात् तस्यापि 'अनुमः' इति प्रतिषेधः स्यात्, सूत्रारम्भसामर्थ्यात् शतुः प्रतिषेधो न भवति।

**(म० भा० वा०) – ''गोः पूर्वणित्वात्वस्वरेषु''॥ ३०॥**

**(म० भा०) गोः पूर्वणित्वात्वस्वरेषु प्रतिषेधो वक्तव्यः। चित्रग्वग्रम् शवलग्वग्रम्। ''सर्वत्र विभाषा गोः'' (६। १। १२२) इति विभाषापूर्वत्वं प्राप्नोति। नैष दोषः। तत्रानल्विधाविति प्रतिषेधो भविष्यति।**



**एवमपि 'चित्रगो अग्रम्' अत्र प्राप्नोति। णित्वम् – चित्रगुः चित्रगू चित्रगवः। 'गोतो णित्' (७। १। ९०) इति णित्वं प्राप्नोति।**

**आत्वम् – चित्रगुं पश्य शवलगुं पश्य 'आ-ओतः' इत्यात्वं प्राप्नोति। नैष दोषः। तपरकरणात् सिद्धम्। तपरकरणसामर्थ्यात् णित्वात्वे न भविष्यतः।**

**स्वरः – बहुगुमान् ''नगोश्वन्साववर्ण'' (६। १। १८२) इति प्रतिषेधः प्राप्नोति।**

**अत्रेदं तात्पर्यम्** – चित्रग्वग्रम् शवलग्वग्रम् चित्रा गावो यस्य सः चित्रगुः। चित्रगोः अग्रम् इति चित्रग्वग्रम्। शवला गौः यस्य सः शवलगुः। अत्र गोस्त्रियोरुपसर्जनस्येति ह्रस्वे सति पुनः स्थानिवद्भावेनौत्वमादाय ''एङः पदान्तादति'' (६। १। १०९) इति पूर्वरूपं प्राप्नोति। (यदा प्रकृतिभावो न भवति। प्रकृतिभावविधायकस्य वैकल्पिकत्वात्।) तत्र दोषो नास्ति। यतो हि अनुवृत्तस्य ह्रस्वविधानम् एव भवति। तस्य चाल्विधित्वम्। तत्रानल्विधाविति प्रतिषेधो भविष्यति। महाभाष्यवार्तिके 'गोऽपूर्व इत्यत्र सर्वत्र विभाषा गोः' (६। १। १२२) इति पूर्वत्वं प्राप्नोती'ति महाभाष्यकृत् व्याख्याति। तत्तु पूर्वरूपप्राप्ति-पूर्वकप्रकृतिभावोवङादेशयोरुपलक्षणम्। यद्यपि चित्रगु + अग्रम् इत्यत्र स्थानि-वत्त्वेन परत्वात् यणमपि बाधित्वा पूर्वरूपं स्यादिति पूर्वपक्षः। तत्रानुवृत्तस्येङोऽ-ल्विधित्वेनानल्विधाविति प्रतिषेधः स्यादित्युत्तरम् तस्मादेतदुक्तं दूषणं नास्ति। अत एवान्यद् दूषणं प्रस्तौति – एवमपि 'हे चित्रगो अग्रम्' अत्र प्राप्नोति। इत्युक्तं भाष्ये। यतो ह्यत्र सुतरामेङन्तत्वमस्ति, तस्मात् लक्षणप्रतिपदोक्तयोः प्रति-पदोक्तस्यैव ग्रहणेनेति परिभाषया प्रकृतिभावस्य प्राप्तिर्नास्ति तथापि स्थानिवद्भावेन गोग्रहणेन ग्रहणात् प्रकृतिभावः प्राप्नोति। एङन्तस्याल्विध्यभावे नानल्विधाविति निषेधो भवति।

तस्मात् स्थानिवत्त्वस्य निषेधः कर्तव्यः।

णित्वम् – चित्रगुः चित्रगू चित्रगवः 'गोतो णित्' इति णित्वं प्राप्नोतीत्युक्तं महाभाष्ये।

एवञ्च चित्रगुं पश्य शवलगुं पश्य "आ ओतः" इत्यात्वं प्राप्नोति। तयोरुत्तरं महाभाष्ये – तपरकरणात् सिद्धम्। तपरकरणात् णित्वात्वे न भविष्यतः। चित्रगुं पश्य शवलगुं पश्य इत्यत्र आ ओतः इति न्यासमादाय गकारस्यानपेक्षणात् ओकारस्याल्विधित्वात् स्थानिवद्भावस्यानल्विधाविति निषेधो भविष्यति। आ गोतः इति न्यासेन स्थानिवद्भावस्य प्राप्त्या पुनस्तथैव णित्वात्वयोः प्राप्तिः। अतः 'आ गोतः' इत्यस्य आ ओतः इति न्यासे तात्पर्यं विद्यते। सुस्पष्टं चैतत् "औतोऽम्शसोः" (६।१।९३) इति सूत्रस्थभाष्यकैयटे।

स्वरः – बहुगुमान् "न गोश्वन्सावर्ण" (६।१।१३२) इति प्रतिषेधः प्राप्नोति। इत्युक्तं भाष्ये।

अत्र बहुगुमान् इत्यत्र गु शब्दस्य स्थानिवद्भावेन गोत्वमादाय 'ह्रस्वनुड्भ्यां मतुप्' (६।१।१७६) इति सूत्रेण प्राप्तस्योदात्तस्य "न गोश्वन्" इति सूत्रेण निषेधः प्राप्नोति। तस्मात् स्थानिवत्त्वस्य प्रतिषेधः कर्तव्यः।

**(म० भा० वा०) – "करोतिपिबत्योः प्रतिषेधः"॥ ३०॥**

**(म० भा०) करोतिपिबत्योः प्रतिषेधो वक्तव्यः। कुरु पिबेति। स्थानिवत्त्वाल्लघूपधगुणः प्राप्नोति।**

**(म० भा० वा०) – "उक्तं वा"॥ ३१॥**

**किमुक्तम्? करोतौ तपरकरणात् सिद्धम्। पिबिरदन्तः।**

**अत्रेदं तात्पर्यम्** – अत उत् सार्वधातुके इति सूत्रे ह्रस्वोकारस्य तपरकरणं विहितमाचार्येण पाणिनिना। तेन ज्ञायते यदुकारस्यैव प्रयोगे श्रवणम् स्यान्नतु तस्य गुणेन विकारः स्यादिति। 'पिब्' इत्यत्रापि पाघ्राध्मेति सूत्रे पिबादेशोऽदन्तो–ऽस्तीति नास्त्युपधात्वमिकारस्य, वकारस्य व्यवधानत्वात्। अत उपधाया अभावेन गुणस्य नास्ति प्राप्तिः। तस्मात् स्थानिवद्भावस्य निषेधस्यावश्यकता नास्ति। एतच्चास्मिन्नेव सूत्रे अष्टमे वार्तिके व्याख्यातम्। ॥ १॥१॥५६॥

*****

## ॥ अचः परस्मिन् पूर्वविधौ॥ १।१।५७॥

**अत्र "काशिकावृत्तिः" –**

**पूर्वेणानल्विधौ स्थानिवद्भाव उक्तः। अल्विध्यर्थमिदमारभ्यते। आदेशः स्थानिवदिति वर्त्तते। अच इति स्थानिनिर्देशः। परस्मिन्निति निमित्तसप्तमी। पूर्वविधाविति विषयसप्तमी। अजादेशः परनिमित्तकः पूर्वविधौ कर्त्तव्ये स्थानिवद्भवति। पटयति, अवधीत्, बहुखट्वकः। पटुमाचष्ट इति णिचि टिलोपे कृते तस्य स्थानिव-द्भावाद् "अत उपधायाः" (अ.सू. ६।२।११६) इति वृद्धिर्नभवति। अवधीत्। अतो लोपस्य स्थानिवद्भावात् "अतो हलादेर्लघोः" (अ.सू. ७।२।७) इति हलन्तलक्षणा वृद्धिर्नभवति। बहुखट्वकः इति। "आपोऽन्यतरस्याम्" (अ.सू. ७।४। १५) इति ह्रस्वस्य स्थानिवद्भावाद् "ह्रस्वान्तेऽन्त्यात् पूर्वम्" इति स्वरो न भवति। अच इति किम्, प्रश्नः, अक्राष्टाम्, आगत्य। प्रश्न इति प्रच्छेर्नङ्प्रत्यये "च्छ्वोः शूडनुनासिके च" (अ.सू. ६।४।१९) इति छकारस्य शकारः परनिमित्तकस्तुकि कर्त्तव्ये न स्थानिवद्भवति। अक्राष्टाम् इति, 'झलो झलि' (अ.सू. ८।२।२६) इति सिचो लोपः परनिमित्तकः कृषेः षकारस्य "षढोः कः सि" (अ.सू. ८।२।४१) इति ककारे कर्त्तव्ये न स्थानिवद्भवति। आगत्येति। "वा ल्यपि" (अ.सू. ६।४।३८) इति अनुनासिकलोपः परनिमित्तकस्तु किकर्तव्ये न स्थानिवद्भवति। परस्मिन्निति किम्, युवजानिः बधूटीजानिः, वैयाघ्रपद्यः, आदीध्ये। युवजानिरिति। "जायाया निङ्" (अ.सू. ५।४।१३४) न परनिमित्तकस्तेन यलोपे न स्थानिवद्भवति। वैयाघ्रपद्य इति न परनिमित्तकः पादस्यान्तलोपः, पद्भावं न प्रतिबध्नाति। आदीध्ये इति। दीधीङ उत्तमपुरुषैकवचने टेरेत्वस्यापरनिमित्तकत्वाद् "यीवर्णयोर्दीधीवेव्योः" (अ.सू. ७।४।५३७) इति**

**लोपो न भवति। पूर्वविधाविति किम्, हे गौः, वाभ्रवीयाः, नैधेयः। हे गौरिति वृद्धिरजादेशः सम्बुद्धिलोपे कर्त्तव्ये न स्थानिवद्भवति। वाभ्रवीया इति वाभ्रव्यस्यामी छात्रा इति 'वृद्धाच्छः' इति छः। ''हलस्तद्धितस्य'' ( अ.सू. ६। ४। १५० ) इतियकारलोपे कर्त्तव्ये अवादेशो न स्थानिवद्भवति। नैधेयः।''आतो लोप इटि च''( अ.सू. ६।४।६४ ) इत्याकारलोपः, ''इतश्चानि ञः''( अ.सू. ४। १। १२२ ) इतिद्व्यज्लक्षणे प्रत्ययविधौ न स्थानिवद्भवति। इति काशिकावृत्तिः।**

अचः परस्मिन्निति सूत्रस्थे महाभाष्ये भगवान् पतञ्जलिः पदकृत्यनिर्वचनाधिकरणमारभते –

**''अच इति किमर्थम्?'' प्रश्नो विश्नः। द्यूत्वा स्यूत्वा। अक्राष्टाम्। आगत्य। प्रश्नः विश्नः इत्यत्र छकारस्य शकारः परनिमित्तकस्तस्य स्थानिभावाच्छे च ( ६। १। ७३ ) इति तुक् प्राप्नोति। 'अचः' इति वचनान्न भवति। नैतदस्ति प्रयोजनम्। क्रियमाणेऽपि अज्ग्रहणेऽवश्यमत्र तुगभावे यत्नः कर्त्तव्यः। अन्तरङ्गत्वाद्धि तुक् प्राप्नोति।**

**अत्रेदं तात्पर्यम्** – सूत्रेऽज्ग्रहणाभावे प्रश्नो विश्नः इत्यत्र प्रच्छ् विच्छ धातुभ्यां ''यजयाचयतविच्छप्रच्छरक्षो नङ्'' (३।३।९०) इति नङि ''च्छ्वोः शूडनुनासिके च'' (६।४।१९) इति छस्य शत्वे सति प्रश्नो विश्नः इति रूपे भवतः। अत्र ''अचः'' इति स्थानिवद्भावे सति 'छे च' (६।१।७३) इति तुक् प्राप्नोति। अज्ग्रहणे सति शादेशस्याजादेशत्वाभावात् तुक् स्यादिति मनुते। इदमपि निर्दिशति यद् तुकोऽभावस्य यत्नः कर्त्तव्यः। यदि तुकोऽभावः स्यात् तर्हि किं फलं स्यात्? इति सुस्पष्टं नोक्तं महाभाष्ये प्रदीपोद्योतयोश्च। तत्रत्यस्य भाष्यस्य तात्पर्यमिदमेवानुमीयते यत् ते प्रत्युदाहरणे भवितुमर्हतः इति। च्छ्वोरितिसूत्रापेक्षया छेचेति सूत्रस्यान्तरङ्गत्वम्। यतो हि बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्येऽन्तर्भूतान्यङ्गानि निमित्तानि यस्य तदन्तरङ्गम्। अन्तरङ्गशास्त्रीयनिमित्तसमुदायाद् बहिर्भूतानि अङ्गानि निमित्तानि यस्य तद् बहिरङ्गम्। छे चेति सूत्रे प्रकृतेरेव निमित्तम् तदपेक्षया शविधायकस्य च्छ्वोरिति सूत्रस्य प्रकृतिप्रत्ययौ निमित्तम्। अतोऽस्य बहिरङ्गता।'छे च' इहास्यान्तरङ्गता। अतः ''असिद्धं बहिरङ्गमन्तरङ्गे''





इति परिभाषया तुको बलवत्त्वम्। शादेशात् पूर्वं तुक् प्राप्नोति। ननु ''छे च'' इत्यस्य वर्णाश्रयत्वात् वार्णत्वम् शविधायकस्य छ्वोरित्यस्याङ्गाधिकारे पठितत्वात् आङ्गत्वम्। अन्तरङ्गमपि तुकं प्रबाध्य ''वार्णादाङ्गं वलीयः'' इति परिभाषया शकारविधानं स्यात्? तन्न, बलाबलविचारावसरे युगपदुभयोः प्राप्तिरावश्यकी। यथा 'कारकः' इत्यत्र यण्वृद्ध्योर्युगपत् प्राप्तिरस्ति। विश्नः इत्यत्र तु च्छ्वोरिति सूत्रे तकारच्छकारयोः समुदायनिर्देशसामर्थ्यात् सतुक्छकारः स्थानी जायते, तदनन्तरमेव शादेशः प्राप्नोति। युगपत् द्वयोः (तुगागमशादेशयोः) प्राप्त्यभावात् ''वार्णादाङ्गं वलीयः'' इत्यस्याः परिभाषायास्तयोर्विषयो नास्ति।

'अचः' परस्मिन्निति सूत्रे अचः इति पदसत्त्वे स्थानिवद् नैव प्राप्नोति। 'अचः' पदाभावे स्थानिवद्भावेन चकारविशिष्टच्छकार आनीयते। तदा छे चेति सूत्रे तस्मिन्निति परिभाषासूत्रेण छकाराव्यवहितस्य पूर्वस्य ह्रस्वस्य तुक् इत्यर्थः सम्पद्यते। अतः चकारस्य व्यवधानात्। छे चेति सूत्रेण तुगागमो न प्राप्नोति। अतो विश्नः प्रश्नः इति प्रत्युदाहरणे न भवतः। तस्मात् महाभाष्ये द्यूत्वा स्यूत्वा इति प्रत्युदाहरणे प्रदत्ते।

वस्तुतो महाभाष्ये – ''क्रियमाणेऽपि वा अज्ग्रहणेऽवश्यमत्र तुगभावे यत्नः कर्त्तव्यः'' इति भगवतो वाक्येन निश्चितोऽस्ति यद् यत्नेन तुगभावः साधयितुं शक्यते। तथाहि – 'यजयाचयतविच्छप्रच्छरक्षो नङ्' इति सूत्रे नङि प्रत्यये ङित्करणप्रयोजनं विश्नः इत्यत्र गुणाभावोऽस्ति। यद्यत्रान्तरङ्गत्वात् तुग् भवेत् तर्हि तस्य चुत्वे कृते चकारव्यवधानात् ''पुगन्तलघूपधस्य च'' (७।३।८६) इति सूत्रेण गुणस्य प्राप्तिर्नभवति। तत्र उपधाया अभावात्। गुणनिषेधाय 'नङ्' इति प्रत्यये ङित्करणस्य वैयर्थ्यं स्यात्। तदेव व्यर्थीयभूय विज्ञापयति विश्नः इत्यत्र तुगभावम्। तस्मात् अस्यां स्थितौ विश्नः प्रश्न इति प्रत्युदाहरणे भवतः।

**( म० भा० ) ''इदं तर्हि प्रयोजनं – द्यूत्वा स्यूत्वा। वकारस्य ऊठ् परनिमित्तकः। तस्य स्थानिवद्भावादचीति यणादेशो न प्राप्नोति। अच इति वचनाद् भवति। एतदपि नास्ति प्रयोजनम्। स्वाश्रयमत्राच्त्वं भविष्यति। अथवा योऽत्रादेशो नासावाश्रीयते, यश्चाश्रीयते नाऽसावादेशः।''**

**अत्रेदं तात्पर्यम्** – क्रीडाविजिगीषाद्यर्थकादुकारेत्संज्ञकाद् दैवादिकाद् दिव्धातोः क्त्वाप्रत्यये "च्छ्वोः शूडनुनासिके च" (६।४।१९) इति सूत्रेण वकारस्योठादेशे तस्य याणि विभक्तिकार्ये द्यूत्वा सिद्ध्यति। एवं तन्तुसन्तानार्थकादुकारेत्संज्ञकात् षिव्धातोः षकारसत्वे क्त्वा प्रत्यये च्छ्वोरिति वकारस्योठादेशे स्यूत्वा इति रूपं सिद्ध्यति। अत्र वकारादेशस्य परनिमित्तकत्वाद् स्थानिवत्-सूत्रेऽचः इति पदाभावेन वकारादेशस्य स्थानिवद्भावेन यणादेशो न प्राप्नोति। अचः इति पदपाठे तु स्थानिवद्भावो न प्राप्नोति। अजादेशत्वाभावात्। परिहारान्तरं वदति भगवान् पतञ्जलिः –

अथवा "स्वाश्रयमत्राच्त्वम् भविष्यति" इति। अर्थात् ऊठि सुतरामच्त्वमस्ति तत्र यण् भविष्यति। अथवोठ्विधायक आदेश ऊठ्रूपः, नासावाश्रीयते यण्विधायके सूत्रे। किन्तु तत्राच्निमित्तत्त्वेनाश्रीयते। अतोऽज्ग्रहणाभावेऽपि स्थानिव-द्भावस्य प्राप्तिर्नास्ति।

**(म० भा०) इदं तर्हि प्रयोजनम् – अक्राष्टाम्। सिचो** लोपः **परनिमित्तकः तस्य स्थानिवत्त्वात् "षढोः कः सि" (८।२।४)** इति **कत्वं प्राप्नोति। अच इति वचनान्न भवति। एतदपि प्रयोजनं नास्ति।** वक्ष्य-**त्येतत् पूर्वत्रासिद्धे न स्थानिवदिति।**

**अत्रेदं तात्पर्यम्** – अज्ग्रहणस्य अक्राष्टामिति प्रयोजनमस्ति। तथाहि – विलेखनार्थकात् कृष्धातोर्लुङि अडागमे तसि सार्वधातुकत्वात् प्राप्तशपं प्रबाध्य च्लौ तस्य स्पृशमृषेतिवार्तिकेन विकल्पेन सिजादेशे "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" (६।१।५९) इति सूत्रेणामागमे यणि हलन्तलक्षणायां वृद्धौ तसः तामादेशो "झलो झलि" (८।२।२६) इति सिचः स्लोपे ष्टुत्वे कृते अक्राष्टाम् इति रूपं भवति। अत्र सिचो लोपस्य परनिमित्तकत्वात् "षढोः कः सि" (८।२।४१) इति सूत्रेण कृषः षकारस्य कत्वं प्राप्नोति। अचः इति वचनान्न भवति। "एतदपि प्रयोजनं नास्ति वक्ष्यत्येतत् – पूर्वत्रासिद्धे न स्थानिवदिति" तथाहि – न पदान्तेति सूत्रे तृतीयं वार्तिकं "पूर्वत्रासिद्धे न" इत्युक्तमुदाहरणञ्च "अदुग्ध" इति प्रदत्तम्।



प्रपूर्णार्थकाद्दुहधातोः लुङि अटि तप्रत्यये च्लौ तस्य सिचं प्रबाध्य शल इगुपधादनिटः क्सः (३।१।४५) इति क्सादेशे हस्य धत्वे जश्त्वे "लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये" (७।३।७३) इति लुग्रहिते न सूत्रेणा-"लोऽन्त्यस्य" (१।१।५२) इति सहायेन क्सप्रत्ययस्याकारलोपे "झलो झलि" (८।२।२६) इति सूत्रेण स्लोपे "झषस्तथोर्धोऽधः" (८।२।४०) इति धत्वे अदुग्ध इति रूपं भवति। एतद्वार्तिकस्थस्योदाहरणस्य लुग्वेत्यादिना सूत्रेण सकारालोपे तु "पूर्वत्रासिद्धे" इति वार्तिकस्योदाहरणं न भवति। अत एव तत्र भाष्ये तत्रैवोक्तम् "लुग्ग्रहणं न कर्त्तव्यमिति।" लुग्वादुह इति सूत्रस्य सप्तमाध्याये पठितत्वात्। प्रकृतमुदाहरणं तु "अक्राष्टाम्" अस्ति। अत्र सिज्लोप-विधायकस्य त्रिपादीस्थत्वेन तस्य "अचः परस्मिन्निति सूत्रदृष्ट्याऽसिद्धत्वात्" कत्वं न प्राप्नोतीति। नास्त्येतत् "अज्ग्रहणस्य प्रयोजनमिति। प्रयोजनान्तरं वक्तव्यम्।"

**(म० भा०) इदं तर्हि प्रयोजनम् – आगत्य अभिगत्य।**

**तथाहि** – आङ्पूर्वकात् लृकारेत्संज्ञकाद्गम्धातोः क्त्वा प्रादिसमासे ल्यपि "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" (६।४।३७) इति मकारलोपे तुगागमे विभक्त्यादिकार्ये 'आगत्य' इति रूपं जायते। अत्र मलोपस्याजादेशत्वाभावात् स्थानिवद्भावो न भवति। अन्यथा मलोपस्य परनिमित्तकत्वात् "ह्रस्वस्य पिति कृति तुक्" (६।१।७१) इति तुग् न प्राप्नोति मकारस्य व्यवधानात्। एवमभिगत्य इत्यत्रापि व्याख्यानं विधेयम्।

**(म० भा०) अथ परस्मिन्निति किमर्थम् – युवजानिः वधूजानिः। द्विपादिका। वैयाघ्रपद्यः। आदीध्ये।**

**युवजानिः वधूजानिरिति – जायाया निङ् (५।४।१३४) न परनिमित्तकः। तस्य स्थानिवद्भावाद् लोपो व्योर्वलीति यलोपो न प्राप्नोति। परस्मिन्नितिवचनाद् भवति। नैतदस्ति प्रयोजनम्। स्वाश्रयमत्र वल्त्वं भविष्यति। अथवा योऽत्रादेशो नासावाश्रीयते, यश्चाश्रीयते नासावादेशः।**

**अत्रेदं तात्पर्यम्** – प्रकृतसूत्रे परस्मिन्नितिपदाभावे युवजानिः वधूजानि-रित्यत्र यलोपः न स्यात्। तथाहि – युवतिः जाया यस्य, वधूः जाया यस्येति

बहुव्रीहिसमासे समासत्वात् प्रातिपदिकत्वे सुपो लुकि पुंवद्भावे युवन्शब्दस्य नकार-लोपे ''जायाया निङ्'' (५।४।१३४) इति यकारोत्तरवर्तिन आकारस्य निङादेशे यलोपे स्वादिकार्ये युवजानिः वधूजानिरिति प्रयोगद्वयं सिद्ध्यति। परस्मिन्निति पदाभावे तु 'जायाया निङ्' इति सूत्रे पदनिमित्तत्वमनाश्रित्य निङादेशो विहितः। अतो निङादेशस्य स्थानिवत्त्वेनाकारमादाय वल्त्वाभावात् 'लोपो व्योर्वलि' (६।१।६६) इति यकारलोपो न स्यात्। परस्मिन्निति पदसत्त्वे तु स्थानिवत्त्वस्य प्राप्तिरेव नास्ति। यकारलोपे प्रयोगौ सिद्ध्यतः।

अत्र भगवान् पतञ्जलिरन्यथोक्तप्रयोगौ साधयति। नैतदस्ति प्रयोजनम् यतो हि स्वाश्रयमत्र वल्त्वम् अर्थात् निङादेशाश्रयमत्र वल्त्वं भविष्यति। अथवेति कृत्वा परिहारान्तरमपि प्रस्तौति – योऽत्रादेशो (निङादेशरूपः) स च लोपवि-धायके सूत्रे (लोपो व्योर्वलि) नाश्रितः। यश्चादेशो वल्त्वरूप आश्रीयते नासावाश्रित (नासौ निङादेशे आश्रितः।) अतः परस्मिन्निति पदाभावेऽपि स्थानिवद्भावो न भवति। तस्मात् परस्मिन् इत्यस्योक्तप्रयोगद्वयं प्रयोजनं नास्ति।

**(म० भा०) ''इदं तर्हि प्रयोजनम्'' – द्विपदिका त्रिपदिका॥**

**पादस्य लोपो न परनिमित्तकः, तस्य स्थानिवद्भावात् पद्भावो न प्राप्नोति। परस्मिन्निति वचनाद्भवति। एतदपि प्रयोजनं नास्ति। पुनर्लोपवचन-सामर्थ्यात् स्थानिवद्भावो न भविष्यति।**

**अत्रेदं तात्पर्यम्** – द्विपदिका त्रिपदिका। द्वौ द्वौ पादौ ददाति इति विग्रहे ''तद्धितार्थोत्तरपदसमाहारे च'' (२।१।५१) इति संख्यापूर्वो द्विगुः (२।१।५२) इति च तद्धितार्थविषये द्विगुसमासे प्रातिपदिकत्वात् सुपो लुकि ''पादशतस्य संख्यादेर्वुन् लोपश्च'' (५।४।१) इति वुनि पादान्तस्याकारस्य लोपे च अकादेशे ''पादः पत्'' (६।४।१३०) इति पदादेशे स्त्रीत्वविवक्षायां टापि इत्त्वे च स्वादिकार्ये द्विपदिका सिद्ध्यति। अत्र पादस्य लोपो न परनिमित्तकः। तस्मात् अकारलोपस्य स्थानिवद्भावात् पदादेशो न प्राप्नोति, पाद इत्यत्र कृत-समासान्तस्य निर्देशात्। सूत्रे परस्मिन्निति वचनात् स्थानिवद्भावो न भवति, तेन पदादेशो भवति। एतदपि प्रयोजनं नास्ति। यतो हि – यस्येति चेति भत्वादकारलोपे



सिद्धे पुनर्लोपविधानं स्थानिवत्त्वनिषेधार्थम्। तदुक्तं कयटेन – ''पुनर्लोपवचने सति लुप्यत एवाऽकारः, कार्येनाश्रीयत इत्यर्थः'' इति। एवं त्रीन् त्रीन् पादान् ददातीति विग्रहे त्रिपदिकेति प्रयोगेऽपि सिद्धेः प्रकारः सुगमः। अत्रापि परस्मिन्निति वचनस्य प्रयोजनं निरसनीयम्।

**इदं तर्हि प्रयोजनम् – वैयाघ्रपद्यः।**

अत्रापि परस्मिन्निति पदाभावे कृतस्यालोपस्य स्थानिवत्त्वेन पदादेशो न प्राप्नोति। तथाहि – व्याघ्रस्येव पादौ यस्य स व्याघ्रपाद्। अत्र बहुव्रीहिसमासे ''पादस्य लोपोऽहस्त्यादिभ्यः'' (५।४।१३८) इति पादान्तस्याकारस्य लोपे व्याघ्रपादो गोत्राऽपत्यमित्यर्थे 'गर्गादिभ्यो यञ्' (४।१।१०५) इति यञि भत्वे पादः पत् (६।४।१३०) इति पदादेशे स्वादिकार्ये वैयाघ्रपद्यः इति सिद्ध्यति। अत्राकारस्य लोपोऽनिमित्तकः। अचः इति सूत्रे परस्मिन्निति पदाभावे स्थानिवत्त्वेनाकारमादाय पदादेशो न प्राप्नोति। तस्मात् परस्मिन्निति पदं पठनीयम्। ततः पदादेशो भवति। ननु यस्येति चेति सिद्धेऽकारलोपे पुनः पादस्य लोप इति वचनसामर्थ्यात् तस्य स्थानिवद्भावो न भवतीति, तन्न, ''पादस्य लोपोऽह-स्त्यादिभ्यः'' इत्यस्य प्रयोजनमस्ति यत्र भसंज्ञा न स्यात्। कुत्र भसंज्ञा नास्ति? व्याघ्रपाद् सिंहपाद् इत्यत्र भसंज्ञा नास्ति, किन्तु समासान्तलोप इष्यते। तस्मात् स्थानिवदभावे ज्ञापकं न भवति। तस्मात् स्थानिवद्भावाभावार्थं परस्मिन्निति वचनम् आवश्यकम्।

**(म० भा०) इदं चाप्युदाहरणम् – आदीध्ये आवेव्ये। इकार-स्यैकारो न परनिमित्तकः। तस्य स्थानिवद्भावाद् ''यीवर्णयोर्दीधीवेव्योः'' (७।४।५३) इति लोपः प्राप्नोति। परस्मिन्निति वचनान्न भवति।**

**अत्रेदं तात्पर्यम्** – आङ्पूर्वकात् ङकारेत्संज्ञकाद् दीप्तिदेवनार्थकात् दीधीधातोः लटि तस्येटि तस्यैत्वे सार्वधातुकत्वात् शपि तस्य लुकि ''एरनेका-चोऽसंयोगपूर्वस्य'' (६।४।८२) इति यणि रूपम्। आदीधी-ए इत्यवस्थायाम् अत्रेकारस्यैत्वविधायकसूत्रं ''टित आत्मनेपदानां टेरे'' (३।४।७९) इति, तन्नास्ति परनिमित्तकम्। तस्य (एत्वस्य) स्थानिवद्भावाद् 'यीवर्णयोर्दीधी-वेव्योः'

(७।४।५३) इति सूत्रेणेवर्णस्य लोपः प्राप्नोति। तन्न, सूत्रे परस्मिन्निति पदपाठे स्थानिवत्त्वस्य निमित्ताभावान्न स्थानिवद्भावः। अत इवर्णाभावात् ईकारलोपस्य प्रासिर्नभवति। ननु शब्लुकः परनिमित्तकत्वात् शपः स्थानिवद्भावेन 'एरनेकाचः' इति यण् न स्यादिति चेन्न, क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानमिति न पदान्तसूत्रस्थमहाभाष्यवार्तिकेन तन्निषेधात्।

**(म० भा०) – ''अथ पूर्वविधाविति किमर्थम्?'' हे गौः। वाभ्रवीयाः। नैधेयः। हेगौरित्यौकारः परनिमित्तकः। तस्य स्थानिवद्भावादे ''ङ्ह्रस्वात् संबुद्धेः'' (६।१।६९) इति लोपः प्राप्नोति। पूर्वविधाविति वचनान्न भवति। नैतदस्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति – न संबुद्धिलोपे स्थानिवद्भावो भवतीति, यदयं ''एङ्ह्रस्वात् संबुद्धे''रित्येङ्ग्रहणं करोति। नैदस्ति ज्ञापकम्। गोऽर्थमेतत् स्यात्। यत्तर्हि प्रत्याहारग्रहणं करोति। इतरथा हि ओ ह्रस्वादित्येव ब्रूयात्।**

**अत्रेदं तात्पर्यम्** – गोशब्दात् सम्बोधनस्यैकत्वे विवक्षिते सौ सम्बुद्धिसंज्ञायां तस्य णिद्वद्भावे वृद्धौ सस्य रुत्वे विसर्गे च कृते गौः इति रूपं सिद्ध्यति। अत्र गौस् इत्यवस्थायां पूर्वविधावितिपदाभावे गौ स् इत्यौकारस्य परनिमित्तकत्वात् स्थानिवद्भावादेङ्त्वमादाय ''एङ्ह्रस्वात् संम्बुद्धेः'' (६।१।६९) इति सलोपः प्राप्नोति। स च नेष्टः। अतः पूर्वविधाविति पाठे सति स्थानिवद्भावस्य प्रासिर्नभवति। सुलोपस्य पूर्वविधित्वाभावात्। तत्र भगवान् भाष्यकारः उक्तप्रयोजनं खण्डयति। तथाहि एङ्ह्रस्वादिति सूत्रे एङ्ग्रहणस्यावश्यकता नास्ति। यतो हि हे अग्ने! हे वाद्यो! इत्यत्र विहितस्य गुणस्य स्थानिवद्भावेन ह्रस्वान्तत्वमादाय सुलोपसिद्धेः एङ्ग्रहणं व्यर्थम्, तदेव व्यर्थीयभूय विज्ञापयति यद् न सम्बुद्धिलोपे स्थानिवद्भावो भवतीति। ननु एङ्ग्रहणं तु सप्रयोजनमेव कुतः ज्ञापकत्वं स्यात्तस्य। कुत्र प्रयोजनं तस्येति चेत्, गोः इत्येवैङ्ग्रहणस्य प्रयोजनम्। यदि गौः इत्येव प्रयोजनं तर्हि 'ओह्रस्वादिति पठनीयम्' न च तत् पठितम्। अतः सम्बुद्धिविषये न स्थानिवद्भावो भवतीति ज्ञापनं स्थिरमेव।

अत्रैतद् विचारणीयं यदेङ्ह्रस्वादिति सूत्रविषयकसम्बुद्धिलोपे स्थानिवत्त्वस्य बाधः? आहोस्विद् एतत्सूत्रातिरिक्तविषयस्थले सम्बुद्धिलोपे स्थानिवत्त्वस्य बाधः? एङ्ह्रस्वादिति सूत्रसापेक्षमेव बाधनमित्युचितं प्रतिभाति। यदि एङ्ह्रस्वादिति सूत्रविषयके सम्बुद्धिलोपे न स्थानिवद्भावो भवतीति स्वीक्रियते तदा नागेशस्य गोर्थमेतदिति भाष्यप्रतीकमादाय ''अनिष्टलोपसिद्ध्यर्थमेव तत्, स्थानिवद्भावेनैङ्त्वादिति भावः।'' इति कथनं सूत्रसापेक्षबाधनमेवाभिमतम्।



द्वितीयपक्षे (एङ्ह्रस्वादिति सूत्रातिरिक्तविषयके सम्बुद्धिलोपे) बाधनमिष्यते चेत्, माले रमे इत्यादिस्थले टाबन्तस्य ''सम्बुद्धौ च'' (७।३।१०६) इति आकारस्यैत्वे कृते तस्य स्थानिवत्त्वेनाकारमादायापि ह्रस्वाभावात् एङ्ह्रस्वादिति सूत्रस्याप्राप्त्या ''हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्'' (६।१।६८) इति सूत्रेणैव विभक्तेर्लोपः स्यात्। अतः एतत्सूत्रातिरिक्तविषयकसम्बुद्धिलोपे स्थानिवत्त्वस्य बाधनं स्यात्, तदोक्तप्रयोगाणां सिद्धिर्न स्यात्।

तस्मात् एङ्ह्रस्वादिति सूत्रसापेक्षं बाधनं समुचितं प्रतिभाति। तेनाग्ने वायो। गौः। इत्यादय प्रयोगाः सिद्ध्यन्ति। एतत्सूत्रसापेक्षबाधनेनोक्तप्रयोगेषु स्थानिवत्त्वाभावे आद्युदाहरणद्वये एङन्तत्वमादाय सम्बुद्धिलोपः, तृतीये गौरित्युदाहरणे स्थानिवत्त्वाभावेऽनिष्टसम्बुद्धिलोपो न भवतीति।

**(म० भा०) – इदं तर्हि प्रयोजनम् वाभ्रवीयाः माधवीयाः। वान्तादेशः परनिमित्तकः। तस्य स्थानिवद्भावाद् 'हलस्तद्धितस्य' (६।४।१५०) इति यलोपो न प्राप्नोति। पूर्वविधावितिवचनाद् भवति। एतदपि प्रयोजनं नास्ति। स्वाश्रयमत्र हल्त्वं भविष्यति। अथवा योऽत्रादेशो नासावाश्रीयते, यश्चाश्रीयते नाऽसावादेशः।**

**अत्रेदं तात्पर्यम्** – बभ्रोर्गोत्रापत्यम् मधोर्गोत्रापत्यमिति च लौकिकविग्रहे ''मधुवभ्र्वोर्ब्राह्मणकौशिकयोः'' (४।१।१०६) इति यञि आदेरचो वृद्धौ ''भत्वात्'' ''ओर्गुणः'' (६।४।१४६) इति गुणे ''वान्तो यि प्रत्यये'' (६।१।७९) इति वान्तादेशे स्वादिकार्ये वाभ्रव्यः माधव्यः इति प्रयोगौ सिद्ध्यतः। अत्र वाभ्रव्यस्येमे माधव्यस्येमे इत्यर्थे 'वृद्छाच्छः' (४।२।११४) इति 'छ' प्रत्यये तस्य 'ईया' देशे भत्वादकारलोपे हलस्तद्धितस्य (६।४।१५०) इति सूत्राद् हल इत्यनुवर्तमाने ''आपत्यस्य च तद्धितेऽनाति'' (६।४।१५१) इति

यलोपे स्वादिकार्ये वाभ्रवीयाः माधवीयाः इति प्रयोगौ भवतः। 'वाभ्रव्य् ईय' इत्यवस्थायां वान्तादेशः परनिमित्तकः। तस्य स्थानिवत्त्वात् हलोऽभावात् 'हलस्तद्धितस्य' इति य्लोपो न प्राप्नोति। पूर्वविधाविति पाठे स्थानिवद्भावो न भवति, तेन य् लोपो भवति। स चेष्टः। भाष्यकारः पूर्वविधावित्यस्य प्रयोजनं निरस्यति। "एतदपि प्रयोजनं नास्ति" इत्युक्त्वा "स्वाश्रयमत्र हल्त्वम्" इति वदति। अर्थात् वान्तादेशे हल्त्वं सुतरामस्ति। तदाश्रयो लोपो भविष्यति। अथवेति पठित्वान्यं परिहारं वदति। अथवा योऽत्रादेशः नाऽसावाश्रीयते यश्चाश्रीयते, नाऽसावादेशः। अर्थात् अवादेशविधायके सूत्रे वान्त आदेशः। स च यलोपविधौ नाश्रीयते, तत्र हल्पदेन एवाश्रीयते। नासौ आदेशः। अतः स्थानिवद्भावाभावेन यलोपानापत्तिर्नास्तीतिभावः।

**( म० भा० ) "इदं तर्हि प्रयोजनम् – नैधेयः।" आकारलोपः परनिमित्तकः। तस्य स्थानिवद्भावाद् द्व्यज्लक्षणो ढग् न प्राप्नोति। पूर्वविधाविति वचनाद्भवति।"**

**अत्रेदं तात्पर्यम्** – निपूर्वकाद्धारणपोषणार्थकाद्धाधातोः "उपसर्गे घोः किः" (३।३।९२) इति भावेऽर्थे किप्रत्यये आर्धधातुकत्वात् "आतो लोप इटि च" (६।४।६४) इत्याकारलोपे "द्व्यचः" इत्यनुवर्तमाने "इतश्चानिञः" (४।१।१२२) इति ढकि तस्यैयादेशे भत्वाद् "यस्येति च" (६।४।१४८) इतीकारलोपे वृद्धौ स्वादिकार्ये नैधेयः इति रूपं भवति। अत्र 'निध् इत्यवस्थायाम्' आकारलोपस्य परनिमित्तकत्वात् तस्य स्थानिवत्त्वेन द्व्यचः इत्यस्य "इतश्चानिञः" इत्यत्रानुवर्तनात् द्व्यज्लक्षणो ढक् न प्राप्नोति। तत्र त्र्यच्त्वं सम्पद्यते। पूर्वविधाविति पाठे तु स्थानिवद्भावो न भवति। तेन द्व्यच्लक्षणस्य ढकोऽनापत्तिर्न भवति।

**( म० भा० ) – "अथ विधिग्रहणं किमर्थम्? सर्वविभक्त्यन्तः समासो यथा विज्ञायेत – पूर्वस्य विधिः पूर्वविधिः, पूर्वस्माद् विधिः पूर्वविधिरिति।"**

कानि पुनः पूर्वस्माद्विधौ स्थानिवद्भावस्य प्रयोजनानि? बेभिदिता। चेच्छिदिता। माथितिकः। अपीपचन्। बेभिदिता चेच्छिदितेति, अकारलोपे कृते



एकाज्लक्षण इट्प्रतिषेधः प्राप्नोति। स्थानिवद्भावान्न भवति। माथितिक इत्यकारलोपे कृते इसुसुक्तान्तात् कः इति कादेशः प्राप्नोति। स्थानिवद्भावान्न भवति। अपीपचन्नित्येकादेशे कृते अभ्यस्ताज्झेर्जुस्भवतीति जुस्भावः प्राप्नोति। स्थानिवद्भावान्न भवति।

**अत्रेदं तात्पर्यम्** – इरित्संज्ञकात् विदारणार्थकात् भिद्धातोः यङि द्वित्वेऽभ्यासगुणे बेभिद्य इत्यस्य धातुत्वात् तृचि तस्यार्धधातुकत्वात् यलोपे अल्लोपे च इटि अनङादिकार्ये बेभिदितेति रूपं भवति। अत्र अल्लोपे कृते 'एकाच उपदेशेऽनुदात्तात्' (७।२।१०) इतीट्प्रतिषेधः प्राप्नोति? इति चेन्न, पूर्वस्माद् विधाविति व्याख्यायाकारस्य लोपस्य स्थानिवद्भावेनाकारेण व्यवधानाद् वलाद्यार्धधातुकत्वं नास्ति। अतः इट्प्रतिषेधो न भवति। एकाज्लक्षणत्वाभावात्।

एवं मथितं पण्यमस्येति माथितिकः। अत्र 'तदस्य पण्यम्' (४।४।५१) इति ठकि प्रत्यये तस्येकादेशे भत्वादकारलोपे वृद्धौ स्वादिकार्ये 'माथितिकः' इति रूपं जायते। अत्राकारलोपे सति तकारान्तो माथित् इति शब्दोऽवशिष्यते, ततः "इसुसुक्तान्तात् कः" (७।३।५१) इति कादेशे सत्यनिष्टं रूपं भवति। यदि ठक् इत्यकारविशिष्टः अर्थात् ठेति संघातरूपो गृह्यते, तदाल्स्थानिकत्वाभावात् स्थानिवदादेशोऽनल्विधाविति स्थानिवद्भावेनाकारमादायेकः स्थाने कादेशो न प्राप्नोति माथितशब्दस्य तान्ताभावात्। यदि वर्णनिर्देशः ठ्रूपस्तदाऽल्विधित्वेन स्थानिवद्भावो न भवति। अस्यां स्थितौ पूर्वस्माद् विधिरिति पञ्चमीसमासस्येदं फलं नास्ति।

अपीपचन्नित्यत्र डुषकारयोरित्त्वे लोपे च ण्यन्तात् पच्धातोः लुङि अटि 'झि' आदेशे इकारलोपे सार्वधातुकत्वात् प्राप्तं शपं प्रबाध्य च्लौ "णिश्रि-द्रुस्रुभ्यः कर्त्तरि चङ्" (३।१।४८) इति चङादेशे "णेरनिटि" (६।४।५१) इति णेर्लोपे उपधाह्रस्वे 'चङि' इति द्वित्वे सन्वद्भावे इत्त्वे दीर्घे झकारस्यान्तादेशे पररूपे कृते अपीपचन्निितिरूपं जायते। तत्रान्तादेशे कृते चङकारस्य पररूपे कृते तस्यादिवद्भावात् "सिजभ्यस्तविदिभ्यश्च" (३।४।१०९) इति जुस्भावः प्राप्नोति। तन्न, णेर्लोपस्य स्थानिवद्भावे कृतेऽकारस्य व्यवधानात् न जुसः प्राप्तिः। पूर्वविधौ इत्यत्र पञ्चमीतत्पुरुषसमासं कृत्वा तस्य फलमुदाहरणत्रयं प्रस्तुतं भगवता।

अतोऽजपेक्षयोत्तरत्र जुसभावायापीपचन्नित्यत्र अचः परस्मिन्निति सूत्रेणैव णेः स्थानिवत्त्वेन तत्साधितम्।

**( म० भा० ) – नैतानि सन्ति प्रयोजनानि। कुतः? प्रातिपदिक-निर्देशोऽयम्। प्रातिपदिकनिर्देशाश्चाऽर्थतन्त्रा भवन्ति। न काञ्चित् प्राधान्येन विभक्तिमाश्रयन्ति। तत्र प्रातिपदिकार्थे निर्दिष्टे यां यां विभक्तिमाश्रयितुं बुद्धिरुपजायते, सा साऽश्रयितव्या।**

**अत्रेदं तात्पर्यम् –** पूर्वविधावित्यत्र द्विविधसमासलाभाय विधिग्रहणस्य प्रयोजनमुक्तम्। पूर्वस्य विधिः पूर्वविधिः तस्मिन् पूर्वविधाविति षष्ठीतत्पुरुष-समासः। अस्य फलं पूर्वत्र व्याख्यातं सोदाहरणम्। द्वितीयः समासः पञ्चमीतत्पुरुष-समासः – पूर्वस्माद् विधिरिति पूर्वविधिः तस्मिन् पूर्व विधाविति। पञ्चमीतत्पुरुष-स्योदाहरणानि – बेभिदिका। चेच्छिदिता। माथितिकः। अपीपचन्। एतान्यपि व्याख्यातानि। एतद्विधिग्रहणस्य प्रयोजनानि विधिग्रहणाभावेऽपि सिद्ध्यन्ति। तथाहि – पूर्वमित्येव पठनीयम्। पदसाधुत्वायैकवचनं भवति। न प्रथमा विभक्तिः कस्यचिदर्थविशेषस्य बोधिका। यतो हि प्रातिपदिकनिर्देशा अर्थाधीना भवन्ति। यथाऽत्रैव लक्ष्याण्यनुसृत्य पूर्वस्य विधिः, पूर्वस्माद् विधिरिति द्विविधः समासो लभ्यते। अतो विधिग्रहणाभावेऽपि लक्ष्याणि सिद्ध्यन्ति। तत्र महाभाष्यकाराः प्रयोजनान्तरं विधिग्रहणस्योपदिशति –

**( म० मा० ) – "इदं तर्हि प्रयोजनम् – विधिमात्रे स्थानिवद्यथा स्यादनाश्रीयमाणायामपि प्रकृतौ – वाय्वोः अध्वर्य्वोः। लोपो व्योर्वलि ( ६। १। ६६ ) इति यलोपो मा भूदिति।"**

**अत्रेदं तात्पर्यम् –** विधायकसूत्रे प्रकृतेराश्रयणं विनाऽपि स्थानिवद्भावाय विधिग्रहणस्य फलमस्ति। यथा – लोपो व्योर्वलि (६। १। ६६) इति सूत्रे वकारलोपस्य विधानमस्ति। स वकारः किं स्थानिकोऽस्तीति सूत्रे नास्त्युल्लेखः। एवमनचि चे'ति सूत्रे धकारस्य यर्रूपस्य द्वित्वमुक्तम्। उभयोरुदाहरणानि – वाय्वोः अध्वर्य्वोः। दद्ध्यत्र मद्ध्वत्र इति। दद्ध्यत्र मद्ध्वत्रेति प्रयोगयोः किंस्था-निकस्य यर इति प्रकृतेराश्रयणस्य द्वित्वविधायके सूत्रे नास्त्युल्लेखः।



आश्रीयमाणायां प्रकृतावप्युदाहरणानि –

'पादः पत्' इति कृतपादान्तलोपस्य ग्रहणमस्ति। यीवर्णयोर्दीधीवेव्यो-रित्यत्रेवर्णरूपा प्रकृतिराश्रीयते।

**( म० भा० ) "अस्ति प्रयोजनमेतत्? किं तर्हीति।"**

**अत्रेदं तात्पर्यम् –** लोपो व्योर्वलीति सूत्रेऽनाश्रीयमाणा प्रकृतिर्विद्यते, तर्हि एतदेव विधिग्रहणस्य प्रयोजनमिति पृष्टः तथैव स्वीकृतिमुखेनोत्तरति किं तर्हीति। अर्थात् किमन्यदित्यर्थः।

**( म० भा० ) "अपरविधाविति तु वक्तव्यम्। किं प्रयोजनम्?"**

**स्वविधावपि स्थानिवद्भावो यथा स्यात्। कानि पुनः स्वविधौ स्थानिवद्भावस्य प्रयोजनानि? आयन् आसन्। धिन्वन्ति कृण्वन्ति। दध्यत्र मध्वत्र। चक्रतुः चक्रुः।**

**इह तावदायन्नासन्निति, इणस्त्योर्यण्लोपयोः कृतयोरनजादित्वा-दाडजादीनाम् ( ६। ७। ७२ ) इत्याण् न प्राप्नोति। स्थानिवद्भावात् भवति।**

**धिन्वन्ति कृण्वन्तीति, यणादेशे कृते वलादिलक्षण इट् प्राप्नोति। स्थानिवद्भावान्न भवति।**

**दध्यत्र मध्वत्रेति, यणादेशे कृते संयोगान्तलोपः प्राप्नोति। स्थानि-वद्भावान्न भवति। चक्रतुः चक्रुरित्यत्र, यणादेशे कृते अनच्कत्वाद् द्विर्वचनं न प्राप्नोति। स्थानिवद्भावात् भवति।**

**अयं भावः –**अपरविधाविति तु वक्तव्यम्। तुशब्दः पूर्वविधावित्यस्य समुच्चायकः। वार्तिकस्यास्य किं प्रयोजनमिति पृष्टे स्वविधावपि स्थानिवद्भावार्थ-मित्युत्तरम्। स्वविधावित्यस्य प्रयोजनानि – अत्र स्वशब्देन स्थानिन आदेशस्य च ग्रहणमिष्यते – आयन्। आसन्। धिन्वन्ति कृण्वन्ति। दध्यत्र मध्वत्र। चक्रतुः चक्रुः। तत्रायन् इत्यत्र गत्यर्थकाद् णकारेत्संज्ञकात्'इ' धातोः लङि तस्य झ्यादेशे सार्वधातुकत्वात् शपि तल्लुकि इतश्चेतीकारलोपे 'झोन्तः' (७। १। ३) इति झकारस्यान्तादेशे संयोगान्तलोपे "इणो यण्" (६। ४। ८१) इति यणि

तस्याभीयत्वेनासिद्धत्वादाडजादीनामित्याडागमे (६।४।७२) वृद्धौ आयादेशे च कृते 'आयन्' इति रूपं भवति। एवमासन् इत्यत्र भुव्यर्थकात् अस्धातोः लङि बहुत्वविवक्षायां तस्य झ्यादेशे सार्वधातुकत्वात् शपि-तस्य लुकि झकारस्यान्तादेशे संयोगान्तस्य तकारस्य लोपे "श्नसोरल्लोपः" (६।४।१११) इत्यकारलोपे तस्याभीयत्वेनासिद्धत्वात् 'आडजादीनाम्' (६।४।७२) इत्याडागमे वृद्धौ आयादेशे आसन् इति रूपं भवति।

आयन् आसन् इत्यत्रैकदेशिभाष्ये इकारस्य यणादेशे अकारस्य च लोपे अजादित्वाभावात् आडजादीनामित्याडागमो न प्राप्नोति तदर्थं स्वविधावपि स्थानिवद्भावो वक्तव्यः। तेन यणादेशाल्लोपयोः स्थानिवद्भावेनाजादित्वमानीयाडागमो भवति। तन्नास्ति सम्यक्। द्वयोरुदाहरणयो "राडजादीनाम्" (६।४।७२) इति सूत्रापेक्षया इणो यण् (६।४।८१) श्नसोरल्लोपः (६।४।१११) इत्येतयोराभीयत्वेनासिद्धत्वात् अजादित्वेनाडागमः सुलभो भवतीति।

धिन्वन्ति कृण्वन्ति। 'धिवि प्रीणने' इत्यस्मादिकारेत्संज्ञकात् नुमि लटि बहुत्वविवक्षायां झिप्रत्यये सार्वधातुकत्वात् प्राप्तं शपं प्रबाध्य "उ" प्रत्यये वकारस्याकारादेशे तल्लोपे झेरन्तादेशे यणि 'धिन्वन्ति' इति रूपं जायते। एवं कृण्वन्ति। अत्र यणि कृते "आर्धधातुकस्येड्वलादेः" इतीडागमो वकारस्य प्राप्नोति। स्वविधाविति स्थानिवद्भावाद्, तस्य (इटः) प्राप्तिर्न भवति, वलादित्वाभावात्। अपरविधाविति खण्डनावसरेऽन्यथा साधितः। तथाहि पूर्वविधावित्यनेनादेशस्य सम्बन्धः करिष्यते। तेन वकाररूपादेशात् पूर्वमिडागमः प्राप्नोति। परनिमित्तकश्च यणादेशः, तस्य स्थानिवद्भावादजादित्वे लब्धे इडागमो न भविष्यतीति। दध्यत्र मध्यत्र। 'दधि अत्र' इत्यवस्थायाम् "इको यणचि" (६।१।७७) इति यणि कृते "संयोगान्तस्य लोप" (८।३।२३) इति यलोपः प्राप्नोति। अत्र यण् परनिमित्तकः स्वविधित्वेन स्थानिवत्त्वाद् यलोपो न भवति। अत्र महाभाष्ये यलोपाभावाय परिहारान्तरमुपस्थापितं "यणः प्रतिषेधो वाच्यः" इति। धिन्वन्ति कृण्वन्ति। अत्र विधिशब्दस्य भावसाधनपक्षमवलम्ब्येटः पूर्वत्वविधानात् स्थानिवद्भावेन वलादित्वाभावादिड् वारितः। चक्रतुः चक्रुः। अत्र कृ अतुस्, कृ उस् इति स्थिते ऋकारस्य यणि तस्यानच्कत्वात् एकाचो द्वे प्रथमस्येति द्वित्वं न



प्राप्नोति स्थानिवद्भावाद् द्वित्वं भवति। भाष्ये 'द्विर्वचनेऽचि' (१।१।५९) इति रूपातिदेशेनैकाच्त्वेन द्वित्वमुक्तम्।

अतोऽपरविधाविति स्थानिवद्भावस्यैतान्युदाहरणान्यन्यथा सिद्ध्यन्तीति भावः।

(म० भा०) **"यदि तर्हि स्वविधावपि स्थानिवद्भावो भवति, द्वाभ्यां देयं लवनम् – अत्रापि प्राप्नोति। द्वाभ्यामित्यत्रात्त्वस्य स्थानिवद्भावाद् दीर्घत्वं न प्राप्नोति। देयमितीत्त्वस्य स्थानिवद्भावाद् गुणो न प्राप्नोति। लवनमित्यत्र गुणस्य स्थानिवद्भावादवादेशो न प्राप्नोति। नैष दोषः। स्वाश्रया अत्रैते विधयो भविष्यन्ति।"**

**अयं भावः –** यदि स्वविधावपि स्थानिवद्भावो भवति तर्हि द्वाभ्यां देयं लवणमित्यत्राप्यात्त्वस्येत्त्वस्य च स्थानिवद्भावात् दीर्घगुणावादेशा न भविष्यन्ति। तथाहि – द्वाभ्यामित्यत्र द्विशब्दाद् भ्याम्विभक्तौ 'त्यदादीनामः' (७।२।१२०) इत्यत्वे 'सुपि च' (७।३।१२०) इति दीर्घो भवति। अत्रात्त्वस्य स्थानिवद्भावेनेत्त्वमादायादन्तत्त्वाभावाद् दीर्घो न स्यात्। एवं च देयमित्यत्र दाधातोः "अचो यत्" (३।१।९७) इति यति प्रत्यये 'ईद्यति' (६।४।६५) इत्याकारस्येत्वेकृते तस्य स्थानिवद्भावादात्त्वमानीय "सार्वधातुकार्धधातुकयोः" (इति गुणो न स्यात्) अथ च लवनमित्यत्र छेदनार्थकाद् लूञ् धातोः "नन्दिग्रहीत्यादिना ल्युप्रत्यये तस्यानादेशे गुणे कृते तस्य स्थानिवद्भावाद्" "एचोऽयवायावः' (६।१।७८) इत्यवादेशो न स्यात्। नैष दोषः। स्वाश्रयाः = ज्ञापकाश्रया एते विधयो न भविष्यन्ति। ज्ञापकत्वञ्चैतेषां सूत्राणाम् – "किंयत्तदोनिर्धारणे द्वयोरेकस्य "डतरच्" (५।३।९३) इत्यत्र द्वयोरिति पाठात् अनुमीयते यदत्राकारस्य स्थानिवद्भावो न भवति। 'एवं देयमृणे' इति सूत्रे देयमिति पाठान्निश्चीयते यदत्रेकारस्य स्थानिवद्भावो न भवति। एवं च लवनमित्यत्रापि 'किरतौ लवने' (६।१।१४५) इति सूत्रे लवनस्य पाठवलादुणस्य स्थानिवद्भावो न भवतीति।

(म० भा०) **"तत् तर्हि वक्तव्यम् – अपरविधाविति? न वक्तव्यम्। पूर्वविधावित्येव सिद्धम्। कथम्? न पूर्वग्रहणेनादेशोऽभि-**

**सम्बध्यते – अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद्भवति। कुतः पूर्वस्य? आदेशादिति। किं तर्हि? निमित्तमभिसंबध्यते – अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद्भवति। कुतः पूर्वस्य? निमित्तादिति।''**

**अयं भावः** – पूर्वविधावित्यस्य स्थाने पूर्वविधावित्यनेनैव स्थानिवद्भावो भविष्यति। अपरविधाविति न वक्तव्यम्। पूर्वविधौ पूर्वशब्दस्य सम्बन्धमादेशेन सह कृत्वायमर्थो न करिष्यते यत् परं निमित्तमाश्रित्य योऽजादेशः स पूर्वविधौ कर्त्तव्ये स्थानिवद् भवतीति, किन्तु पूर्वविधौ पूर्वशब्दस्य सम्बन्धो निमित्तेन सह विधाय सूत्रार्थः ईदृशः करिष्यते – परं निमित्तमाश्रित्य योऽजादेशः स निमित्तात् पूर्वस्य कार्ये कर्त्तव्ये स्थानिवद्भवतीति।

अतः पूर्वस्य निमित्तशब्देन सह सम्बन्धे सति आयन् आसन्। धिन्वन्ति, कृण्वन्ति। दध्यत्र मध्वत्र। चक्रतुः चक्रुरित्यादयः प्रयोगाः सिद्ध्यन्ति। अपरविधावितिवचनस्यावश्यकता नास्ति। एतेषु प्रयोगेषु निमित्तात् पूर्वस्य विधयः सन्ति।

**(म० भा०) ''अथ निमित्तेऽभिसंबध्यमाने यत्तदस्य योगस्य मूर्धाभिषिक्तमुदाहरणं तदपि संगृहीतं भवति? किं पुनस्तत्? पट्व्या मृद्व्येति। वाढं संगृहीतम्। ननु च ईकारयणाव्यवहितान्नासौ निमित्तात् पूर्वो भवति। व्यवहितेऽपि पूर्वशब्दो वर्तते। तद्यथा – पूर्वं मथुरायाः पाटलिपुत्रमिति।''**

**अयं भावः** – पूर्वशब्दस्य निमित्तशब्देन सहाभिसंबन्धे सर्वासु वृत्तिग्रन्थेषूपलभ्यमानत्वात् मूर्धाभिषिक्ते पट्व्यमृद्व्येत्युदाहरणेऽपि संगृहीते भवतः। पटु ई आ इत्यवस्थायामाकारं निमित्तं कृत्वा ''इको यणचि'' (६।१।७७) इति दीर्घेकारस्य यणि तस्य व्यवधानेनोकारस्य यण् न प्राप्नोति। तत्र, पूर्वशब्दस्य व्यवहितेऽपि प्रयोगो दृश्यते। यथा – ''पूर्वं मथुरायाः पाटलिपुत्रमित्युदाहरणे मथुरापाटलिपुत्रयोर्मध्येऽनेकानि नगराणि सन्ति। तथाप्यत्र व्यवहितेऽपि पूर्वशब्दस्य प्रयोगो जायते, तथैव पट्व्येत्यत्रापि ज्ञेयम्।''



**(म० भा०) ''अथवा पुनरस्त्वादेश एवाभिसंबध्यते। कथं यानि स्वविधौ स्थानिवद्भावस्य प्रयोजनानि? नैतानि सन्ति। इह तावदायन् आसन्। धिन्वन्ति कृण्वन्तीति। अयं विधिशब्दोऽस्त्येव कर्मसाधनो – विधीयते विधिरिति। अस्ति च भावसाधनो – विधानं विधिरिति। तत्र कर्मसाधनस्य विधिशब्दस्योपादाने न सर्वमिष्टं संगृहीतमिति कृत्वा भावसाधनस्य विधिशब्दस्योपादानं विज्ञास्यते – पूर्वस्य विधानं प्रति, पूर्वस्य भावं प्रति – पूर्वः स्यादितिस्थानिवद्भवतीत्येवमाड्भविष्यति, इट् च न भविष्यति।'' दध्यत्र मध्वत्र चक्रतुः चक्रुरिति परिहारं वक्ष्यति।**

**अयं भावः** – पूर्वशब्दस्यादेशेन सह संबन्धेन स्वविधौ उक्तानि आयन् आसन्नित्यादीन्युदाहरणानि कथं सिद्ध्यन्ति? तानि अन्यथा सेत्स्यन्ति। तद्यथा – पूर्वविधावित्यत्र विधिशब्दस्य द्विधा व्युत्पत्तिर्विद्यते। प्रथमा – विधीयते विधिरिति अयं कर्मसाधनपक्षः। द्वितीया – विधानं विधिरिति भावसाधनपक्षः। तत्र कर्मसाधनपक्षे पूर्वविधिशब्दस्यार्थो भवति – पूर्वस्य कार्ये कर्त्तव्ये आदेशः स्थानिवद्भवतीति। तत्रायन् आसन्नित्यत्र यणल्लोपयोरादेशयोः पूर्वं किमपि नास्ति यस्य कार्यं स्यात्। अतः कर्मसाधनपक्षस्वीकारे आयन् आसन् इत्यनयोः सिद्धिर्न भवति। भावसाधनपक्षस्य तात्पर्यं भवति – पूर्वस्य विधाने पूर्वत्वानयने च। अतो यणल्लोपाभ्यामायन् आसन् इत्यत्राडागमस्य पूर्वत्वविधानमस्ति। अतः पूर्वविधौ इत्यत्र विधिशब्दस्य विधानं विधिरितिभावसाधनपक्ष एव व्यापकत्वात् स्वीक्रियते। धिन्वन्ति कृण्वन्तीत्यत्रापि इडागमे पूर्वत्वविधानमस्तीति स्थानिवद्भावो भवति। तेनेडागमो न भवति तत्र वलादित्वस्याभावात्। दध्यत्र मध्वत्रेत्यत्र स्थानिवत्त्वस्याभावे संयोगान्तलोपे ''यणः प्रतिषेधो वाच्यः'' इत्युपायान्तरेण सिद्धिर्बोद्धव्येति। चक्रतुः चक्रुरित्यत्रापि स्थानिवत्त्वाभावे 'द्विर्वचनेऽचि' (१।१।५९) इति रूपातिदेशे एकाच्त्वेन द्वित्वं भविष्यतीति।

**(म० भा०) ''कानि पुनरस्य योगस्य प्रयोजनानि?''**

**''स्तोष्याम्यहं पादिकमौदवाहिं ततः श्वोभूते! शातनीं पातनीं च।**
**नेतारावाऽऽगच्छतं धारणिं रावणिं च ततः पश्चात् स्त्रंस्यते ध्वंस्यते च॥''**

**इह तावत् पादिकमौदवाहिं शातनीं पातनीं धारणिं रावणिमिति। अकारलोपे कते पद्भाव ऊडल्लोपष्टिलोप इत्येते विधयः प्राप्नुवन्ति। स्थानिवद्भावान्न भवन्ति। स्रंस्यते ध्वंस्यते। णिलोपे कृते ''अनिदितां हल उपधायाः क्ङिति'' (६।४।२४) इति नलोपः प्राप्नोति। स्थानिवद्भावान्न भवति।**

**नैतानि सन्ति प्रयोजनानि। ''असिद्धवदत्राभात्'' (६।४।२२) इत्यनेनाप्येतानि सिद्धानि।**

**इदं तर्हि प्रयोजनम् – याज्यते वाप्यते। णिलोपे कृते 'यजादीनां किति' (६।१।१५) इति सम्प्रसारणं प्राप्नोति। स्थानिवद्भावान्नभवति। एतदपि नास्ति प्रयोजनम् – यजादिभिरत्र कितं विशेषयिष्यामो यजादीनां यः किदिति। कश्च यजादीनां कित्? यजादिभ्यो यो विहित इति। न चायं यजादिभ्यो विहितः।**

**अत्रेदं तात्पर्यम्** – पादिकमिति। पादाभ्यां जयतीत्यर्थे तेन दीव्यति खनति जयति जितमिति ठकि तस्येकादेशे भत्वादकारलोपे स्वादिकार्ये पादिकमिति भवति। अत्राकारलोपे पादः पदिति पद्भावः प्राप्नोति। अचः परस्मिन्निति स्थानिवद्भावान्न भवति। अथवा चरत्यधिकारे पर्पादिभ्यः ष्ठन् (४।४।१०) इति ष्ठनि कृते ठस्येकादेशे भत्वात् पदादेशे प्राप्तेऽपि अल्लोपस्य स्थानिवद्भावान्न प्राप्नोति। ''पादः पदि''ति पर्पादिभ्यः ष्ठन् इति सूत्रस्थवचनेन पदादेशे सति पदिकमिति रूपं भवति।

औद्वाहिमिति। उदकं वहतीत्यर्थेऽणि उपधावृद्धौ उपपदसमासे सुपो लुकि ''उदकस्योदः संज्ञायाम्'' (६।३।५७) इति उदकस्थाने उदादेशे आदिवृद्धौ औद्वाहः इति रूपं भवति। तस्यापत्यमित्यर्थे इञि प्रत्यये सति औद्वाहिः तम् औद्वाहिम्। अत्र इञि प्रत्यये कृते भत्वादल्लोपे कृते वाह ऊठ् (६।४।१३२) इति वकारस्योठादेशः प्राप्नोति। अचः परस्मिन्निति स्थानिवद्भावादूठादेशो न भवति। श्वोभूतिर्नामा कश्चन शिष्यः सम्बोधने हेश्वोभूते! शातनी पातनीमिति। विशरणगत्यवसादनार्थकात् लृकारेत्संज्ञकात् शद्धातोर्णिचि वृद्धौ सत्यां शादि इत्यस्मात् ''ण्यासश्रन्थो युच्'' (३।३।१०७) इति स्त्रीत्वविवक्षायां युचि अनादेशे ''षिद्गौरादिभ्यश्च'' (४।१।४१) इति ङीषि भत्वादकारलोपे कृते स्वादिकार्ये



शातनीम्। पातनीमिति। अत्रापि गत्यर्थकात् ण्यन्तात् पाति इत्यस्मात् पूर्ववद् युजादिकार्यम्। उभयत्राकारलोपे ''अनिदितां हल उपधायाः क्ङिति'' (६।४।२४) इति नलोपः प्राप्नोति। अचः परस्मिन्निति स्थानिवद्भावान्न भवति नलोपः।

तत्र भगवान् भाष्यकारः ''नैतानि सन्ति प्रयोजनानि। असिद्धवदत्राभात् (६।४।२२) इत्यनेनाप्येतानि सिद्धानि।'' अर्थात् यस्येति च (६।४।१४८) इति सूत्रस्याभीयत्वे नैतत्कृतस्याल्लोपस्य अनिदितां हल उपधायाः क्ङिति (६।४।४४) इत्यस्य नलोपे कर्त्तव्येऽसिद्धत्वात्। एवं पादिकमौदवाहिमित्यत्रापि कृतस्याल्लोपस्याभीयत्वात् पादः पत् (६।४।१३०) वाह ऊठ् (६।४।१३२) इत्येताभ्यामसिद्धत्वं भवति। अतः पदूडादेशौ न भवतः। नेतारौ – नयेते गुरुमुखात् शास्त्रार्थमिति नेतारौ। तयोरामन्त्रणम्। धारणिं रावणिं चेति – धृङ् अवस्थानार्थकात् ङकारेत्संज्ञकात् णिचि वृद्धौ रपरत्वे धारि इत्यस्माल्ल्युटि अनादेशे णत्वे णेरनिटि (६।४।५१) इति णेर्लुकि ततः धारणशब्दात् तस्यापत्यमित्यर्थे इञि प्रत्यये भत्वादकारलोपे धारणिः शब्दो निष्पद्यते। एवं शब्दार्थकात् रुधातोः णिचि वृद्धौ आवादेशे ल्युटि अनादेशे णिलोपे ततोऽपत्यार्थे ''इञि प्रत्यये भत्वादकारलोपे रावणिः शब्दो निष्पद्यते।'' अत्र 'धारण्-इ' 'रावण्-इ' इत्यवस्थायामल्लोपे कृते ''नस्तद्धिते'' (६।४।१४४) इति सूत्रेण णत्वस्यासिद्धत्वात् टेर्लोपः प्राप्नोति। तद्वारणमकारस्य स्थानिवद्भावेन भवति। एवं स्रंस्यते ध्वंस्यते इत्यत्रोकारेत्संज्ञकाभ्यामवस्रंसनार्थकाभ्यां णिचि स्रंसि ध्वंसि इत्येताभ्यां कर्मणि लटि तप्रत्यये यकि णिलोप ''अनिदितां हल उपधायाःक्ङिति'' (६।४।२४) इति नलोपः प्राप्नोति। तद्वारणं अचः परस्मिन्निति स्थानवद्भावेन भवति। तत्र भगवान् भाष्यकारः ''नैतानि सन्ति प्रयोजनानि ''असिद्धवदत्राभात्'' (६।४।२२) इत्यनेनाप्येतानि सिद्धानीति वदति। अर्थात् भगवत्कारिकोक्तेषूदाहरणेषु ''असिद्धवदत्राभात्'' इत्यधिकारस्थेनाल्लोपविधायकेन यस्येति चेति सूत्रेण कृतकार्याणामाभीयानां सूत्राणामसिद्धत्वं भवति। तेन पद्भावः उडल्लो''ष्टिलोप इत्येते विधयो न भवन्तीत्यर्थः।

प्रकृतसूत्रस्य भगवान् भाष्यकारः प्रयोजनान्तरं प्रस्तौति – याज्यते वाप्यते। तत्र देवपूजासंगतिकरणदानेषु विद्यमानाद् यज्धातोः णिन्चि वृद्धौ 'याजि'

इत्यस्मात् कर्मणि लटि भावकर्मणोरित्यात्मनेपदे 'त' प्रत्यये यकि तस्यार्ध-धातुकत्वाद् 'णेरनिटि' (६।४।५१) इति णेर्लोपे एत्वे 'याज्यते' इति रूपं भवति। एवं ङित्संज्ञकाद् बीजसंतानार्थकाद् वप्धातोर्णिचि वृद्धौ कर्मणि लटि तप्रत्यये यकि णिलोपे वाप्यते इति रूपं भवति। उभयत्र णिलोपे कृते सति 'वचिस्वपियजादीनां किति' (६।१।१५) इति सूत्रेण ''तस्मिन्निति निर्दिष्टे पूर्वस्य'' इति परिभाषासूत्रसाहाय्येन कित्यव्यवहितपूर्वत्वविशिष्टानां यजादीनां संप्रसारणं भवतीत्यर्थेन वचिस्वपियजादीनां किति इति सूत्रेण सम्प्रसारणं प्राप्नोति। अचः परस्मिन्निति णिलोपस्य स्थानिवद्भावाद् 'णि' इत्यस्य व्यवधानाद् संप्रसारणं न भवति। तत्र भाष्यकृत् संप्रसारणभावायोपायान्तरं निर्दिशति – ''यजादिभिरत्र कितं विशेषयिष्यामो यजादीनां यः किदिति। अर्थात् यजादयः कितो विशेषणानि भविष्यन्ति।'' कीदृशानि विशेषणानि यजादयो भवन्ति? यजादीनां यः किदिति। अर्थात् यजादिभ्यो विहितः स कित्। अयं कित् (यक्) यजादिभ्यो न विहितः किन्तु याजिवापि इत्येताभ्यां ण्यन्ताभ्यां विहितः। अतो न सम्प्रसारणं प्राप्नोति।

**(म० भा०) ''इदं तर्हि प्रयोजनम् – पट्व्या मृद्व्येति। परस्य यणादेशे कृते पूर्वस्य न प्राप्नोति। ईकारयणा व्यवहितत्वात्। किं पुनः कारणं परस्य तावद् भवति, न पुनः पूर्वस्य? नित्यत्वात्। नित्यः परयणा-देशः, कृतेऽपि पूर्वयणादेशे प्राप्नोति, अकृतेऽपि प्राप्नोति। नित्यत्वात् परय-णादेशे कृते पूर्वस्य न प्राप्नोति। स्थानिभावाद्भवति।''**

**अत्रेदं तात्पर्यम्** – महाभाष्यकृत्प्रयोजनान्तरमुपदिशति पट्व्या मृद्-व्येति। अत्र पटु ई आ मृदु ई आ इति स्थिते परस्य यणादेशे कृते पूर्वस्य (पटूत्तरवर्तिन इकारस्य) यण् न प्राप्नोति। ईकारयणा व्यवधानात्। ईकारयणः स्थानिवद्भावात् अच्त्वस्य लाभात् यण् भविष्यति। अत्र यण्विषये जिज्ञासा भवति यत् परयणादेशः पूर्वं भवति, न पूर्वस्य यणादेशः? उत्तरति, नित्यत्वात्। परयणादेशो नित्यः, यतो हि पूर्वयणादेशे कृतेऽपि प्राप्नोति, अकृतेऽपि पूर्वयणादेशे प्राप्नोति। उत्तरत्राच्त्वाभावात्। तत्राच्त्वं भवति स्थानिवद्भावात्।

**(म० भा०) ''एतदपि नास्ति प्रयोजनम् – ''असिद्धं बहिरङ्ग-लक्षणमन्तरङ्गलक्षणे'' इत्यसिद्धत्वाद् बहिरङ्गलक्षणस्य परयणादेशस्या-**



**न्तरङ्गलक्षणः पूर्वयणादेशो भविष्यति। अवश्यं चैषा परिभाषा आश्रयि-तव्या स्वरार्थम्। कर्त्र्या हर्त्र्येति। 'उदात्तयणो हल्पूर्वात्' (६।१।१७४) इत्येष स्वरो यथा स्यात् अनेनापि सिद्धः स्वरः। कथम्?''**

**अत्रेदं तात्पर्यम्** – पट्व्या मृद्व्येति स्थानिवत्त्वस्य प्रयोजनं नास्ति। किन्तु कर्त्र्या हर्त्र्यात्र स्वरार्थम्। असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे इति परिभाषा कर्त्तव्या। तथाहि – कर्तृ–ई–आ इत्यवस्थायां पूर्वनिमित्तकमन्तरङ्गं परनिमित्तकं बहिरङ्गम्। तत्र लक्ष्ये पूर्वयणादेशस्यान्तरङ्गत्वं परयणादेशस्य च बहिरङ्गत्वम्। परिभाषयानया पूर्वस्य यणि कृते ''उदात्तयणो हल्पूर्वात्'' (६।१।१७४) इति पटूत्तरवर्तिन उकारस्य यणि कृते हल्पूर्वकाद्यणः परस्येकारस्योदात्तत्वे जाते, ततः ईकारस्य यणि कृते हल्पूर्वकात् यणः परस्याः टाविभक्तेराकारस्योदात्तत्वे सर्वमिष्टमुपपन्नं भवति। अवश्यं चैषा परिभाषा कर्त्तव्या। अन्यथा नित्यत्वात् परयणादेशे कृते ततः कृतस्य यणादेशस्य स्थानिवद्भावेन तकारोत्तरवर्त्तिन ऋकारस्य यणि कृते ''उदात्तयणो हल्पूर्वात्'' इति विभक्तेराकारस्योदात्तत्वं न प्राप्नोति, मध्यस्थस्येकारयणो व्यवधानात्। ननु पूर्वयणादेशस्य नित्यत्वे उदात्तस्वरः सिद्-ध्यति। यथासिद्धपरिभाषया पूर्वस्यान्तरङ्गत्वेन प्रबलत्वेन पूर्वयणादेशो विहितः। ङीप आकारस्य चोदात्तस्वरश्च जातः, तथा पूर्वस्य नित्यत्वे जाते स्वरो भविष्यति। कथम्? चेदुच्यते –

**(म० भा०) – आरभ्यमाणे नित्योऽसौ,**

**आरभ्यमाणे त्वस्मिन् योगे नित्यः पूर्वयणादेशः। कृतेऽपि परयणा-देशे प्राप्नोति अकृतेऽपि। परयणादेशोऽपि नित्यः। कृतेऽपि पूर्वयणादेशे प्राप्नोत्यकृतेऽपि।**

**''परश्चासौ व्यवस्थया''** व्यवस्थया चासौ परः। **''युगपत् संभवो नास्ति'' न चाऽस्ति यौगपद्येन संभवः। कथं च सिद्ध्यति? बहिरङ्गेण सिद्ध्यति। 'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे'** इत्यनेन सिद्ध्यति।

**अत्रेदं तात्पर्यम्** – 'अचः परस्मिन् पूर्वविधौ' इति सूत्रे क्रियमाणे पूर्वयणादेशोऽपि नित्यो भवति। परयणादेशे कृतेऽपि स्थानिवद्भावेनाच्त्वमादाय

पूर्वयणादेशः प्राप्नोति। अकृतेऽपि परयणादेशे पूर्वयणादेशः प्राप्नोति तत्राच्त्वं विना स्थानिवद्भावं स्वतः सुलभम्। कृताकृतप्रसङ्गी विधिर्नित्यो भवति। परयणादेशोऽपि नित्यः, कृते पूर्वयणादेशे प्राप्नोति, अकृतेऽपि प्राप्नोति। तर्ह्युभयोरेकदा संभवो नास्ति, तस्मात् परत्वेन व्यवस्था भविष्यति। ननु 'इको यणचि' (६।४।५१) इत्येकस्य यण्विधायकस्य पूर्वत्वपरत्वयोर्व्यवहारो भवितुं नार्हति? इति चेत् सत्यम्, लक्ष्ये पूर्वपरयोर्यणादेशविधानादेकस्यापि पूर्वत्वं परत्वं च सिद्ध्यति। विरोधिता च तयोः कार्यित्वनिमित्तत्वाभ्यामस्त्येव। एतच्च सुस्पष्टं कैयटे प्रकृतसूत्रे। ननु परयणादेशे कृते पश्चात् पूर्वयणादेशे कृते आकारस्य ''उदात्तयणो हल्पूर्वात्'' (६।१।१७४) इति सूत्रेणोदात्तत्वं न प्राप्नोति, परयणादेशस्य व्यवधानात्। तर्हि बहिरङ्गेण सिद्ध्यति। अर्थात् 'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इति परिभाषया सिद्ध्यति। पूर्वं पूर्वयणादेशे कृते ङीपः ईकारस्योदात्तत्वे कृते तत ईकारस्य यणादेशे कृते टाविभक्तेराकारस्याप्युदात्तत्वं भविष्यति।

**(म० भा०) ''एवं तर्हि योऽत्रोदात्तयण् तदाश्रयः स्वरो भविष्यति। ईकारयणा व्यवहितत्वान्न प्राप्नोति।'' ''स्वरविधौ व्यञ्जनमविद्यमानवद् भवतीति नास्ति व्यवधानम्।'' सा तर्हि एषा परिभाषा कर्त्तव्या। ननु चेयमपि कर्त्तव्या – ''असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे''इति। बहुप्रयोजनैषा परिभाषा। अवश्यमेवैषा कर्त्तव्या सा चाप्येषा लोकतः सिद्धा। कथम्? प्रत्यङ्गवर्ती लोको लक्ष्यते। तद्यथा – पुरुषोऽयं प्रातरुत्थाय यान्यस्य प्रतिशरीरं कार्याणि तानि तावत् करोति, ततः सुहृदाम्, ततः सम्बन्धिनाम्। प्रातिपदिकञ्चाप्युपदिष्टं सामान्यभूतेऽर्थे वर्तते। सामान्ये वर्तमानस्य व्यक्तिरुपजायते। व्यक्तस्य सतो लिङ्गसंख्याभ्यामन्वितस्य वाह्येनार्थेन योगो भवति। यथैव चानुपूर्व्याऽर्थानां प्रादुर्भावस्तथैव शब्दानामपि, तद्वत्कार्यैरपि भवितव्यम्।**

अत्रेदं तात्पर्यम् – 'कर्त्र्या' 'हर्त्र्या' इत्यत्र ''असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे'' इति परिभाषया पूर्वमन्तरङ्गत्वाद् पूर्वयणादेशे कृते (ऋकारस्य यणि कृते) ततः ''उदात्तयणो हल्पूर्वात्'' (६।१।१७४) इति ङीप ईकारस्योदात्तत्वे कृते तत्रेकारस्य यणि सति तस्य व्यवधानात् विभक्तेराकारस्योदात्तत्वं न



प्राप्नोति ङीप ईकारयणा व्यधानात्। सत्यम्, ''स्वरविधौ व्यञ्जनमविद्यमानवद् भवती''ति परिभाषया व्यवधानं नास्ति। अतो विभक्तिस्वरो भविष्यति। तदर्थमेषा स्वरविधाविति परिभाषा कर्त्तव्याऽवश्यमेव।

असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे इति परिभाषाऽपि अवश्यमेव कर्त्तव्या। यतो हीयं बहुप्रयोजनिका परिभाषाऽस्ति। इयं च लोकतः सिद्धाऽस्ति। यतो हि लोको प्रत्यङ्गवर्त्ती वर्तते। (अङ्गमङ्गं प्रति इति वीप्साऽर्थेऽव्ययीभावसमासः।) तद्वर्तितुं शीलमित्यर्थे णिनिः। तद्यथा – पुरुषोऽयं प्रातरुत्थायेत्यादि भाष्येऽङ्गानामङ्गिनं प्रति प्रत्यासन्नत्वात् प्रथमं स्वकीयानि कार्याणि शौचस्नानादीनि कार्याणि करोति, ततोऽन्यापेक्षया सुहृदाम् सन्निहितत्वात् ततः सम्बन्धिनां कार्याणि करोतीति प्रतिपादितम्।

यद्यपि शब्दार्थसम्बन्धस्य नित्यत्वात् शब्दस्य विरम्य व्यापाराभाद्युगपदेव सकलार्थप्रतीतिः स्यादिदं क्रमाभिधानमसङ्गतम्? इति चेत्, सत्यम्। 'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः' इति भर्तृहरिणोक्तत्वेन, भगवता सूत्रकारेण प्रातिपदिकङीबुद्देश्यकात् स्वादिविधानेन च शास्त्रवासनाकल्पितोऽयं क्रमो भगवता भाष्यकारेणापि स्वीकृतः। क्रमाभिधानञ्चेत्थम् – तत्र प्रथममुपदिश्यमानं प्रातिपदिकं सामान्यमभिधत्ते। सामान्ये कार्याभावात् तत्स्वाश्रयभूतां व्यक्तिमाश्रयता शब्दार्थत्वेन प्रकल्पयति। ततः संख्यापेक्षया लिङ्गमासन्नं भवतीति तस्याभिधानं करोति। यतो हि लिङ्गापेक्षया संख्या वस्त्वन्तरापेक्षोपजायतेऽतो सा बहिरङ्गा। संख्यापि कर्मादीनामपेक्षयान्तरङ्गा भवति, यतो हि संख्या सजातीयपदार्थमपेक्षते। सजातीयत्वं द्रव्यत्वेन स्वाश्रयत्वेन वा बोध्यम्। कर्मादीनि तु विजातीयक्रियामपेक्षन्ते। अतः तानि संख्यापेक्षया बहिरङ्गाणि भवन्तीति न्यायानुसारी क्रमः। अत्र बाह्यपदार्थः कर्मत्वादिः। येन क्रमेणार्थानां जातिव्यक्तिलिङ्गसंख्याकारकाणां प्रादुर्भावो जायते, तेनैव क्रमेण शब्दानाम् प्रातिपदिकस्त्रीप्रत्ययविभक्तीनां प्रादुर्भावो भवति। तथैव येन क्रमेण शब्दोपस्थितिः तेनैव क्रमेण कार्यम्। यथा पट्व्या मृद्व्या इत्यत्र पूर्वमिकारनिमित्तको यणिति तात्पर्यम्।

वाक्यमुद्धृत्य पदानि संस्क्रियन्ते यत्रासौ पदसंस्कारपक्षः। अस्मिन् पक्षे समकालप्राप्तिकस्यानया परिभाषया परस्यासिद्धत्वं बोध्यते। यथा 'पट्व्या' इत्यत्र

पूर्वमिकारस्य यण् भवत्यन्तरङ्गत्वात्, परयणादेशस्य तत्कालप्राप्तिकत्वादसिद्धत्वं चेति।

**( म० भा० ) इमानि तर्हि प्रयोजनानि – पटयति ( लघयति ) अवधीत् बहुखट्वकः। पटयति लघयतीति णिचि टिलोपे कृते ''अत उपधायाः'' ( ७। २। ११६ ) इति वृद्धिः प्राप्नोति। स्थानिवद्भावान्न भवति। अवधीदिति, अकारलोपे कृते ''अतो हलादेर्लघोः'' ( ७। २। ७ ) इति विभाषावृद्धिः प्राप्नोति। स्थानिवद्भावान्न भवति। बहुखट्वक इति, 'आपोऽन्यतरस्याम्' ( ७। २। १५ ) ह्रस्वत्वे कृते 'ह्रस्वान्तेऽन्त्यात् पूर्वम्' इत्येष स्वरः प्राप्नोति। स्थानिवद्भावान्न भवति।**

**अत्रेदं तात्पर्यम् –** पटयतीत्यादीन्युदाहरणानि प्रकृतसूत्रस्य सन्ति। तत्र पटयति, पटुमाचष्टे इत्यर्थे णिचि टेर्लोपे सति धातुत्वाल्लडादिकार्येषु पटयति रूपं भवति। अत्र टेर्लोपे सति उपधामूलस्याकारस्य णित्परकत्वाद् ''अत उपधायाः'' (७। २। ११६) इति सूत्रेण वृद्धिः प्राप्नोति। सत्यम्। अचः परस्मिन्निति सूत्रेण परनिमित्तकेन टेर्लोपरूपस्याजादेशस्य स्थानिवद्भावान्न वृद्धिः प्राप्नोति। टेर्व्यवधानाद् अकारस्योपधात्वाभावात्। एवं लघुमाचष्टे 'लघयति' इत्यत्रापि तज्ज्ञेयम्।

अवधीदिति, हन्धातोर्लुङि ''लुङि च'' (२। ४। ४३) इति सूत्रेण हनो वधादेशे अडागमे लस्थाने तिपि सार्वधातुकत्वात् प्राप्तं शपं प्रबाध्य च्लौ तस्य सिजादेशे तस्यार्धधातुकत्वादिटि तिपः इकारलोपेऽपृक्तत्वादीटि सकारलोपे सवर्णदीर्घे ''अतो लोपः'' (६। ४। ४८) इति सूत्रेणाकारलोपे 'अवधीत्' इति रूपं जायते। अत्राकारलोपे सति ''अतो हलादेर्लघोः'' (७। २। ७) इति वृद्धिः प्राप्नोति। अचः परस्मिन्निति सूत्रेण स्थानिवद्भावान्न वृद्धिर्भवति। अत्राकाररूपोपधाया अतो लोपस्य व्यवधानेनाभावात्। बहुखट्वकः इति – बह्व्यः खट्वा यस्मिन् ग्रामे स बहुखट्वको ग्रामः। बहुव्रीहिसमासे सुपो लुकि कपि ''आपोऽन्यतरस्याम्'' (७। ४। १५) इति सूत्रेणाकारस्य ह्रस्वे कृते – ह्रस्वान्तेऽन्त्यात् पूर्वम् (६। २। १७४) इति सूत्रेणान्त्यात् पूर्वस्योदात्वत्वं प्राप्नोति। अचः परस्मिन् पूर्वविधौ इति सूत्रेण स्थानिवद्भावान्न भवति उदात्तस्वरः, तत्र ह्रस्वाभावात्।



**( म० भा० ) इह – वैयाकरणः सौवश्व इति, य्वोः स्थानिवद्भावादायावौ प्राप्नुतस्तयोः प्रतिषेधो वक्तव्यः।**

**''अचः पूर्वविज्ञानादैचोः सिद्धम्''॥ १॥**

**योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः, आदिष्टाच्चैषोऽचः पूर्वः। किं वक्तव्यमेतत्? नहि। कथमनुच्यमानं गंस्यते? अचः इति पञ्चमी। अचः पूर्वस्य। यद्येवमादेशोऽविशेषतो भवति। आदेशश्च विशेषितः। कथम्? न ब्रूमो यत् षष्ठीनिर्दिष्टमज्ग्रहणं तत्पञ्चमीनिर्दिष्टं कर्त्तव्यम् इति। किं तर्ह्यन्यत् कर्त्तव्यम्? अन्यच्च न कर्त्तव्यम्। यदेवादः षष्ठीनिर्दिष्टमज्ग्रहणन्तस्य दिक्शब्दैर्योगे पञ्चमी भवति। ''अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद् भवति। कुतः पूर्वस्य?'' अच इति। तद्यथा – आदेशः प्रथमानिर्दिष्टः, तस्य दिक्छब्दैर्योगे पञ्चमी भवति – अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद्भवति। कुतः पूर्वस्य? आदेशादिति।**

**अत्रेदं तात्पर्यम् –** वैयाकरणः सौवश्व इति प्रयो द्वयमुपन्यस्य स्थानिवद्भावेन दूषणं विधाय तन्निवारयति। तथाहि – व्याकरणमधीते वेत्ति वेत्यर्थे ''तदधीते तद्वेद'' (४। २। ५९) इति सूत्रेणाणप्रत्यये भत्वादकारलोपे ''तद्धिते-ष्वचामादेः'' (७। २। ११७) इति प्राप्तां वृद्धिं प्रबाध्य ''न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्'' (७। ३। ३) इत्यैजागमे वर्णसम्मेलने स्वादिकार्ये च वैयाकरणः इति रूपं भवति। अत्र यणादेशस्य स्थानिवद्भावेनेकारमादाय ''एचोऽयवायावः'' इति सूत्रेणायादेशः प्राप्नोति, तस्य प्रतिषेधः कार्य इति दूषणमस्ति तस्य प्रतिषेधो वक्तव्यः इति।

एवं सौवश्वः इत्यत्रापि स्वश्वस्यापत्यमित्यर्थे तस्यापत्यम् (४। १। ९२) इत्यनेनाऽण्प्रत्यये भत्वादकारलोपे प्राप्तां वृद्धिं प्रबाध्य न य्वाभ्यामित्यादिसूत्रेणौकारविधाने सति तस्य स्थानिवद्भावेनोकारमादायावादेशः प्राप्नोति तस्य प्रतिषेधो वक्तव्यः इति। तच्चोक्तप्रयोगद्वये दूषणं वारयति वार्तिकेन – ''अचः पूर्वविज्ञानादैचोः सिद्धम्।'' अर्थात् अविहितात् अजादेशात् पूर्वस्थस्य विधिमपेक्षते यदि तदा स्थानिवद्भावो भवति विहिताजादेशात् पश्चाद् विधिरिष्यते तदा स्थानिवद्भावो

न भवति। प्रकृते वैयाकरण: सौवश्व: इत्यत्राजादेशस्य यणो विधानान्तरमैकारौ-कारयोरायावौ प्राप्नुत: स्थानिवद्भावेन। स च स्थानिवद्भावो न सम्भवति। अकृत-यणादेशापेक्षयैकारौकारौ न स्त:। एतदेव महाभाष्यकारा: कथोपकथनशैल्या सुस्पष्टयन्ति – योऽनादिष्टादच: = अकृतादेशनादच: पूर्वस्तस्य विधिं प्रति स्थानिवद्भाव:, आदिष्टाच्चैषोऽच: = कृतादेशाच्चैषोऽच: पूर्व:। किं वक्तव्यमेतत्? नहि। कथमनुच्यमानं गंस्यते? अच इति पञ्चमी। अच: पूर्वस्य। यद्येवमादेशोऽवि-शेषितो भवति। आदेशश्च विशेषित:। कथम्? 'न ब्रूमो यत् षष्ठीनिर्दिष्टमज्ग्रहणं तत् पञ्चमीनिर्दिष्टं कर्त्तव्यम्' इति। किं तर्ह्यन्यत् कर्त्तव्यम्? अन्यच्च न कर्त्तव्यम्। यच्च परस्मिन्नित्यत्र षष्ठीनिर्दिष्टमज्ग्रहणन्तस्य दिक्शब्दयोगे पञ्चमी विभक्तिर्भवति। "अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते" (२। ३। २९) इति सूत्रेण दिक्शब्दैर्योगे पञ्चमीविधानात्। प्रकृते – अजादेश: परनिमित्तक: पूर्वस्य विधिं प्रति स्थानिवद्भवति। कुत: पूर्वस्य? अच इति। तद्यथा – आदेश: प्रथमानिर्दिष्ट: तस्य दिक्शब्दैर्योगे पञ्चमी भवति।" अजादेश: परनिमित्तक: पूर्वस्य विधिं प्रति स्थानिवद्भवति। कुत: पूर्वस्य? आदेशादिति।"

**(म० भा०) – "तत्रादेशलक्षणप्रतिषेध:"॥ २॥**

**"तत्रादेशलक्षणं कार्यं प्राप्नोति तस्य प्रतिषेधो वक्तव्य:। वाय्वो: अध्वर्य्वो:।" "लोपो व्योर्वलि" (६। १। ६६) इति लोप: प्राप्नोति।**

**असिद्धवचनात् सिद्धम्। अजादेश: परनिमित्तक: पूर्वस्य विधिं प्रत्यसिद्धो भवतीति वक्तव्यम्।**

**"असिद्धवचनात् सिद्धमिति चेदुत्सर्गलक्षणानामनुदेश:"॥ ३॥**

**असिद्धवचनात् सिद्धमिति चेदुत्सर्गलक्षणानामनुदेश: कर्त्तव्य:। पट्व्या मृद्व्येति। ननु चैतदप्यसिद्धवचनात्सिद्धम्।**

**"असिद्धवचनात् सिद्धमिति चेन्नासिद्धवचनादन्यस्य भाव:"॥ ४॥**

**असिद्धवचनात् सिद्धमिति चेत्, तन्न। किं कारणम्? नाऽन्यस्या-सिद्धवचनादन्यस्य भाव:। न ह्यन्यस्यासिद्धत्वादन्यस्य प्रादुर्भावो भवति। तद्यथा – नहि देवदत्तस्य हन्तरि हते सति देवदत्तस्य प्रादुर्भावो भवति।**



**"तस्मात् स्थानिवद्वचनमसिद्धत्वं च"॥ ५॥**

**तस्मात् स्थानिवद्भावो वक्तव्य:, असिद्धत्वं च। पट्व्या मृद्व्येति स्थानिवद्भाव:। वाय्वोरध्वर्य्वोरित्यसिद्धत्वम्।**

**अत्रेदं तात्पर्यम्** – तत्र = कृतादेशेषु लक्ष्येषु आदेशलक्षणं कार्यं प्राप्नोति तस्य प्रतिषेधो वक्तव्य:। यथा – वाय्वोरध्वर्य्वोरित्यत्र "इको यणचि" (६। १। ७०) इति यणि कृते "लोपो व्योर्वलि" (६। १। ६६) इति यलोप: प्राप्नोति, तस्य प्रतिषेधो वक्तव्य:। तत्रादेशलक्षणकार्यस्य यलोपरूपकार्यस्य प्रतिषे-धकथनस्यावश्यकता नास्ति। असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे इति परिभाषया "इको यणचीति सूत्रस्य लोपोव्योर्वलीति सूत्रापेक्षयाधिकनिमित्तकत्वात्" यणरूपं कार्यमसिद्धं भविष्यति। तस्मादेशनिमित्तं यलोपकार्यं न भविष्यति। अत: आदेश-लक्षणस्य कार्यस्य प्रतिषेधो न वक्तव्य:। असिद्धवचनात्सिद्धमिति तृतीयवार्तिक-स्यायमाशयो यद् भवतु नामादेशस्यासिद्धत्वाद्वाय्वो: अध्वर्य्वोरत्यित्र न स्याद्यलोप: किन्तु पट्व्या मृद्व्येत्यत्रोत्सर्गलक्षणं यण्कार्यायातिदेशो वक्तव्य:। ननु पट्व्या मृद्व्येत्यत्राप्यसिद्धत्वेनोत्सर्गलक्षणं कार्यं सिद्ध्येत्? इति चेत्? तन्न। असिद्धवच-नात्सिद्धमिति चेन्नेति तुरीयवार्तिकेन तन्निषेधति – पट्व्या मृदव्येत्यत्र। सिद्धव-चनात् पूर्वयणादेशो भविष्यतीति न वक्तव्यम्। यतो हि अन्यस्यासिद्धवचनादन्यस्य प्रादुर्भावो न जायते। अर्थादीकारस्य परत्वाद् यणादेशे कृते परयणादेशस्यासिद्ध-त्वेऽपि यणादेशस्थानिन ईकारस्य प्रादुर्भावो न भवति। यथा – "न हि देवदत्तस्य हन्तरि हते देवदत्तस्य प्रादुर्भावो भवति। तस्मात् पट्व्या मृद्व्येत्यत्र स्थानिवद्भावो वक्तव्य:। वाय्वो: अध्वर्य्वोरित्यत्र असिद्धत्वं वक्तव्यमिति।" तदुक्तम् प्रकरणस्या-स्यैव पञ्चमे वार्तिके – "तस्मात् स्थानिवद्वचनमसिद्धत्वं च"ति। तस्य व्याख्यानम् – "स्थानिवद्भावो वक्तव्य:, असिद्धत्वञ्च पट्व्या मृद्व्येति स्थानिवद्भाव:। वाय्वोरध्वर्य्वोरित्यसिद्धत्वम्" इति।

**(म० भा०) – "उक्तं वा॥ ६॥"**

**किमुक्तम्? स्थानिवद्वचनानर्थक्यं शास्त्रासिद्धत्वादिति। विषम उपन्यास:। युक्तं तत्र यदेकादेशशास्त्रं तुक्शास्त्रेऽसिद्धं स्यादन्यदस्मिन्।**

**इह पुनरयुक्तम्। कथं हि तदेव नाम तस्मिन्नसिद्धं स्यात्? तदेव चापि तस्मिन्नसिद्धं भवति। वक्ष्यति ह्याचार्यः चिणो लुकि तग्रहणानर्थक्यं सङ्घातस्याप्रत्ययत्वात्तलोपस्य चासिद्धत्वादिति। चिणो लुक् चिणो लुक्ये-वासिद्धो भवति।**

**अत्रेदं तात्पर्यम्** – नहि देवदत्तस्य हन्तरि हते देवदत्तस्य प्रादुर्भावो भवतीति न्यायस्य प्रवर्त्तनं भगवान् भाष्यकारः कृतवान्। तथाहि – पट्व्या मृद्व्येत्यत्रेकारस्थाने ''इको यणचीति'' सूत्रेण यकारे कृतेऽसिद्धमितिपरिभाषया यकारस्यासिद्धत्वेऽपि तत्स्थानिन ईकारस्य प्रादुर्भावो न भवतीति। यतो हि यणा-देशेनेकारो हतः। यकारस्यासिद्धत्वेऽपि (अर्थात्तस्य मृत्युङ्गतस्यापि) तेन हतस्येकारस्य पुनः प्रादुर्भावो नैव भविष्यतीति पूर्वयणादेशो दुर्लभः स्यादिति। अयं भाष्यसन्दर्भः कार्यासिद्धत्वमाश्रित्य व्याख्यातो भगवता। शास्त्रासिद्धत्वपक्षे उक्तन्यायस्याविषयत्वात्। तदेव उक्तं वेतिवार्तिकस्य व्याख्यानम् – ''किमुक्तम्'' स्थानिवद्वचनानर्थक्यं शास्त्रासिद्धत्वादिति भगवता कृतम्। अत्र इको यणचीति सूत्रस्यासिद्धत्वमाश्रित्य सन्दिहानः पृच्छति – विषम उपन्यास इति। कथं विषमत्वं केन विषमत्वमिति चेद्, उच्यते। अधि इ य इत्यवस्थायां सवर्णदीर्घे कृते ह्रस्वस्य पिति कृति तुक् इति प्राप्नोति ह्रस्वाभावात्। तर्हि तुग्ग्रहणं व्यर्थीभूय ज्ञापयति – तुकि कर्त्तव्ये एकादेशशास्त्रमसिद्धं भवतीति। तत्र युक्तं नाम यदेकं प्रत्यन्यत्सूत्रम-सिद्धं भवतीति। प्रकृते पट्व्या मृद्व्येत्यत्र तु ''इको यणचीति'' सूत्रमेकमेवास्ते इत्येव वैषम्यमत्र। तत्तु नोचितमसिद्धत्वं प्रतिभातीतिपूर्वपक्षीयस्य सन्देहः। तत्रा-चार्यः चिणो लुक् (६।४।१०४) इति सूत्रस्थे भाष्ये चिणो लुक् इति सूत्रस्य स्वं प्रत्यसिद्धत्वं स्वीकरोति। अतः प्रकृतेऽपि ''इको यणचीति'' सूत्रस्यापि स्वं प्रत्यसिद्धत्वकथनं विरुद्धं नास्ति। तदेव भाष्ये ''तदेव चापि तस्मिन्नसिद्धं भवती''ति। कथम्? इति चेत्, उच्यते। अकारितराम् इत्यत्र चिण उत्तरस्य प्रत्य-यस्य लुग् भवतीत्यर्थकेन ''चिणो लुक्'' इति सूत्रेण 'त' इत्यस्य लुकि पुनः तरामित्यत्र तरप् प्रत्ययस्याम्प्रत्ययस्य च क्रमेण लोपः प्राप्नोति। अन्येषां मते प्रत्ययत्रयात्मकस्य समुदायस्य लोपः प्राप्नोति। तलोपस्यासिद्धत्वन्तु न भवति, चिणो लुक् इति सूत्रस्यैकस्य भेदनिबन्धनविषयविषयिभावसम्बन्धस्याभावात्।



इदमस्मिन्नसिद्धमिति व्यवहारस्य भेदविषयत्वात्। अत एव भाष्ये ''चिणो लुक्'' इति सूत्रे 'त' लोपो वक्तव्यः इत्युक्तम्। अस्याः शङ्कायाः परिहारः ''तलोपस्या-सिद्धत्वात्'' इति वार्तिकेन भगवता समाहितम्। युगपत् प्रत्ययत्रयस्य (प्रत्यय-समुदायस्य) लोपस्तु न शङ्क्यः। प्रत्ययसङ्घातस्य प्रत्ययत्वाभावात्। ''चिणो लुकि'' तग्रहणानर्थक्यं सङ्घातस्याप्रत्ययत्वात् ॥१॥ इति। सङ्घातस्य लुक् कस्मा-न्नभवतीत्यस्योत्तरं भाष्ये प्रत्ययस्य लुक्श्लुलुपः (१।१।६१) इति प्रत्ययस्यैव लुग्विधानात्।

चिणो लुक् इति सूत्रस्थमहाभाष्यादेकस्मिन्नपि सूत्रेऽसिद्धत्वव्यवहारात् 'इको यणची'ति सूत्रस्यैकत्वेऽपि लक्ष्यभेदात् तत्र भेदत्वमाश्रित्यासिद्धत्वव्यवहारः शक्यः। तेन पट्व्या मृद्व्येत्यत्र स्थानिवद्भावो न वक्तव्यः।

इतः पूर्वमसिद्धवचनमात्रेण निर्वाहमुक्त्वा सूत्रकृतं स्थानिवत्त्वं समर्थयति-

**(म० भा०) ''काममतिदिश्यतां वा सच्चासच्चापि नेह भारोऽस्ति।**
**कल्प्यो हि वाक्यशेषो वाक्यं वक्तर्यधीनं हि॥''**

**अथवा वतिनिर्देशोऽयम्। कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम्। तद्यथा – ''उशीनरवन्मद्रेषु यवाः।'' सन्ति न सन्तीति। मातृवदस्याः कलाः। सन्ति न सन्तीति। एवमिहापि स्थानिवद्भवति स्थानि-वन्न भवतीति वाक्यशेषं समर्थयिष्यामहे। इह तावत् पट्व्यामृद्व्येति यथा स्थानिनि यणादेशो भवति, एवमादेशेऽपि भवति। इहेदानीं वाय्वोरध्व-र्य्वोरिति, यथा स्थानिनि यलोपो न भवति, एवमादेशेऽपि न भवति।**

**अत्रेदं तात्पर्यम्** – पट्व्या मृद्व्येत्यत्रासिद्धत्वं विनापि स्थानिवद्भावेन निर्वाहः स्यात्। एवं वाय्वोरध्वर्य्वोरित्यत्राप्यसिद्धत्वं विनैव यलोपो न भवतीति साधयन्ति महाभाष्यकाराः। तथाहि – वतिनिर्दिष्टे वाक्ये वाक्यशेषम् = वाक्येऽ-पेक्षितं समर्थयितुं कामचारो भवति। यथा – ''उशीनरवन्मद्रेषु यवाः'' इति वाक्ये सन्ति न सन्तीति वाक्यशेषं समर्थयितुं श्रोता स्वतन्त्रोऽस्ति। एवं मातृवदस्याः कलाः। इत्यत्रापि सन्ति न सन्तीति बुध्यति। तथैव स्थानिवत्सूत्रेऽपि स्थानिवद्भावो भवति न भवतीति बोधयितुं शक्नोति।

अर्थात् अभावातिदेशाय न ह्यधिकं सूत्रं पठनीयम्। विधिशब्दं विनापि सिध्यति। सत्तावगतौ सन्तीति वाक्यशेषः कल्प्यते। असत्तावगतौ न सन्तीति। उपमाने उशीनरवन्मद्रेषु यवाः ''मातृवदस्याः कलाः'' अत्र यवाः कलाश्च सन्ति, न सन्तीति यथेष्टं वाक्यशेषं कल्पयितुं शक्यम्। तथा वाय्वोरध्वर्य्वोरित्यत्र पट्व्या मृद्व्येत्यत्र च यथेष्टं स्थानिवद्भवति न भवतीति वाक्यशेषं कल्पयितुं शक्यम्। स्थानिनि यद् भवति तदादेशेऽपि भवति। पट्व्या मृद्व्येत्यत्र स्थानिनि यणादेशो भवति तर्हि तदादेशेऽपि भवति। वाय्वोरध्वर्य्वोरित्यत्र यलोपः स्थानिनि न भवति तर्ह्यादेशेऽपि न भवति।

**( म० भा० ) किं पुनरनन्तरस्य विधिं प्रति स्थानिवद्भावः, आहोस्वित् पूर्वमात्रस्य? कश्चात्र विशेषः।**

**''अनन्तरस्येति चेदेकाननुदात्तद्विगुस्वरगतिनिघातेषूपसंख्यानम्''॥ ६॥**

**अनन्तरस्येति चेदेकाननुदात्तद्विगुस्वरनिघातेषूपसंख्यानम् कर्त्तव्यम्।**

**एकाननुदात्तः – लुनीह्यत्र पुनीह्यत्र। ''अनुदात्तं पदमेकवर्जम्'' (६।१।१५८) इत्येष स्वरो न प्राप्नोति। द्विगुस्वरः – पञ्चारत्न्यः दशारत्न्यः। ''इगन्तकाल'' (६। २। २९) इत्येष स्वरो न प्राप्नोति। गतिनिघातः – यत्प्रलुनीह्यत्र यत्प्रपुनीह्यत्र। ''तिङि चोदात्तवति'' (८। १। ७१) इत्येष स्वरो न प्राप्नोति।**

**अत्रेदं तात्पर्यम् –** अनन्तरस्येति वार्तिकोक्ते प्रथमपक्षे दूषणत्रयं प्राप्नोति। तथाहि – लुनीह्यत्र पुनीह्यत्र हेरिकारस्य ''आद्युदात्तश्च'' (३। १। ३) इति सूत्रेणाद्युदात्ते कृते ततो यणि ''अनुदात्तं पदमेकवर्जम्'' (६। १। १५८) इति सूत्रेण अनुदात्तः स्वरो न प्राप्नोति।

पञ्चारत्न्यः दशारत्न्यः इत्यत्र ''जसादिषु छन्दो वावचनं प्राङ्णौ चङ्युपधाया ह्रस्व इत्येतस्मादितः प्रकरणात् प्रभृति ''छन्दसि वेति वक्तव्यम्'' इति जसि च (७।३।१०९) इति सूत्रस्थ वार्तिकमनुसृत्य जसि चेति सूत्रेण गुणाभावे पञ्चारत्नि अस् इत्यवस्थायां यणि कृते स्वादिकार्ये च कृते ''इगन्तकालकपालभगालशरावेषु द्विगौ'' (६। २। २९) इति सूत्रेणेगन्तत्वाभावात्पूर्वपदप्रकृतिस्वरो न भवति। इष्यते च सः।



**यत्प्रलुनीह्यत्र** हेरिकारस्य यणि कृते उदात्तत्वाभावात् तिङि चोदात्तवति (८। १। ७१) इति सूत्रेण हेरिकारस्य यणि कृते तिङः उदात्तत्वाभावात् गतेरनुदात्तत्वं न प्राप्नोति।

**( म० भा० ) ''अस्तु तर्हि पूर्वमात्रस्य। पूर्वमात्रस्येति चेदुपधाह्रस्वत्वम्॥ ८॥**

**पूर्वमात्रस्येति चेदुपधाह्रस्वत्वम् वक्तव्यम्। वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन। किं पुनः कारणं न सिद्ध्यति? योऽसौ णौ णिर्लुप्यते। तस्य स्थानिवद्भावाद्ध्रस्वत्वं न प्राप्नोति।**

अत्रेदं तात्पर्यम् – वद्धातोः ण्यन्ताण्णौ कृते लुङि अटि तिपि च्लेश्चङादेशे सन्वद्भावे इत्वे दीर्घे उपधावृद्धौ इलोपे अवीवाद् इ अति इति स्थितौ णेरनिटीति प्रथमणेर्लोपे णौ चङ्युपधाया ह्रस्वः (७। ४। १) इति ह्रस्वे कर्त्तव्ये अचः परस्मिन्निति स्थानिवद्भावात् व्यवधानादुपधाह्रस्वो न प्राप्नोति, तस्योपधाह्रस्वस्योपसंख्यानं कर्त्तव्यम्। अन्यथा – ''वादितवन्तं प्रयोजितवान् – अवीवदद्वीणां प्रयोजकेन'' इति प्रयोगो न सिद्ध्यति।

**( म० भा० ) ''गुरुसंज्ञा च''॥ ९॥**

**गुरुसंज्ञा च न सिद्ध्यति। श्लेष्म ३घ्नः पित्त ३घ्न द३ध्यश्च म३ध्वश्च। हलोऽनन्तराः संयोगः ( १। १। ७) इति संयोगसंज्ञा, संयोगे गुरु ( १। ४। ११ ) इति गुरुसंज्ञा, गुरोरिति प्लुतो न प्राप्नोति।**

**ननु च यस्याप्यनन्तरस्य विधिं प्रति स्थानिवद्भावः, तस्याप्यनन्तरलक्षणो विधिः संयोगसंज्ञा विधेया।**

**अत्रेदं तात्पर्यम् –** पूर्वमात्रस्य स्थानिवद्भावस्वीकारे गुरुसंज्ञा च न सिद्ध्यति कथम्? इति चेदुच्यते – श्लेष्मानं हन्ति, इत्यर्थे ''अमनुष्यकर्तृके च'' (३। २। ५३) इति टकि प्रत्यये ''गमहनजनखनघसां लोपः क्ङित्यनङि'' (६। ४। ९८) इति सूत्रेणाकारलोपे ''हलोऽनन्तरेति संयोगसंज्ञायाम्'' **'संयोगे गुरु'** इति नलोपोत्तरस्य मकारोत्तरवर्तिनोऽकारस्य गुरुसंज्ञायाम् ''गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्'' (८। २। ८६) इति गुरुसंज्ञकस्याकारस्य प्लुते

कृते श्लेष्म ३घ्नः इति रूपं भवति। अत्राकारलोपस्य स्थानिवद्भावे तस्य व्यवधानात् संयोगसंज्ञा न प्राप्नोति। असत्यां संयोगसंज्ञायां पूर्वस्याकारस्य गुरुसंज्ञा न प्राप्नोति। असत्यां गुरुसंज्ञायां गुरोरिति प्लुतो न प्राप्नोति।

तस्मात् पूर्वमात्रस्य (व्यवहितस्य स्थानिवत्त्वे संयोगसंज्ञादिकं) वक्तव्यम्। ननु यदा कार्यं तदा संज्ञेत्यर्थकस्य कार्यकालपक्षस्य ग्रहणे संयोगसंज्ञायां पूर्वविधिर्नास्ति, किन्तु पूर्वपरविधिरस्ति, कथं स्थानिवद्भावः? इति चेत्, न, संज्ञायाः कार्यार्थत्वात् कार्यं च प्लुतविधानम्। अतः प्लुतविधानद्वारा पूर्वविधित्वं बोधनीयमिति पूर्वपक्षः। यस्य मतेऽनन्तरविधौ स्थानिवद्भावो भवति, तन्मतेऽपि यथोद्देशपक्षे प्रत्येकं संयोगसंज्ञा चेति पक्षे च पूर्वविधौ स्थानिवद्भावो भवति। तस्मादुभयोः पक्षयोः संयोगसंज्ञायाविधानं कर्त्तव्यमापतति। एवं पित्त३घ्नः इत्यत्रापि श्लेष्म ३घ्नवद् व्याख्यानं बोद्धव्यमिति। दध्यश्व मध्वश्व इत्यत्रापि। दधि + अश्व मधु + अश्व इति विगृह्य "इको यणचि" इति यणि सति स्थानिवद्भावे पूर्वोक्तमेव संयोगसंज्ञा गुरुसंज्ञा च विधेयेति। एतद्दूषणमग्रिमवार्तिकेन दूरीकरोति भगवत्पतञ्जलिः –

**(म० भा०) "न वा संयोगस्याऽपूर्वविधित्वात्"॥ १०॥**

**न वैष दोषः। किं कारणम्? "संयोगस्याऽपूर्वविधित्वात्। न पूर्वविधिः संयोगः, किं तर्हि? पूर्वपरविधिः संयोगः।"**

**अत्रेदं तात्पर्यम्** – 'हलोऽनन्तराः संयोगः' (१।१।७) इति द्वयोः द्वयोः संयोगसंज्ञेति सिद्धान्तपक्षं स्वीकृत्य पूर्वपरयोः हलोः संयोगसंज्ञा भवति। अतोऽत्र पूर्वपरविधित्वेन न स्थानिवद्भावः। तेन श्लेष्म ३घ्नः पित्त३घ्नः द३ध्यश्व म३ध्वश्व इत्यत्र स्थानिवद्भावाभावात् नास्ति पूर्वोक्तदूषणम्।

**(म० भा०) "एकादेशस्योपसंख्यानम्"॥ ११॥**

**एकादेशस्योपसंख्यानं कर्त्तव्यम्। श्रायसो गौमतौ चातुरौ आनडुहौ पादे उदवाहे। एकादेशे कृते नुमामौ पद्भाव ऊडित्येते विधयः प्राप्नुवन्ति। किं पुनः कारणं न सिद्ध्यन्ति?**



**अत्रेदं तात्पर्यम्** – श्रायसौ श्रेयसि भवौ इत्यर्थे 'तत्र भवः' (४।३।५३) इत्यणि वृद्धिं प्रबाध्यात्वे तत औ "वृद्धिरेचि" इति वृद्धौ "अन्तादिवच्च" (६।१।८५) इत्यादिवद्भावे "उदिगचामिति" (७।१।७०) इति नुम्प्राप्नोति।

**गौमतौ** – गावः सन्त्यस्येत्यर्थे मतुपि, गोमत इमौ इत्यर्थे "तस्येदम्" (४।३।१२०) इत्यणि आदिवृद्धौ तत औ, वृद्धौ। अत्राप्यादिवद्भावे नुम् प्राप्नोति।

**चतुरौ** – चतुर्णामिमावित्यर्थे पूर्ववदणि आदिवृद्धौ तत औ वृद्धौ अत्राप्यादिवद्भावे "चतुरनडुहोरामुदात्तः" (७।१।९८) इत्याम् प्राप्नोति। आनडुहौ – अनुडुह इमावित्यर्थेऽपि सत्यादिवृद्धौ तत औ वृद्धौ तस्यादिवद्भावे आम् प्राप्नोति।

**पादे** – पादशब्दात् सप्तम्येकवचने ङौ अनुबन्धलोपे गुणे अत्राप्यादिवद्भावे भत्वात् "पादः पत्" (६।४।१३०) इति पदादेशः प्राप्नोति।

**उदवाहे** – उदकं वहत्यर्थे उपपदसंज्ञायामणि उपपपदसमासे प्रातिपदिकत्वेन सुपो लुकि 'उदकस्योदः संज्ञायाम्' (६।१।५७) इत्युदकस्योदादेशे वृद्धौ उदवाहशब्दाद् ङौ गुणे तस्यादिवद्भावात् 'वाह ऊठ्' (६।४।१३२) इत्यूठादेशः प्राप्नोति।

यदि स्थानिद्वयस्य स्थाने य एकादेशः तस्य स्थानिवत्त्वे स्थानिद्वयमादायोक्तप्रयोगे नुमादयो विधयो न प्राप्नुवन्ति किं कारणमस्ति यत् प्रकृतसूत्रेण स्थानिवद्भावो न भवतीति वार्तिकद्वयावताराय पृच्छति।

**(म० भा०) "उभयनिमित्तत्वाच्च"॥ १२॥ अजादेशः परनिमित्तक इत्युच्यते, उभयनिमित्तश्चायम्। "उभयादेशत्वाच्च"॥ १३॥**

**अच आदेशः इत्युच्यते, अचोश्चायमादेशः।**

**नैष दोषः। यत्तावदुच्यते** – उभयनिमित्तत्वादिति। इह यस्य ग्रामे नगरे वाऽनेकं कार्यं भवति, शक्नोत्यसौ ततोऽन्यतरद्व्यपदेष्टुम्। तद्यथा – "गुरुनिमित्तं वसामः", अध्ययननिमित्तं वसामः इति।

**यदप्युच्यते** – "उभयादेशत्वाच्चे"ति। इह यो द्वयोः षष्ठीनिर्दिष्टयोः प्रसङ्गे भवति लभतेऽसावन्यतरतो व्यपदेशम्। तद्यथा – देवदत्तस्य पुत्रः देवदत्तायाः पुत्र इति।

**अत्रेदं तात्पर्यम् –** द्वयोः स्थाने एकादेशस्य स्थानिवद्भावो न भवति। यतो हि प्रकृतसूत्रेणाजादेशः परनिमित्तकः, एकादेशविधिश्च पूर्वपरनिमित्तकः। अस्मात् कारणात् एकादेशेषु स्थानिवद्भावो न भवति।

अचः परस्मिन्निति सूत्रेऽजादेश इत्युच्यते। अस्मिन्नेकादेशविधौ अचोः स्थाने आदेश इति, तदेवोक्तं वार्तिके "उभयादेशत्वाच्चे"ति। पूर्वोक्तस्य स्थानिवद्भावस्य कारणं परिहरति – नैष दोषः इति। कथम् इत्युच्यते – कश्चिच्छात्रः कस्मिंश्चिद् ग्रामे वसति। तमन्यः पृच्छति। स आह – गुरुनिमित्तं वसामः, अध्ययननिमित्तं वसामः इति। तथैवात्रैकादेशेषु कदाचित् पूर्वस्य कार्यमदन्तत्वादिकं कदाचित् परस्य कार्यं विभक्तित्वादिकमिति। तच्चाच इति स्थानिवद्भावेन शक्यम्। यच्चाप्युच्यते "उभयादेशत्वाच्चेति।" अर्थादचोश्चायमादेश इति। यो द्वयोः प्रसङ्गे भवति लभतेऽसावन्यतरतो व्यपदेशम्। यथा देवदत्तस्य पुत्रः देवदत्तायाः पुत्र इति। एवं प्रकृतेऽपि य आदेशः षष्ठीनिर्दिष्टयोः प्रसङ्गे भवति लभतेऽसौ पूर्वकार्यं परकार्यं चेति।

**(म० भा०) "अथ हलचोरादेशः स्थानिवद्भवति, उताहो न कश्चात्र विशेषः? हलचोरादेशः स्थानिवदिति चेद्विंशतेस्तिलोप एकादेशः"॥ १४॥**

**हलचोरादेशः स्थानिवदिति चेद् विंशतेस्तिलोपे एकादेशो वक्तव्यः। विंशकः। विंशं शतम्, विंशः।**

**अत्रेदं तात्पर्यम् –** अचः परस्मिन्निति सूत्रे हलचोः स्थाने कृतस्य आदेशस्य स्थानिवद्भावे सति विंशकः त्रिंशकः विंशं शतम्, विंशः एते प्रयोगाः न सिद्ध्यन्ति। तथाहि – विंशकः त्रिंशक इत्यत्र "विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम्" (५।१।२४) इति ड्वुनि प्रत्यये 'वु' इत्यस्याकादेशे 'ति' विंशतेर्डिति (६।४।१४२) इति तेर्लोपेतेरित्यस्य हलच्समुदायस्य स्थानिवद्भावे अतो गुणे (६।१।९७) इति पररूपो वक्तव्यः। अत्र द्वयोरकारयोर्मध्ये तेरित्यस्य व्यवधानात्। एवं विंशं शतम् इत्यत्रापि "शदन्तविंशतेश्च" इति डप्रत्यये तिविंशतेर्डिति (६।४।१४२) इति तेर्लोपे तस्य स्थानिवद्भावे सति द्वयोरकारयोर्मध्ये तेरित्यस्य



व्यवधानात् पररूपस्यैकादेशस्य प्राप्तिर्नभवति। तस्मादेकादेशो वक्तव्यः। एवं विंशः इत्यत्रापि विंशतेः पूरणः इत्यर्थे "तस्य पूरणे डट्" (५।२।४८) इति डटि सति तेरित्यस्य स्थानिवद्भावात् एकादेशो वक्तव्यः। ननु "यस्येति च" (६।४।१४८) इति सूत्रेणालोपेनैवोक्तप्रयोगाणां सिद्धिः स्यादिति चेत् न, उभयोराभीयत्वेन यस्येति चेति कर्त्तव्ये "ति विंशतेर्डिति" इत्यस्यासिद्धत्वात्।

**(म० भा०) "स्थूलादीनां यणादिलोपेऽवादेशः"॥**

**स्थूलादीनां यणादिलोपे कृतेऽवादेशो वक्तव्यः। स्थवीयान् दवीयान्।**

**अयं भावः –** द्वाविमौ स्थूलौ अयमनयोः अतिशयेन स्थूल इति स्थवीयान्। अत्र "द्विवचनविभज्योपपदे तरबीयसुनौ" (५।३।५७) इतीयसुनि प्रत्यये "स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः" इति यण्लोपे तत्पूर्वस्योकारस्य च गुणे "एचोऽयवायावः" (६।१।७८) इत्यवादेशेऽसन्तस्योपधाया दीर्घे सौ नुमि हल्ङ्यादिना सोः सकारलोपे प्रत्ययसकारस्य संयोगान्तलोपे स्थवीयान् भवति। यदि हलचोः स्थाने कृतस्यादेशस्य स्थानिवद्भावः स्यात् तर्हि अवादेशो न प्राप्नोति। ओकारेकारयोर्मध्ये 'र' इत्यस्य व्यवधानात्। न च, अनादिष्टादचः पूर्वस्य विधौ कर्त्तव्ये स्थानिवद्भावो भवति, तत् न, अनादिष्टादचः पूर्वत्वमुकारस्य गुणस्थानिनोऽस्ति, तद्द्वारौकारस्यापि पूर्वत्वमादाय स्थानिवद्भावः प्राप्नोति। तस्मादवादेशो न प्राप्नोति 'र' इत्यस्य व्यवधानात्। अतोऽवादेशो वक्तव्यः।

**(म० भा०) "केकयमित्रय्वोरियादेश एत्वम्"॥ १६॥**

**केकयमित्रय्वोरियादेश एत्वं न सिद्ध्यति। कैकेयः, मैत्रेयः। अचीत्येवं न सिद्ध्यति।**

**अयं भावः –** केकयस्यापत्यमित्यर्थे "जनपदशब्दात् क्षत्रियादञ्" (४।१।१६८) इत्यञि तद्धितान्तत्वात् प्रातिपदिकत्वे सुपो लुकि आदिवृद्धौ "केकयमित्रयुप्रलयानायादेरियः" (७।३।२) इतीयादेशे आद्गुणः (६।१।८७) इति गुणे भत्वे अल्लोपे "आपत्यस्य च तद्धितेऽनाति" (६।४।१५१) इति यकारलोपे मैत्रेयः इति रूपं भवति।

एवं मैत्रेयः – मित्रयोरपत्यमिति लौकिकविग्रहे ''गृष्ट्यादिभ्यश्च'' (४। १। १३६) इति ढञि तस्यैयादेशे केकयमित्रयुप्रलयानायादेरियः (७। ३। २१) इतीयादेशे गुणे आदिवृद्धौ भत्वेऽल्लोपे पूर्ववद्यलोपे मैत्रेय इति जायते। अत्रोदाहरणद्वये (कैकेयः, मैत्रेयः) अत्रेयादेशस्य स्थानिवद्भावेन गुणो न प्राप्नोति। ननु यतो हि गुणोऽज्मात्रे विधीयते नत्वजादौ। य आदेशो गुणविधायके सूत्रे आश्रितोऽस्ति स इयादेशविधायके सूत्रे नाश्रितः। तत्र स्थानिवद्भावस्य प्राप्तिरेव-नास्ति। इति चेत्, सत्यम्। भावाभावातिदेशपक्षे दूषणमस्त्येव। अर्थात् स्थानिनि सति यद्भवति तदादेशेऽपि भवति। स्थानिनि यन्न भवति तदादेशेऽपि न भवति। प्रकृते 'यु' अत्र स्थानीयादेश। स्थानिनि सति गुणो न भवति तर्ह्यादेशेऽपि न भवति। उभयथा वाक्यं कल्पनीयम्। उक्तञ्चास्मिन्नेव सूत्रे भगवता। ''काममतिदिश्यतां नेह सच्चासच्च भारोस्ति। कल्प्यो हि वाक्यशेषो वाक्यं वक्तर्यधीनं हि'' (प्रकृतसूत्रभाष्ये) यथा 'मातृवदस्याः कलाः' सन्ति न सन्तीति च द्वैविध्यं वाक्यशेषो कल्प्यते। तद्वत् स्थानिवद् भवति न भवतीति च वाक्यशेषमत्रापि कल्पयितुं शक्यम्।

**( म० भा० ) ''उत्तरपदलोपे च''॥ १७॥**

**उत्तरपदलोपे च दोषो भवति। दध्युपसिक्ताः सक्तवो दधिसक्तवः। अचीति यणादेशः प्राप्नोति।**

**अत्रेदं तात्पर्यम्** – दध्युपसक्ताः सक्तवः इत्यत्र ''समानाधिकरणाधिकारे तृतीयापूर्वपद उत्तरपदलोपश्चेति वार्तिकेन (२। १। ३४-३५ वा० ४)'' उपसिक्तपदस्य लोपे तस्य स्थानिवद्भावात् 'इको यणचि' (६। १। ७७) इति यण् प्राप्नोति।

**( म० भा० ) ''यङ्लोपे यणियङुवङः''॥ १८॥**

**यङ्लोपे यणियङुवङो न सिद्ध्यन्ति। चेच्यः, नेन्यः, चेक्षियः, चेक्रियः, लोलुवः पोपुवः। अचीति यणियङुवङो न सिद्ध्यन्ति।**

**अत्रेदं तात्पर्यम्** – चयनार्थकचिधातोः यङि द्वित्वेऽभ्यासकार्ये गुणे अचि यङो लुकि यणि स्वादिकार्ये चेच्यः एवं नेन्यः। प्रापणार्थकाण्णीधातोः



पूर्ववद् यङि तल्लुक्यादिकार्येषु नेन्यः भवति। अत्र यङः स्थानिवद्भावादच्परकत्वाभावेन यणो नास्ति प्राप्तिः।

चेक्षियः चेक्रियः इत्यत्रापि क्षयार्थकात् क्षिधातोः एवं द्रव्यविनिमयार्थकात् क्रीधातोः यङि द्वित्वेऽभ्यासकार्ये गुणे अचि प्रत्यये यङो लुकि उवङादेशे स्वादिकार्ये चेक्षियः चेक्रियः इति सिद्ध्यतः। अत्रापि यङः स्थानिवद्भावात् तस्य व्यवधानादुवङादेशो न प्राप्नोति।

**( म० भा० ) ''अस्तु तर्हि न स्थानिवत्।''**

**''अस्थानिवत्त्वे यङ्लोपे गुणवृद्धिप्रतिषेधः''॥ १९॥**

**अस्थानिवत्त्वे यङ्लोपे गुणवृद्ध्योः प्रतिषेधो वक्तव्यः। लोलुवः, पोपुवः, सरीसृपः, मरीमृज इति। नैषदोषः।**

**''न धातुलोप आर्धधातुके ( १। १। ४ ) इति प्रतिषेधो भविष्यति।''**

**अत्रेदं तात्पर्यम्** – ञकारेत्संज्ञकाच्छेदनार्थकाल्लूधातोः यङि द्वित्वे अभ्यासगुणेऽचि प्रत्यये यङो लुकि उवङादेशे स्वादिकार्ये लोलुवः। एवं पवनार्थकात् पूधातोः यङि द्वित्वेऽभ्यासगुणे यङो लुकि उवङि स्वादिकार्ये पोपुव इति। अत्रास्थानिवत्त्वे क्ङिति चेति निषेधाभावात् गुणस्य प्रतिषेधो वक्तव्यः।

सरीसृपः इत्यत्रापि लृकारेत्संज्ञकाद् गमनार्थकात् सृप्धातोर्यङि द्वित्वेऽभ्यासगुणेरीगागमेऽचि प्रत्यये यङो लुकि स्वादिकार्ये सरीसृपः इति सिद्ध्यति। अत्रस्थानिवत्त्वाभाद् ङित्त्वाभावेन क्ङिति चेति गुणनिषेधाभावाद् गुणस्य प्राप्तिः स्यात्। एवं मरीमृज इत्यत्रापि यङादिषु कृतेषु स्थानिवत्त्वाभावे ङित्परत्वाभावेन वृद्धेर्निषेधाभावात् मृजेर्वृद्धिरिति वृद्धिः प्राप्नोति। तच्च लोलुवः, पोपुवः, सरीसृपः, मरीमृजः इत्येतेषु प्रयोगेषु 'न धातुलोप आर्धधातुके' (१। १। ४) इति निषेधात् गुणवृद्ध्योर्नास्ति प्राप्तिः।

**( म० भा० )** ''किं पुनराश्रीयमाणायां प्रकृतौ स्थानिवद्भवति, **आहोस्विदविशेषेण?''** कश्चात्र विशेषः?

**''अविशेषेण स्थानिवदिति चेल्लोपयणादेशे गुरुविधिः''॥ २०॥**

**अविशेषेण स्थानिवदिति चेल्लोपयणादेशयोर्गुरुविधिर्न सिद्ध्यति। श्लेष-म३घ्नः पित३घ्नः द३ध्यश्वः म३ध्वश्वः।"हलोऽनन्तराः संयोगः" ( १। १। ७ ) इति संयोगसंज्ञा, संयोगे गुरु ( १। ४। ११ ) इति गुरुसंज्ञा, गुरोरिति प्लुतो न प्राप्नोति।**

**अत्रेदं तात्पर्यम्** – 'श्लेष्माणं हन्ति' इति लौकिकविग्रहे "अमनुष्यकर्तृके" (३।२।५३) इति टकि उपपदसंज्ञकत्वेन 'उपपदसमासे प्रातिपदिकत्वात् सुपो लुकि' "मगहनजनखनघसां लोपः" (६।४।९८) इति हनोऽकारस्य लोपे विभक्त्यादिकार्ये कृते घकारनकारयोः संयोगत्वात् हलोऽनन्तरेतिसंयोगसंज्ञायां संयोगे गुरु इति मकाराकारस्य गुरुसंज्ञायां गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् (८।२।८६) इत तस्य प्लुतो भवति। अत्र कार्येषु प्लुतगुर्वादिषु स्थानिनो ग्रहणाभावात् स्थानिवत्त्वे संयोगसंज्ञा गुरुसंज्ञा प्लुतश्च न स्युः। एवं पित्त३घ्न इत्यत्रापि ज्ञेयम्।

अविशेषेणार्थादनाश्रीयमाणायां प्रकृतौ स्थानिवत्त्वे द३ध्यश्वः म३ध्वश्व इत्यत्रापि दधि + अश्व मधु + अश्व इत्यवस्थायां यणि संयोगसंज्ञाविधायके सूत्रे इकाररूपायाः प्रकृते ग्रहणाभावेऽपि स्थानिवत्त्वे संयोगसंज्ञा न स्यात्। तद्भावे गुरुसंज्ञापि न स्यात्। गुरुसंज्ञाया अभावे गुरोरिति प्लुतो न प्राप्नोति। तेन द३ध्यश्वः म३ध्वश्व इतीमौ प्रयोगौ न सिद्ध्यतः।

**( म० भा० ) "द्विर्वचनादयश्च प्रतिषेधे"॥ २१॥**

**द्विर्वचनादयश्च प्रतिषेधे वक्तव्याः। द्विर्वचनवरेयलोपेति।**

**अत्रेदं तात्पर्यम्** – सुध्य् उपास्य इति स्थितौ "अनचि च" (८।४।४७) इत्यत्र स्थानी नाश्रितः। अनचीत्यत्र पर्युदासस्याश्रयणेनाज्भिन्नस्तत्सदृशो हल् गृह्यते। तेन यकारस्य स्थानिवद्भावेनाच्त्वादनच्त्वं न स्यात्। अतःस्थानिवद्भाव प्रतिषेधे न पदान्तेति सूत्रे द्विर्वचनस्य पाठः कर्त्तव्यो भविष्यति। एवं यायावर इत्यत्रापि याधातोर्यङि द्वित्वे "यश्च यङः" (३।२।१७६) इति वरचि "अतो लोपः" (६।४।४८) इत्यल्लोपे यलोपे च यायावरः। अत्र "आतो लोप इटि च" (६।४।६४) इत्याकारलोपविधायके सूत्रेऽनाश्रीयमाणायां प्रकृतौ स्थानिवत्त्वे कृतेऽनेनाकारलोपः प्राप्नोति, तद्वारणाय न पदान्तसूत्रे प्रतिषेधो वक्तव्यः। एवं



कण्डूतिः इत्यत्रापि यलोपे कर्त्तव्येऽल्लोपस्य स्थानिवत्त्वे प्रतिषेधे पाठः कर्त्तव्यः। वस्तुतो न पदान्तसूत्रे उक्तेषु प्रयोगेषु स्थानिवद्भावस्य प्रतिषेधः कृत एव।

**( म० भा० ) "क्सलोपे लुग्वचनम्"॥ २२॥**

**क्सलोपे लुग्वक्तव्यः। अदुग्ध अदुग्धाः। लुग्वा दुहदिहलिहगुहात्मनेपदे दन्त्ये ( ७। ३। ७३ ) इति।**

**अत्रेदं तात्पर्यम्** – अदुग्ध अदुग्धाः – दुह्धातोः लुङि अटि तप्रत्यये सार्वधातुकत्वात् शपं प्रबाध्य च्लौ तस्य प्राप्तं सिचादेशं प्रबाध्य शल इगुपधादनिटः क्सः (३।१।४५) इति क्सप्रत्यये "लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये" (७।३।७३) इति क्सलोपे हस्य थत्वे घत्वे जश्त्वे च अदुग्ध इति रूपं जायते एवं थासि अदुग्धाः। अत्र लुग्वेति सूत्रे लुग्ग्रहणं विनापि घोर्लोपेति सूत्रात् लोपपदानुवृत्त्यैवालोन्त्यस्य सूत्रसाहाय्येनैवान्त्याकारस्य लोपे कृते "झलो झलि" (८।२।२६) इति सकारलोपे सिद्धे पुनर्लुग्ग्रहणं सर्वादेशार्थं भवति। ननु लुग्ग्रहणाभावेऽनाश्रीयमाणयां प्रकृतौ स्थानिवद्भावे अदुग्ध अदुग्धा इत्यादिषु प्रयोगेषु कृतान्त्यलोपस्य स्थानिवद्भावात् 'झलो झलि' इत्यस्याप्रवृत्तेस्तत्राझल्त्वात्। एवं चादुग्ध्वहि इत्यस्य प्रयोगस्य कृते लुग्ग्रहणमावश्यकम्। अत्र लुग्ग्रहणं सर्वादेशार्थं प्रयोजयति। अनाश्रीयमाणप्रकृताविति पक्षेऽपि "पूर्वत्रासिद्धे न स्थानिवत्" इति महाभाष्ये निर्णीतत्वात्। अतः क्सस्याचीत्यकारलोपे सर्वत्रेष्टसिद्धिर्नजायते। अदुह्वहिं इत्यत्र झलो झलि इति सूत्रस्याप्रवृत्तेस्तत्राझल्वात्। तस्मादुभयपक्षयोः लुग्वेति सूत्रे लुग्वक्तव्य एव।

**( म० भा० ) "हन्तेर्घत्वम्"॥ २३॥**

**हन्तेश्च घत्वं वक्तव्यम्। घ्नन्ति घ्नन्तु अघ्नन्।**

**अत्रेदं तात्पर्यम्** – हन्धातोर्लटि तिपि शपो लुकि "गमहनजनखनघसां लोपः क्ङित्यनङि" (६।४।९८) इत्यकारलोपे तस्य स्थानिवत्त्वेन "हो हन्तेर्ञ्णिन्नेषु" (७।३।५४) इति हनो हकारस्य घत्वं न स्यात्। घ्नन्तु अघ्नन् इत्यनयोः प्रयोगयोरकारलोपस्य स्थानिवत्त्वेन घत्वं न स्यात् तत्र नकारपरकत्वेऽकारस्य व्यवधानात्।

**( म० भा० ) ''अस्तु तर्ह्याश्रीयमाणायां प्रकृताविति।''**

**ग्रहणेषु स्थानिवदिति चेज्जग्ध्यादिष्वादेशप्रतिषेधः॥ २४॥**

**ग्रहणेषु स्थानिवदिति चेज्जग्ध्यादिष्वादेशस्य प्रतिषेधो वक्तव्यः। निराद्य समाद्य। अदो जग्धिर्ल्यप् ति किति। ( २। ४। ३६ ) इत्यदो जग्धि-भावः प्राप्नोति।**

**अत्रेदं तात्पर्यम् –** यदि कार्यविधायकेषु सूत्रेष्वाश्रीयमाणायां प्रकृतावेव स्थानिवद्भावो भवति तर्हि निराद्य समाद्य इत्यत्र निर्पूर्वकाद् ण्यन्तादद्धातो-र्णिलोपापेक्षयान्तरङ्गत्वाद् वृद्धौ कृतायां ततो णेर्लोपे ''एकदेशविकृतमनन्यवदिति न्यायेनादिरेवायमिति'' ''अदोजग्धिर्ल्यप् ति किति'' (६। १। ६६) इति जग्ध्या-देशः प्राप्नोति। अस्मिन् पक्षे जग्ध्यादेशविधायके णेराश्रयणं नास्ति। अनाश्रीय-माणायां प्रकृतावितिपक्षे तुणेः स्थानिवद्भावेन ण्यन्तस्यादेः जग्ध्यादेशो न प्राप्नोति। अत्र णेः स्थानिनः पूर्वत्वमादित्यस्यास्त्येव।

**( म० भा० )''यणादेशे युलोपेत्त्वानुनासिकात्त्वप्रतिषेधः''॥ २५॥**

**यणादेशे युलोपेत्त्वानुनासिकात्त्वानां प्रतिषेधो वक्तव्यः। यलोप-वाय्वोः अध्वर्य्वोः।'लोपो व्योर्वलि' ( ६। १। ६६ ) इति यलोपः प्राप्नोति।**

**उलोप – अकुर्वि आशाम् अकुर्व्याशाम् नित्यं करोतेः। ये च ( ६। ४। १०८, १०९ ) इत्युकारलोपः प्राप्नोति।**

**ईत्त्व – अलुनि आशाम् अलुन्याशाम् ''ई हल्यघोः'' ( ६। ४। ११३ ) इतीत्वं प्राप्नोति।**

**अनुनासिकात्त्व – अजज्ञि आशाम् अज्ञज्ञ्याशाम् ''ये विभाषा'' ( ६। ४। ४३ ) इत्यनुनासिकात्त्वं प्राप्नोति।**

**अत्रेदं तात्पर्यम् –** अत्रोक्तेषु वार्तिकेषु प्रदत्तोदाहरणेषु अनाश्रीयमाण-प्रकृताविति पक्षमाश्रित्य स्थानिवद्भावं विना दूषणानि प्रदत्तानि। क्वचिदाश्रीयमाण-प्रकृतिकस्य पक्षस्योदाहरणेषु स्थानिवद्भावस्य प्राप्तिमुद्भाव्य दूषणानि प्रस्तुतानि। तथाहि – वाय्वोः अध्वर्य्वोः इत्यत्रोकारस्य यणादेशे कृतेऽनाश्रीयमाणप्रकृतिके



यकारलोपविधायके लोपो व्योर्वलि (६। १। ६६) इति सूत्रे यकारलोपस्य विधानमस्ति न तु स्थानिनो ग्रहणमस्ति। अत उक्तोदाहरणयोः स्थानिवद्भावो न भवति। तेन यकारलोपप्राप्तिरितिदूषणमस्ति।

उलोप – अकुर्वि आशाम् अकुर्व्याशाम् इत्यत्र डुकृञ्कारेत्संज्ञकात् करणार्थकात् कृधातोः लुङि अटि इटि प्रत्यये उप्रत्यये इटः ङित्वे कृ इत्यस्य गुणे रपरत्वे उत्वेऽकारस्य उकारस्य यणि अकुर्वि इति रूपं भवति। ततः आशामि-त्यस्य सम्बन्धेऽच्परकत्वेन यणि अकुर्व्याशामित्यत्र उद्धृत्य पदानि वाक्यानि संस्क्रियन्ते इत्यर्थकस्य वाक्यसंस्कारस्य पक्षमादायाश्रीयमाणप्रकृतिके उकारलोप-विधायके ''नित्यं करोतेः'' 'ये च' (६। ४। १०८, १०९) इति सूत्रे स्थानिन आश्रयणमस्ति। अतोऽजादेशस्य यणः स्थानिवद्भावादुकारलोपदूषणमस्ति। अथवा पक्षेऽस्मिन् परयणादेशस्य वलवत्त्वाद् पूर्वयणोऽभावात् स्थानिवद्भावस्यावश्कता नास्ति।

ईत्त्व – अलुनि आशाम् अलुन्याशाम्। इत्यत्रापि वाक्यसंस्कारपक्ष-मादाय अलुना इ आशामिति स्थितौ यणादेशस्य परत्वेन वलवत्त्वात् ''श्नाभ्य स्तयोरातः'' (६। ४। ११२) इति सूत्रापेक्षया अतो हल्परकत्वेन श्नाकारस्येत्वं प्राप्नोति ''ई हल्यघोः'' (६। ४। ११३) इति।

अनुनासिकात्त्व – अजज्ञि आशाम् अजज्ञ्याशाम् इत्यत्र प्रादुर्भावार्थ-कादीकारेत्संज्ञकाज्जनधातोर्लङि अटि इटि (श्यनः छान्दसत्वात् श्लुः) द्वित्वे इटो ङित्वेन गमहनजनखनघसां लोपः क्ङित्यनङि (६। ४। ९८) इति जन उपधाभूतस्याकारस्य लोपे इट इकारस्य यणि ''ये विभाषा'' (६। ४। ४३) इति नकारस्यात्वं प्राप्नोति। अत्रैकदेशविकृतमनन्यवदिति न्यायेन जन्त्वमस्ति।

अत्रेदं वक्तव्यमस्ति यद् युलोपादिविधिषु स्थानिनां ग्रहणाभावात् स्थानि-वत्वाभावे यलोपादयो विधयः प्राप्नुवन्तीत्याश्रीयमाणायां प्रकृताविति पक्षे दोषः।

**( म० भा० ) ''रायात्त्वप्रतिषेधश्च''॥ २६॥**

**रायात्त्वस्य च प्रतिषेधो वक्तव्यः। रायि आशाम् राय्यास्नाम्।'रायो हलि' ( ७। २। ८५ ) इत्यात्त्वं प्राप्नोति।**

**अत्रेदं तात्पर्यम्** – अत्र रै इ आशाम् पदान्युद्धृत्य वाक्यवाक्यसंस्कार-पक्षमादाय परत्वात् यणि ततो हल्परकत्वाद् "रायो हलि" इत्यात्त्वं प्राप्नोति। अत्रापि यदि परयणादेशस्यायादेशापेक्षयान्तरंगपरिभाषयासिद्धत्वं स्यात् तदाश्रीय-माणप्रकृताविति पक्षे स्थानिवत्त्वाभावे आत्वं प्राप्नोति तस्य प्रतिषेधः कर्त्तव्यः।

**( म० भा० ) "दीर्घे यलोपप्रतिषेधः"॥ २७॥**

**दीर्घे यलोपस्य प्रतिषेधो वक्तव्यः। सौर्ये नाम हिमवतः शृङ्गे, तद्वान् सौर्यी हिमवानिति। सौ इन्नाश्रये दीर्घे कृते "सूर्यतिष्या" इति यलोपः प्राप्नोति।**

**अत्रेदं तात्पर्यम्** – 'सौर्ये' इत्यत्र सूर्येणैकदिक् इत्यर्थे "तेनैकदिक्" (४।३।११२) इत्यणि आदिवृद्धौ सौर्यशब्दस्य शृङ्गयोर्विशेषणत्वेन प्रथमाया द्विवचने औ तस्याः श्यादेशे वृद्धौ सौर्ये इति भवति। अत्रौङः श्यामित्यकारलोपस्य प्रतिषेधेन यकारस्योपधात्वाभावेन सूर्यतिष्येति सूत्रस्य प्राप्तिर्नास्ति। अतो यलोपप्राप्ते-र्भगवता सौर्यीति उदाहरणं प्रदत्तम्। तथाहि – सौर्येऽस्यास्तीति सौर्यी हिमवान्। अत्र मत्वर्थे इनि प्रत्यये सौ 'सौ च' (६।४।१३) इति दीर्घे कृते भत्वादकारलोपे सकारनकारयोर्लोपे च कृते उपधाभूतस्य यकारस्य "सूर्यतिष्यागस्त्यमत्स्याना-मुपधायाः" (६।४।१४९) इति लोपः प्राप्नोति। अत्र यलोपविधायके शास्त्रे दीर्घस्थानिनोऽचोऽनाश्रयणात् अल्लोपस्थानिवद्भावाभावेन यकारस्योपधात्वमना-यासेन सिद्ध्यति। अतो यलोपस्य प्रतिषेधो वक्तव्यः। अयं च दोष आश्रीयमाणायां प्रकृताविति पक्षे विद्यते।

**( म० भा० ) "अतो दीर्घे यलोपवचनम्"॥ २८॥**

**अतो दीर्घे कृते यलोपो वक्तव्यः। गार्गाभ्यां वात्साभ्याम्।** दीर्घे **कृते "आपत्यस्य च तद्धितेऽनाति" ( ६। ४। १५१ ) इति प्रतिषेधः प्राप्नोति।**

**अत्रेदं तात्पर्यम्** – गार्गाभ्यां वात्साभ्याम्। गर्गस्य सङ्घ इत्याद्यर्थे "सङ्घाङ्कलक्षणेष्वञ्यञिञामण्" (४।३।१२७) इत्यणि द्वित्वे विवक्षिते गार्ग्य अभ्याम् इति स्थितौ यस्येति चेत्यकारलोपात् प्रागेव सुपि चेति दीर्घे कृते "आपत्य-



स्य च तद्धितेऽनाति" (६।४।१४८) इति यलोपस्य प्राप्तिः न भवति। तच्च दीर्घाकारविरहिते तद्धिते यकारलोपं विधत्ते। अनाश्रीयमाणप्रकृतिके यलोपविधायके शास्त्रे दीर्घस्थानिनोऽचोऽनाश्रीयमाणत्वात् स्थानिवद्भावस्याभावेन लक्ष्ये दीर्घाका-रयुते तद्धिते सति यलोपस्य प्राप्तिरसम्भवी।

यदा "गोत्रस्त्रियाः कुत्सने ण च" (४।१।१४७) इति सूत्रेण कुत्सार्थे गार्ग्या अपत्यं पुमानित्यर्थे गार्गीशब्दात् णप्रत्यये "तसिलादिष्वाकृत्वसुचः" (६।३।३५) इति सूत्रस्थेन "भस्याढे तद्धिते पुंवद्भावो वक्तव्यः" इति वार्तिकेन पुंवद्भावे। ङीपो निवृत्तौ द्वित्वविवक्षायां भ्यामि प्रत्यये गार्ग्य अ भ्याम् इति स्थिते यस्येति चेति अकारलोपात् पूर्वमेव सुपि चेति दीर्घे कृते ततः भत्वादकारलोपे "आपत्यस्य च तद्धितेऽनाति" (६।४।५१) इति दीर्घाकारविरहिते तद्धिते यकारलोपविधानादत्र लक्ष्ये दीर्घाकारविशिष्टस्य तद्धितस्य सत्त्वाद् यलोपस्याना-पत्तिः स्यात्। अत्राश्रीयमाणायाः प्रकृतेरभावात्, यलोपविधायके सूत्रेऽतः स्थानि-वत्त्वाभावेन यलोपानापत्तिर्भवत्येव।

**( म० भा० ) "नैष दोषः। आश्रीयते तत्र प्रकृतिस्तद्धित इति।"**

**अत्रेदं तात्पर्यम्** – तत्र यलोपविधायके सूत्रे आश्रीयते प्रकृतिः दीर्घाकार-स्थान्यकाररूपः। अनाताविव्यत्र नञः पर्युदासाश्रयेणाद्भिन्नात् सदृशे तद्धित इत्यर्थे-नाद्भिन्नत्वेन प्रकृत्याश्रयणात् स्थानिवद्भावस्य प्रवृत्तौ यलोपस्य प्राप्तिर्भवति।

**( म० भा० ) "सर्वेषामेव परिहारः। उक्तं विधिग्रहणस्य प्रयोजनम् -विधिमात्रे स्थानिवद् यथा स्यादनाश्रीयमाणायामपि प्रकृताविति।"**

**अथवा पुनरस्त्वविशेषेण स्थानिवदिति। ननु चोक्तम् विशेषेण स्थानिवदिति चेल्लोपयणादेशे गुरुविधिः द्विर्वचनादयश्च प्रतिषेधे क्सलोपे लुग्वचनम् हन्तेर्घत्वमिति।**

**अत्रेदं तात्पर्यम्** – पूर्वविधावित्यत्र विधिग्रहणप्रयोजनावसरे पूर्वस्माद् विधिः पूर्वस्य विधिरिति समासद्वयलाभाय विधिग्रहणस्य फलं दत्तम्। तच्च भगवता खण्डयित्वा विधिग्रहणस्य फलमाश्रीयमाणायामनाश्रीयमाणायाञ्च प्रकृतौ स्थानि-वत्त्वमुक्तम्। तथाहि – "प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति न काञ्चिद् प्राधान्येन

विभक्तिमाश्रयन्ति। प्रातिपदिकार्थे निर्दिष्टे यां यां विभक्तिमाश्रयितुं बुद्धिरुपजायते सा साश्रयितव्ये''ति इति विधिग्रहणं विना पूर्वस्मात् पूर्वस्येति विभक्त्योर्लाभे सिद्धे पुनर्विधिग्रहणं व्यर्थीभूय विज्ञापयति – आश्रीयमाणायामनाश्रीयमाणायाञ्च प्रकृतौ स्थानिवदेव स्यान्मा भूत्स्वाश्रयकार्यमिति। तेन वाय्वोरध्वर्य्वोरित्यत्रानाश्रीयमाणप्रकृतिकेन 'लोपो व्योर्वलि' इति सूत्रेण यलोपो न भवति। एतच्चेदं तर्हि प्रयोजनमित्यादि भाष्ये भगवता सिद्धान्तितम्।

अथवा पुनरस्त्वविशेषेण स्थानिवदिति भगवतोक्तम्। तत्र श्लेष्म३घ्नः पित्त३घ्न द३ध्ध्य म३ध्वश्च इत्युदाहरणेषु अल्लोपयणादेशयोः गुरुविधिर्न सिद्ध्यति। एवं मद्ध्वरिः यायावरः इत्यादिषु स्थानिवद्भावाद् यणादिकं न भविष्यति। अदुग्ध इत्यादिषु क्सस्य सम्पूर्णस्य लोपाय लुग्वेति सूत्रे लुग्ग्रहणं कर्त्तव्यमन्यथा 'क्सस्याचि' (६। ३। ७२) इति सूत्रेण ''अलोऽन्त्यस्येति सहायेनान्त्यस्याकारस्य'' लोपे सति 'झलो झलि' इत्यस्य सलोपे प्रवृत्तिर्न स्यात्। अकारस्य स्थानिवद्भावात्। एवं घ्नन्ति घ्नन्तु इत्यत्राप्यलोपस्य स्थानिवद्भावेन हो हन्तेरिति नकारपरकत्वाभावेन हस्य घत्वं न स्यात्। तत्र गुरुविधिसिद्धये समाहितं भगवता – नवा संयोगस्यापूर्वविधित्वादिति। द्विर्वचनादयो न पदान्तसूत्रे स्थानिवद्भावप्रतिषेधार्थं पठिताः सन्ति। क्सलोपे लुग्ग्रहणं कृतमेव। घ्नन्तु इत्यादिसिद्धये ''हो हन्तेर्ञ्णिन्नेषु'' (७। ३। ५४) इति सूत्रस्थे पञ्चमे वार्तिके सिद्धन्तूपधालोपवचनादिति। तस्यायमाशयो यद् हकारस्य नकारेण सम्बन्धो नास्ति किन्तूपधालोपेन सह वर्तते।

**॥''अचः परस्मिन् पूर्वविधौ''(१।१।५७)॥**

*****

## ॥ न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वार-दीर्घजश्चर्विधिषु॥ १। १। ५८॥

अत्र **''काशिकावृत्तिः''** –

**पूर्वेणातिप्रसक्तः** स्थानिवद्भाव एतेषु विधिषु प्रतिषिध्यते। पदान्त-विधिं प्रत्यजादेशो न स्थानिवद्भवति। कौ स्तः, यौ स्तः, तानि सन्ति, यानि सन्ति। 'श्नसोरल्लोपः' (अ. सू. ६। ४। ११) क्ङिति सार्वधातुके इति परनिमित्तकः स पूर्वविधावावादेशे यणादेशे च कर्त्तव्ये स्थानिवत् स्यात्। अस्माद्वचनान्न भवति। द्विर्वचनविधिं प्रति न स्थानिवद् भवति, दद्ध्यत्र मद्ध्वत्र। यणादेशः परनिमित्तकस्तस्य स्थानिवद्भावात् ''अनचि च'' (अ. सू. ८। ४। ४७) इति धकारस्य द्विर्वचनं न स्यादस्माद्वचनाद्भवति। वरे योऽजादेशः स पूर्वविधिं प्रति न स्थानिवद्भवति। अप्सु यायावरः प्रवपेत पिण्डान्। याधातोर्यङन्तात् ''यश्च यङः'' (अ.सू. ३। २। १७६) इति वरचि कृते, ''अतो लोपः'' परनिमित्तकस्तस्य स्थानिवत्त्वात् ''आतो लोप इटि च'' (अ.सू. ६। ४। ६४) इत्याकारलोपः स्यादस्माद्वचनान्न भवति। यलोप, यलोपविधिं प्रत्यजादेशो न स्थानिवद् भवति। कण्डूतिः। कण्डूयतेः क्तिचि कृतेऽतो लोपः परनिमित्तकः ''लोपो व्योर्वलि'' (६। १। ३६) इति यलोपे स्थानिवत् स्यादस्माद् वचनान्न भवति। स्वर, स्वरविधिं प्रति अजादेशो न स्थानिवत् भवति। चिकीर्षकः, जिहीर्षकः। ण्वुलि कृतेऽतो लोपः परनिमित्तको लिति प्रत्ययात् पूर्वमुदात्तमिति स्वरे कर्त्तव्ये न स्थानिवद्भवतीति। सवर्ण, सवर्णविधिं प्रति अजादेशो न स्थानिवद्भवति। शिण्ढि, पिण्ढि। शिषेः पिषेश्च लोण्मध्यमपुरुषैकवचने ''रुधादिभ्यः श्नम्'' (अ.सू. ३। १। ७८) हित्वधित्वष्टुत्वजश्त्वेषु कृतेषु ''श्नसोरल्लोपः'' (अ.सू. ६। ४। १११) क्ङिति सार्वधातुके परनिमित्त-

कोऽनुस्वारस्य ययि परसवर्णे कर्त्तव्ये न स्थानिवद्भवति। अनुस्वार, अनुस्वारविधिं प्रत्यजादेशो न स्थानिवद् भवति। शिंषन्ति, पिंषन्ति। "नश्चापदान्तस्य झलि" (अ.सू. ८। २। २४) इति अनुस्वारे कर्त्तव्ये श्नसोरल्लोपो न स्थानिवद् भवति। दीर्घविधिं प्रत्यजादेशो न स्थानिवद्भवति। प्रतिदीव्ना, प्रतिदीव्ने। प्रतिदिवन्नित्येतस्य 'भस्य' (अ.सू. ६। ४। २९) इत्यधिकृत्य तृतीयैकवचने चतुर्थ्येकवचने "अल्लोपोऽनः" (अ.सू. ६। ४। १३४) इति अकारलोपः परनिमित्तकस्तस्य स्थानिवद्भावात् "हलि च" (अ.सू. ८। २। ७७) इति दीर्घत्वं न स्यात् न ह्ययं वकारो हल्पर इत्यस्माद् वचनाद् भवति। जश्, जश्विधिं प्रत्यजादेशो न स्थानिवद् भवति। सग्धिश्चमे सपीतिश्चमे, बब्धान्ते हरीधानाः। अदेः क्तिनि 'बहुलं छन्दसि' (अ.सू. २। ४। ३९) इति घस्लादेशः "घसिभसोर्हलि च" (अ.सू. ६। ४। १००) इत्युपधालोपः, "झलो झलि" (अ.सू. ८। २। २६) इति सकारलोपः, "झषस्तथोर्धोऽधः" (अ.सू. ८। २। ४०) इति धत्त्वं, उपधालोपस्य स्थानिवत्त्वात् झलां जश्झशि (अ.सू. ८। ४। ५३) इति धकारस्य जश्त्वं न स्यादस्माद्वचनाद्भवति। समाना ग्धिः, समानस्य सभावः सग्धिः। बब्धामिति। भसेर्लोड्द्विवचने शपः श्लुः, द्विवचनमभ्यासकार्यं "घसिभसोर्हलि च" (अ.सू. ६।४।१००) इत्युधालोपः, "झलो झलि" (अ.सू. ८। २। २६) इति सकारलोपः, "झषस्तथोर्धोऽधः" (अ.सू. ८। ४। ४०) इति धत्वम्, उपधालोपस्य स्थानिवत्त्वात् "झलां जश् झशि" (अ.सू. ८।४।५३) इति जश्त्वं न स्यादस्माद् वचनाद् भवति। चर्, चर्विधिं प्रत्यजादेशो न स्थानिवद्भवति। जक्षतुः, जक्षुः, अक्षन्नमीमदन्त पितरः। लिड्द्विवचनबहुवचनयोरदेर्घस्लादेशः, "गमहनजनखनघसां लोपः" (अ.सू. ६।४।९९) इत्युपधालोपः, द्विर्वचनमभ्यासकार्यं, तत्रोपधालोपस्य स्थानिवत्त्वात्, "खरि च" (अ.सू. ८।४।५५) इति धकारस्य चर्त्वं न स्यादस्माद्वचनाद् भवति। "शासिवसिघसीनां च" (अ.सू. ८। ३। ६०) इति षत्वम्।



अक्षन्नित्यदेर्लुङ्बहुवचने घस्लादेशः, च्लेरागतस्य "मन्त्रे घसह्वर" (अ.सू. २। ४। ८०) इति लुक्, "गमहनजनखनघसाम्" (अ.सू. ६। ४। ९८) इत्युपधालोपः, तस्य स्थानिवत्त्वात् "खरि च" (अ.सू. ८। ४। ५५) इति चर्त्वं न स्यादस्माद् वचनाद् भवति। स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवद्भवति। अन्यत्र तु स्थानिवदेव। तेन बहुखट्वकः, किर्योः, गिर्योः, वाय्वोरिति स्थानिवत्त्वात् स्वरदीर्घयलोपा न भवन्ति। ॥ इति काशिकावृत्तिः॥

"न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु"

तत्र –

"पदान्तविधिं प्रति न स्थानिवदिच्युते, तत्र वेतस्वानिति रुः प्राप्नोति। नैष दोषः।" भसंज्ञाऽत्र बाधिका भविष्यति – "तसौ मत्वर्थे" (१।४।१९) इति। अकारान्तमेतद् भसंज्ञां प्रति, पदसंज्ञां प्रति सकारान्तम्।

अत्रेदं तात्पर्यम् – वेतसाः सन्त्यस्मिन् स वेतस्वान् (कश्चन देशः) अत्र कुमुदनडवेतसेभ्यो ड्मतुपि प्रत्यये टिलोपे "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" (८।२।९) इति मकारस्य वकारे ड्मतुप्प्रत्ययस्य स्वाद्यन्तर्गतत्वात् तत्पूर्वस्य वेतस्शब्दस्य पदत्वेन सकारस्य रुत्वं प्राप्नोति, तन्न। 'तसौ मत्वर्थे' (१। ४। १९) इति सकारस्य वेतस्शब्दस्य भत्वमस्ति। अत्र विधानं विधिरिति भावसाधनपक्षमाश्रित्य न पदान्तसूत्रेण तत्रैव स्थानिवत्त्वस्य निषेधो भवति यत्र पदचरमावयकपदान्तताया विधानं भवति। अत्र टिलोपस्य स्थानिवत्त्वेनाकारान्तस्य भत्वं भवति। स्थानिवत्त्वस्य निषेधस्तु न भवति, भसंज्ञया पदान्तताया विधानाभावात्। पदसंज्ञायां कर्त्तव्यायां तु टिलोपस्य स्थानिवत्त्वस्य निषेधः स्यादेव रुत्वस्य पदान्तत्वविधानात्। वेतस्वान् इत्यत्र रुत्वं प्राप्नोति, तस्य निवारणं मूल एव पदेऽन्त इति व्याख्याय करिष्यन्ति भगवत्पादाः। व्याख्यानं च तस्य तत्रैव करिष्यते। अत एव भगवान् पतञ्जलिः "अकारान्तमेतद् भसंज्ञां प्रति, पदसंज्ञां प्रति तु सकारान्तमित्युक्तवान्। अतो वेतस्वान् इत्यत्र रुत्वरूपायाः पदान्तताया विधीयमानत्वात्।"

तत्र भपदसंज्ञयोः समानावधिकत्वाभावात् तयोर्बाध्यबाधकभावो न भवति। अतो रुत्वं प्राप्नोत्येव।

**( म० भा० ) ''ननु चैवं विज्ञायते – यः सम्प्रति पदान्त इति। कर्मसाधनस्य विधिशब्दस्योपादाने तदेवं स्यात्। अयं च विधिशब्दोऽस्त्येव कर्मसाधनः विधीयते विधिरिति। अस्ति च भावसाधनो विधानं विधिरिति। तत्र भावसाधनस्य विधिशब्दस्योपादाने एष दोषो भवति। इदं च ब्रह्मबन्ध्वा ब्रह्मबन्ध्वै धकारस्य जश्त्वं प्राप्नोति।''**

**अत्रेदं तात्पर्यम् –** ननु भावसाधनपक्षे भवेद्दूषणं कर्मसाधनपक्षे दूषणं निरस्तं भविष्यति। कथमिति चेदित्थम् – सम्प्रति पदान्त इति भाष्यकारवचनादयमर्थो निर्गलति स्थानिवद्भावनिषेधं विना यः सिद्धः पदान्तः तद्विधौ न पदान्तेतिसूत्रेण स्थानिवद्भावस्य निषेधो भवति। यथा – कानि सन्ति कौ स्त इत्यत्राल्लोपस्य स्थानिवत्त्वस्य निषेधो भवति। वेतस्वान् इत्यत्र तु सकारः स्थानिवत्त्वनिषेधाद् विना पदान्तत्वेनाऽसिद्धः। अतोऽत्र भवत्येव स्थानिवद्भावः। सकारस्यापदान्तत्वात् तस्य रुत्वं न प्राप्नोति। इत्थं कर्मसाधनपक्षे दूषणं नास्ति। किन्तु भावसाधनपक्षे रुत्वप्राप्तिरूपं दूषणमस्त्येवेति। एवं च ब्रह्मबन्ध्वा ब्रह्मबन्ध्वै इत्यत्रापि भावसाधनपक्षे जश्त्वरूपं दूषणमापतति।

तथाहि – ब्रह्मबन्धु शब्दात् 'ऊङुतः' सूत्राद् ऊङि प्रत्यये सवर्णदीर्घे ''अन्तादिवच्च'' इति परस्यादिवद्भावादेकादेशस्योङ्ग्रहणेन ग्रहणात् तस्मिन् परतः 'स्वादिष्वसर्वनामस्थाने' इति पदसंज्ञायां धकारस्य पदान्तता विधेयेति स्थानिवद्भावस्य निषेधात् ''झलां जशोन्ते'' इति धकारस्य दत्त्वं प्राप्नोति। अत्र भसंज्ञां प्रत्येकादेशस्य स्थानिवत्त्वादुकारान्तमेतद् ब्रह्मबन्धुपदम्, पदसंज्ञां प्रति तु धकारान्तं पदम्। एकादेशस्य प्रकृतसूत्रेण स्थानिवत्त्वस्य निषेधात्। अतो द्वयोर्भपदसंज्ञयोर्भिन्नावधिकत्वेन बाध्यबाधकभावो नास्ति। अतः विधिशब्दस्य भावसाधनपक्षे दूषणमस्ति। ब्रह्मबन्ध्वा ब्रह्मबन्ध्वै इत्यत्रैकादेशस्यैवोदाहरणत्वम्। न तु टाङेविभक्त्योः परतो यणादेशस्योदाहरणत्वं तस्या विवक्षितत्वात्। एकादेशस्यैवोदाहरणत्वादुभयत आश्रयणे नान्तादिवदिति वक्ष्यमाणं समाधानं संगच्छते।

**( म० भा० ) ''अस्ति पुनः किञ्चिद्भावसाधनस्य विधिशब्दस्योपादाने सतीष्टं संगृहीतमाहोस्विद्दोषान्तमेवेति?'' अस्तीत्याह। कानि सन्ति, यानि सन्ति, कौ स्त इति योऽसौ पदान्तो यकारो वकारो वा श्रूयेत, स न**



**श्रूयते। षडिकश्चापि सिद्धो भवति। वाचिकस्तु न सिद्ध्यति। अस्तु तर्हि कर्मसाधनः। यदि कर्मसाधनः, षडिको न सिद्ध्यति। अस्तु तर्हि भावसाधनः वाचिको न सिद्ध्यति। वाचिकषडिकौ न संवदेते। कर्त्तव्योऽत्र यत्नः।**

**अत्रेदं तात्पर्यम् –** अत्र सूत्रे पदान्तविधौ स्थानिवद्भावो न स्यादिति सामान्यार्थः। अत्र विधिशब्दाद् विधीयमानस्य किप्रत्ययस्य द्विधार्थो लभ्यते। प्रथमस्तावद्भावार्थकः किप्रत्ययः। विधानं विधिरिति। विधिपदेन पदान्तपदस्य षठ्यन्तस्य ''कृद्योगा च षष्ठी समस्यते इति वक्तव्यमि''ति वार्तिकेन 'षष्ठी' (२।२।८) इति सूत्रस्थेन समासः। सा च षष्ठी कर्तृकर्मणोः कृति इति सूत्रेण कर्म्मणि विधीयते कृद्योगेन। तस्याः षष्ठ्यर्थो वृत्तित्वम्। पदान्तस्येत्यत्रान्तपदं चरमावयवार्थबोधकम्। विपूर्वकस्य धाधातोर्विधेयत्वमर्थः। प्रयोजकत्वं सप्तम्यर्थः। तस्य स्थानिवद्भावेऽन्वयः। तदेवं मिलितोऽर्थः – पदचरमावयववृत्तिविधेयताप्रयोजकः स्थानिवद्भावो न भवतीति सम्पद्यते। अयमेव भावसाधनपक्षः। पक्षेऽस्मिन् पदचरमावयवकविधेयता यत्र भवति तत्रैव स्थानिवद्भावो निषिध्यते। यथा – कानि सन्ति कौ स्त इत्यादिषु। यत्र पदचरमावयवकविधेयत्वं न भवति तत्र स्थानिवद्भावस्य निषेधो न भवति। यथा एषो यन् हसतीत्यादिषु। अत्र सुलोपरूपस्य तादृशी विधेयता नास्ति।

द्वितीयपक्षोऽस्ति कर्मसाधनम्। तथाहि – विधीयतेऽसौ विधिः। अत्र किप्रत्ययस्य कर्मण्यर्थे विधानमस्ति। पदान्तस्य विधिरित्यत्र शेषार्थिका षष्ठी। तस्य पदान्तस्य विधिशब्देन सह 'षष्ठी' इति सूत्रेण षष्ठीतत्पुरुषसमासः। शेषषष्ठ्या निरूपकांशे साकाङ्क्षविधेयतानिरूपितमुद्देश्यत्वमर्थः। किप्रत्ययार्थ आश्रयत्वम् विधावित्यत्र सप्तम्याः प्रयोजकत्वमर्थः। तस्य च स्थानिवद्भावेऽन्वयः। ततः पदान्तनिष्ठोद्देश्यतानिरूपितविधेयताश्रयप्रयोजकः स्थानिवद्भावो न भवतीत्यर्थः सम्पद्यते।

भावसाधनपक्षे वेतस्वान् न सिद्ध्यति। यतो हि भसंज्ञां प्रति स्थानिवद्भावाद् टिलोपस्य, सकारान्तत्वाभावान्नास्ति भसंज्ञा। पदान्तताया विधीयमाने तु स्थानिवत्त्वस्य निषेधात् सकारान्तस्य पदत्वात् भवति रुत्वप्रसङ्गः। कर्मसाधनपक्षे तु

वेतस्वान् इत्यत्र सकारः स्थानिवत्त्वनिषेधाद् विना पदान्तत्वेनासिद्धः। तस्मात् टिलोपस्य स्थानिवद्भावो भवत्येव। सकारस्यापदान्तत्वेन भवति रुत्वाप्रसङ्गः। भावसाधनपक्षे ब्रह्मबन्ध्वा ब्रह्मबन्ध्वै इत्यत्र भवति जश्त्वापत्तिश्च। इदं प्रागेव व्याख्यातम्।

तत्र भाष्ये "भावसाधने किञ्चिदिष्टं सङ्गृहीतं भवति"? अथवा दोषान्तमेव? तत्र भावसाधनपक्षेऽपि कानि सन्ति कौ स्त इत्यत्र स्थानिवद्भावे सति यणावादेशयोः कृतयोः यकारो वकारो वा श्रूयेत स न श्रूयते स्थानिवद्भाव-निषेधात्। षडिकश्चापि सिद्धो भवति। तथाहि – अनुकम्पितः षडङ्गुलिः इत्यर्थे "बह्वचो नाम्नष्ठज्वा" (५।३।७८) इति ठचि कृते "ठाजादावूर्ध्वं द्वितीयादचः" इति अङ्गुलिशब्दस्य लोपे कृतस्यैकादेशस्याजादित्वेन भत्वाद् 'यस्येति च' (६।४।१४८) इत्यकारलोपे षषित्यस्यान्तर्वर्तिनीं विभक्तिमाश्रित्य सुप्तिङन्तं पदमिति सूत्रेण सिद्धस्य पदत्वेन पदान्तताया अविधानान्नास्ति स्थानिवत्त्वनिषेधः इत्यकार-लोपस्य स्थानिवत्त्वादकारान्तस्य भसंज्ञा। पदसंज्ञात्वन्तर्वतिनीं विभक्तिमाश्रित्येति सिद्धं जश्त्वम्। कर्मसाधनपक्षे तु षषः षकारस्य पदान्तत्वेन सिद्धत्वादकारलोपस्य स्थानिवद्भावस्य निषेधात्, तुल्यावधिकयोर्भपदसंज्ञयोर्भसंज्ञया पदसंज्ञाया बाधनाद् भवति जश्त्वस्यासिद्धिः।

किन्तु भावसाधनपक्षमादाय वाचिको न सिद्ध्यति। यतो ह्यत्रापि अनुकम्पितो वागाशीर्दत्तो (वाचिक) इत्याद्यर्थे 'बह्वचो नाम्नष्ठज्वा' इति ठचि तस्यैकादेशे 'ठाजादावूर्ध्वं द्वितीयादचः' इति द्वितीयाकारादूर्ध्ववर्तिनः शीर्दत्तस्य लोपे भत्वादाकारस्य "यस्येति च"इतिलोपे, समासेऽन्तर्वर्तिनीं विभक्तिमाश्रित्य वाच्शब्दः समासे सुबन्तत्वेन पदमस्ति, तस्मात् तस्य पदान्तताया अविधानादा-कारलोपस्य स्थानिवद्भावस्य निषेधो न भवति किन्तु स्थानिवद्भावेनाकारान्तवाच्-शब्दस्य भसंज्ञा भवति, चकारान्तस्य पदसंज्ञा भवति। उभयोर्भपदसंज्ञयोः पृथक् पृथगवधित्वात् बाध्यबाधकभावो न जायते। अतो वाच् इत्यस्य पदत्वत्वात् 'चोः कुः' इति चकारस्य कुत्वं प्राप्नोति। यदि कर्मसाधनपक्ष आश्रीयते तदा षडिको न सिद्ध्यति। भावसाधनपक्षाश्रयणे वाचिको न सिद्ध्यति। अत एव भगवान् भाष्य-



कारो ब्रूते – "वाचिकषडिकौ न संवेदेते कर्त्तव्योऽत्र यत्नः" इति उभावेकपक्षा-श्रयेण न सिद्ध्यत इति भावः। यत्नश्चेत्थम् –

'वाचिकः' इत्यत्र "एकाक्षरपूर्वपदानामुत्तरपदलोपः वचनादिति" शेव-लसुपरिविशालवरुणार्यमादीनाम्" (५।३।८४) सूत्रस्थमहाभाष्यीयवार्तिक-मनुसृत्य "आशीर्दत्त शब्दस्य लोपे" सति तत्राजादेशस्याभावादेव स्थानिवद्भावो न भविष्यति। भपदसंज्ञयोः चकारस्यैव प्राप्तिर्भवति। तयोः समानावधिकत्वात् भसंज्ञया पदसंज्ञाया बाधनं भविष्यति। अतः चकारान्तस्य वाच् इत्यस्य पदत्वा-भावान्न कुत्वं प्राप्नोतीत्यर्थः।

षडिकः इत्यत्रापि शेवलसुपरीत्यादिसूत्रस्थमहाभाष्यीयं षष्ठादिवचना-सिद्धमितिवार्त्तिकमनुसृत्याङ्गुलिदत्तशब्दस्य "ठाजादावूर्ध्वं द्वितीयादचः" इति सूत्रेण लोपेऽवशिष्टस्य षडः तदुत्तरवर्तिनोऽकारस्य 'यस्येति च' इति सूत्रेणाकारलोपे तस्याजादेशत्वेन स्थानिवद्भावादकारान्तस्य भसंज्ञा षकारान्तस्य च पदसंज्ञा भवति। भिन्नावधिकत्वाद् भपदसंज्ञयोर्बाध्यबाधकत्वाभावेन षकारान्तस्य पदसंज्ञायां तस्य जश्त्वं भविष्यति।

ब्रह्मबन्ध्वा ब्रह्मबन्ध्वै इत्यत्र ब्रह्मबन्धुशब्दादूङुतः इत्यूङि सवर्णदीर्घे एकादेशस्य परादिवद्भावे स्वादिष्विति धकारस्य पदान्तत्वेन पदचरमावयवविधानेन (जश्त्वविधानेन) एकादेशस्य स्थानिवद्भावनिषेधेन धकारस्य जश्त्वं प्राप्नोतीति भावसाधनपक्षे दूषणमभिहितम्। तन्नास्ति सम्यक्, यतो हि "उभयत आश्रयणे नान्तादिवत्" इति स्थानिवद्भावस्य निषेधेन 'स्वादिष्वसर्वनामस्थाने' इति सूत्रेण पदसंज्ञा न प्राप्नोति धकारस्य। तस्मिन् प्रातिपदिकप्रत्यययोः सतोरेव पदसंज्ञायाः विधानात्। अतः स्थानिवद्भावनिषेधात् धकारस्य पदान्तत्वेन जश्त्वं प्राप्नोतीति कथनं निष्फलमेव।

वेतस्वान् इत्यत्र भावसाधनमाश्रित्य स्थानिवद्भावनिषेधात् (टिलोपस्य) सकारान्तस्य पदत्वाद् रुत्वं प्राप्नोतीति तन्न, नैवं पदस्यान्तः पदान्तः समासः क्रियते किन्तु पदेऽन्तः पदान्त इति सप्तमीतत्पुरुषसमासे कृते, तस्य विधिं प्रति स्थानिवत्त्वस्य निषेधो भवतीत्यर्थकरणेन मतुप्प्रत्ययस्य पदत्वाभावादेव स्थानिव-

द्भावस्य निषेधाभावे टेर्लोपस्य स्थानिवत्त्वेनान्तेऽकारसत्त्वेन सकारपदान्तताया अभावेन रुत्वं न प्राप्नोति।

**( म० भा० ) ''अथवा यथैवान्यान्यपि पदकार्याण्युपप्लवन्ते रुत्वं जश्त्वं च एवमिदमपि पदकार्यमुपप्लोष्यते। किम्? असंज्ञानाम्।''**

**अत्रेदं तात्पर्यम् –** यथा 'वेतस्वान्' 'ब्रह्मबन्ध्वा' इत्यत्र पदान्तावयवसम्पादने टेर्लोपस्यैकादेशस्य च स्थानिवद्भावस्य निषेधेन रुत्वं जश्त्वं च प्राप्नुतः तथैव यचि भम् इति भसंज्ञाऽपि पदकार्यं भवति। 'सुप्तिङन्तं पदम्' (१।४।१४) इति सूत्राद्यचि भम् इत्यत्राप्यनुवर्तते पदम्। तेन पदं सद्भं भवतीत्यर्थे पदत्वे लब्धे पदत्वनिबन्धना रुत्वप्रतिबन्धनार्था भसंज्ञा पदविषयत्वाद् भवति पदान्तविधिरिति स्थानिवत्त्वस्य निषेधः 'तसौ मत्वर्थे' इति भत्वात् वेतस्वान् इत्यत्र रुत्वाभावः सिद्ध्यति।

**( म० भा० ) ''वरे यलोपविधिं प्रति न स्थानिवद् भवतीत्युच्यते तत्र ते अप्सु यायावरः प्रवपेत पिण्डान् इति। अवर्णलोपविधिं प्रति स्थानिवत् स्यात्। नैष दोषः। नैवं विज्ञायते वरे यलोपविधिं प्रति न स्थानिवदिति। कथं तर्हि? वरे अयलोपविधिं प्रतीति। किमिदमयलोपविधिं प्रतीति। अवर्णलोपविधिं प्रति, यलोपविधिं च प्रतीति।''**

**अयं भावः –** याधातोर्यङि द्वित्वे 'यश्च यङः' (३।२।१७६) इति वरचि तस्यार्धधातुकत्वाद् 'अतो लोपः' (६।४।४८) इत्यकारलोपे 'लोपो व्योर्वलि' (६।१।६६) इति य्लोपे स्वादिकार्ये यायावरः इति रूपं जायते। अत्र यदि वरे यलोपविधिं प्रति स्थानिवद्भावो न स्यादित्येवार्थः क्रियते तर्हि यलोपमात्रकर्त्तव्ये स्थानिवत्त्वस्य निषेधः स्यात्। या इत्यस्याकारलोपे कर्त्तव्येऽल्लोपस्य स्थानिवत्त्वं स्यात्। तच्चाकारलोपोऽत्र नेष्यते। तत्र महाभाष्यकारा वदन्ति यकारलोपं प्रति न स्थानिवदिति नैवं विज्ञायते किन्तु वरे अयलोपविधिं प्रति स्थानिवद्भावो न भवतीति विज्ञायते। यस्यार्थो भवति – अवर्णलोपविधिं प्रति यलोपविधिं च प्रति स्थानिवद्भावो न भवतीति। तेन या इत्यस्याकारलोपे कर्त्तव्येऽल्लोपस्यापि स्थानिवद्भावो न भवति। तेन या धातोराकारस्याजादिक्ङित्परत्वाभावात् ''आतो लोप इटि च '' (६।४।६४) इति लोपो न भवति।



**( म० भा० ) ''अथवा योगविभागः करिष्यते। 'वरे लुप्तं न स्थानिवत्', ततो यलोपविधिं प्रति न स्थानिवदिति यलोपे किमुदाहरणम्? कण्डूयतेरप्रत्ययः कण्डूः इति। नैतदस्ति। क्वौ लुप्तं न स्थानिवत्। इदं तर्हि प्रयोजनम्। सौरी बलाका। नैतदस्ति। उपधात्वविधिं प्रति न स्थानिवत्। इदं तर्हि प्रयोजनम्। कण्डूतिर्वल्गूतिः। नैतदस्ति प्रयोजनम्। कण्डूया वल्गूया इति भवितव्यम्। इदं तर्हि कण्डूयतेः क्तिच्। ब्राह्मणकण्डूतिः। क्षत्रियकण्डूतिः।''**

**अयं भावः –** पूर्वं वरे यलोप इत्यत्राकारं प्रश्लिष्य यायावरः इत्यत्राकारलोपदूषणं परिहृतमिदानीमुपायान्तरं दर्शयति भाष्यकारः – 'अथवा योगविभागः करिष्यते' इति। तथाहि न पदान्तेति सूत्रे वरे यलोप इति पदद्वयस्य विभागः क्रियते। योगस्यावयवभूतमपि पदं योगशब्देनोच्यते। वरे इति पृथक् पदमस्ति। अत्रार्थो भविष्यति वरे लुप्तं न स्थानिवद्भवति। तस्मात् वरचि परेऽल्लोपस्य न स्थानिवद्भावो भवति। तेन आतो लोप इटि चेत्याकारस्य लोपो न प्राप्नोति। यलोपविधेरर्थो भवति – यलोपे कर्त्तव्ये अजादेशस्य स्थानिवद्भावो न स्यादिति। तस्य यलोपविधावुपयोगः करिष्यते। यलोपविधौ किमुदाहरणम्? कण्डूयतीति कण्डूः। कण्ड्वादिगणपठिताद्ञकारेत्संज्ञकात् कण्डूधातोः क्विपोऽभावोऽस्ति। स्वयं भाष्यकाराः 'कण्ड्वादिभ्यो यक्' (३।१।२७) इति सूत्रभाष्ये वदन्ति ''नैतेभ्यः क्विप् दृश्यत'' इति। अतः ''सुप आत्मनः क्यच्'' (३।१।८) इति क्यच्प्रत्यय इच्छार्थे भवति। ततः कण्डूयतीति कण्डूः। अत्र कर्त्तरि क्विपि तस्य सर्वापहारि लोपे तस्यार्धधातुकत्वेन ''अतो लोपः'' (६।४।४८) इत्यल्लोपे ''लोपो व्योर्वलि'' (६।१।६) इति वकारलोपे स्वादिकार्ये कण्डूः इति रूपं भवति। अत्र यकारलोपे कर्त्तव्येऽचः परस्मिन्निति स्थानिवद्भावादल्लोपस्य यकारलोपो न प्राप्नोति। स्थानिवद्भावस्य निषेधात् यकारलोपः सिद्ध्यति। नास्त्येतदुदाहरणं यलोपस्य। वक्ष्यमाणवार्तिकेनात्र क्वौ लुप्तं न स्थानिवदिति निषेधो भविष्यति।

इदं तर्हि प्रयोजनम् सौरी बलाका। इत्यत्र ''सूर्यैणैकदिक्'' (४।३।११२) इत्यणि ततोऽणन्तात् ङीपि आदिवृद्धौ तत्र प्रथमोऽकारलोपोऽणि द्वितीयोऽणोऽकारलोप ईकारे परतः। उभयोर्लुप्ताकारयोः स्थानिवद्भावात् द्वितीयाकारापेक्षया

प्रथमाकारोपधासंज्ञको भवति। यकारस्योपधात्वं न भवति। तस्मात् "सूर्यतिष्या-गस्त्यमत्स्यानां य उपधाया:" (६।४।१४९) इति यकारस्य लोपो न प्राप्नोति। यलोपविधौ स्थानिवत्त्वस्य निषेधात्। अणोऽकारस्य लोपस्य समानाश्रयत्वात् "असिद्धवदत्राभात्" (६। ४। २२) इत्यसिद्धत्वं मत्वा यकार उपधात्वेन प्राप्नोति। इदमपि नास्त्युदाहरणम् वक्ष्यमाणेन क्विलुगितिवार्तिकेन स्थानिवत्त्वस्य निषेधो भविष्यति। उपधात्वविधिं प्रति न स्थानिवदितिति भगवान् पतञ्जलि: सौरी बलाका इति प्रयोजनं खण्डयति। अन्यत्प्रयोजनं प्रस्तौति। आदित्य: इति। अदितेरपत्यमित्यर्थे "दित्यदित्यादित्यपत्युत्तरपदाण्ण्य:" (४। १। ८५) इति ण्यप्रत्यये आदिवृद्धौ भत्वादिकारलोपे तत: आदित्ये भव आदित्यो देवता वेत्यर्थे पुन: ण्यप्रत्ययेऽत्रापि भत्वेऽकारलोपे तस्य स्थानिवत्त्वेन "हलो यमां यमि लोप:" (८। ४। ६४) इति यकारलोपो न प्राप्नोति। तत्र स्थानिवद्भावस्य यलोपविधौ निषेधात् यलोपो भविष्यति।

इदमपि नास्त्युदाहरणम्।'हलो यमां यमि लोप:' इत्यस्य पूर्वत्रासिद्धीय-प्रकरणे पठितत्वात् "पूर्वत्रासिद्धे न स्थानिवत्" इति स्थानिवद्भावस्य निषेधात्।

तर्हीदमुदाहरणं गृह्यताम् – कण्डूति: वल्गूति:। कण्ड्वादिगणपठितात् यगन्तात् कण्डूयधातो: क्तिनि प्रत्ययेऽल्लोपे तस्य स्थानिवत्त्वात् "लोपो व्योर्वलि" इति यलोपो न प्राप्नोति। तस्य स्थानिवद्भावस्य निषेधात् यलोपो भवति।

इदमपि नास्त्युदाहरणम्। यतो हि कण्ड्वादिगणपठितात् यकि कृते प्रत्ययान्तत्वेन 'स्त्रियां क्तिन्' इति सूत्रं प्रबाध्य "अ प्रत्ययात्" (३।३।१०२) इति सूत्रेण अप्रत्ययो भवति। तत: टापि सति कण्डूया वल्गूया च भवति।

तर्हीदमुदाहरणम्। ब्राह्मणकण्डूति: क्षत्रियकण्डूति:। अत्र यगन्तात् कण्डूयधातो: कर्त्रर्थे "क्तिच्क्तौ च संज्ञायाम्" इति क्तिचि प्रत्यये तस्यार्ध-धातुकत्वेन "अतो लोप:" इति सूत्रेणाकारलोपे तस्य स्थानिवत्त्वेन वल्परकत्वा-भावेन यकारलोपो न प्राप्नोति। तस्याल्लोपस्य स्थानिवत्त्वनिषेधेन यकारलोपो भवति।

**(म० भा०) "प्रतिषेधे स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत्"॥ १॥**



**प्रतिषेधे स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति वक्तव्यम्। स्वर – आकर्षिक:। चिकीर्षक:। जिहीर्षक:। यो ह्यन्य आदेश: स्थानिवदेवासौ भवति। पञ्चारत्न्यो दशारत्न्य:। स्वर। दीर्घ – प्रतिदीव्ना। प्रतिदीव्ने। योह्यन्य आदेश: स्थानिवदेवासौ भवति। किर्यो: गिर्यो:। दीर्घ। यलोप – ब्राह्मणकण्डूति: क्षत्रियकण्डूति:। योह्यन्य आदेश: स्थानिव-देवासौ भवति। वाय्वो: अध्वर्य्वो: इति।**

**अयं भाव: –** स्वरदीर्घयलोपविधिषु कर्त्तव्येषु अच्स्थानिको लोपरूप आदेश: स्थानिवद् न भवतीति वक्तव्यम्। यथा स्वरविधौ – आकर्षिक:। चिकीर्षक:। जिहीर्षक:। आकर्षेण चरतीत्यर्थे आकर्षशब्दात् "आकर्षात् ष्ठल्" (४।४।९) इति ष्ठलि प्रत्यये ठस्येकादेशे भत्वादकारलोपे तस्य स्थानिवत्त्वेना-कारस्य व्यवधानात् 'लिति' (६।१।१९३) इति ककारोत्तरवर्तिनोऽकारस्यो-दात्तत्वं न प्राप्नोति। स्थानिवत्त्वस्य निषेधेन ककाराकारस्योदात्तस्वरो भवति। एवञ्च चिकीर्षक: इत्यत्र सन्नतात् चिकीर्षधातो: ण्वुलि तस्याकादेशे सनोऽकारस्य 'अतो लोप:' (६। ४। ४८) इति लोपे तस्य स्थानिवद्भावाद् लिति (६। १। १९३) इति ककारोत्तरवर्तिन ईकारस्योदात्तस्वरो न प्राप्नोति। लुप्ताकारस्य व्यव-धानात्। तस्य स्थानिवद्भावनिषेधात् ककारोत्तरवर्तिन ईकारस्योदात्तस्वरो भवति। एवं जिहीर्षक इत्यत्रापि पूर्ववद् अल्लोपस्य स्थानिवद्भावस्य निषेधेन हकारोत्तरवर्तिन ईकारस्योदात्तस्वरो भवति।

किन्तु यत्र लोपातिरिक्तो यणादिरूप आदेशो भवति, तत्र त्वादेशस्य स्थानिवद्भावो भवत्येव तत्र निषेधो न भवति। यथा – पञ्चारत्न्य: दशारत्न्य: इत्यत्र लोपरूप आदेशो नास्ति पञ्चारत्निशब्दात् जसि "जसि च" (७। ३। १०९) इति सूत्रस्थेन "जसादिषु छन्दसि वावचनं प्राङ्णौ चङ्युपधाया ह्रस्व:" इति वार्तिकेन विकल्पेन गुणाभावे "इको यणचि" (६।१।७७) इति यणि स च लोपोऽजादेशो नास्ति। तस्य स्थानिवद्भावाद् इगन्तत्वं सम्पद्यते। तेन "इगन्त-कालकपालभगालशरावेषु द्विगौ" इति पूर्वपदप्रकृतिस्वरो भवति।

**पञ्चारत्न्य:** प्रमाणमस्येत्यर्थे समाहारद्विगुसमासे "प्रमाणे द्वयसज्दघ्नञ्-मात्रच:" (५। २। ३७) इति मात्रचि तस्य प्रमाणे लो द्विगोर्नित्यमिति लुकि।

एवं दशारत्न्यः। दीर्घविधौ – प्रतिदिवन्शब्दात् टा ङे: इति विभक्त्योः परतः भत्वेन "अल्लोपोऽनः" (६।४।१३४) इत्यल्लोपे तस्य स्थानिवद्भावात् 'हलि च' (८।२।७७) इति दीर्घो न प्राप्नोति, अकारलोपस्य स्थानिवद्भावस्य निषेधात् दीर्घो भवति।

किर्योः गिर्योः इत्यत्रेकारस्य स्थाने (किरि-ओस् गिरि-ओस्) इत्यत्र लोपरूपोऽजादेशो नास्ति किन्तु यणादेशोऽस्ति। तस्मादत्र स्थानिवद्भावो भवत्येव। तेन "लोपो व्योर्वलि" इति यलोपो न भवति।

यलोप विधौ – ब्राह्मणकण्डूतिः क्षत्रियकण्डूतिः। एतौ प्रयोगौ पूर्वं व्याख्यातौ। अत्र कण्डूययगन्तात् क्तिचि प्रत्यये आर्धधातुकत्वात् अकारलोपे तस्य स्थानिवत्त्वेन यलोपो न प्राप्नोति। लोपरूपस्याजादेशत्वेन, तस्य स्थानिवद्भावस्य निषेधेन यकारस्य लोपो भवति।

वाय्वोः अध्वर्य्वोः इत्यत्र (वायु-ओस्, अध्वर्यु-ओस्) उकारस्थाने यणादेशोऽस्ति न तु लोपरूपोऽजादेशोऽस्ति। अतो यणादेशस्य स्थानिवद्भावात् यलोपो न भवति।

**(म० भा०) "तत्तर्हि वक्तव्यम्। न वक्तव्यम्। इह हि लोपोऽपि प्रकृतः। आदेशोऽपि। विधिग्रहणमपि प्रकृतमनुवर्तते। दीर्घादयोऽपि निर्दिश्यन्ते। केवलं तत्राभिसम्बन्धमात्रम् कर्त्तव्यम्। स्वरदीर्घयलोपविधिषु लोपाजादेशो न स्थानिवदिति।"**

**आनुपूर्व्येण सन्निविष्टानां यथेष्टमभिसम्बन्धः शक्यते कर्त्तुम्। न चैतान्यानुपूर्वेण सन्निविष्टानि। अनानुपूर्व्येणापि सन्निविष्टानां यथेष्टमभिसम्बन्धो भवति। तद्यथा "अनड्वाहमुदहारि या त्वं हरसि शिरसा कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षीः" इति। तस्य यथेष्टमभिसम्बन्धो भवति। उदहारि भगिनि या त्वं कुम्भं हरसि शिरसा अनड्वाहं साचीनमभिधावन्तमद्राक्षीः इति।**

**अयं भावः** – प्रतिषेधे स्वरदीर्घयलोपविधिषु लोपाजादेशो न स्थानिवदिति वक्तव्यम्। न वक्तव्यम्। अत्र सूत्रे लोपः आदेशो विधिग्रहणम् स्वरदीर्घ-



**यलोपादयः** सर्वे पठिताः। केवलम् सर्वेषां यथेष्टमभिसम्बन्धमात्रं करणीयम्। **स्वरदीर्घयलोपविधिषु** स्थानिवद्भावो न भवतीति। ननु यथाक्रमेण पठितानां **यथेष्टमभिसम्बन्धः** कर्त्तुं शक्यते। स्वरलोपादयस्ते यथाक्रमेण न पठिताः। क्रमरहितपठितानामपि वक्तुर्विवक्षया यथेष्टमभिसम्बन्धो भवति। तद्यथा – अनड्वाह-**मुदहारि या त्वं** हरसि शिरसा कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षीः इति। **तस्य यथेच्छमभिसम्बन्धो** भवति। उदहारि भगिनि यात्वं कुम्भं हरसि शिरसा **अनड्वाहं** साचीनमभिधावन्तमद्राक्षीः इति। अस्य वाक्यस्यार्थः इत्थम् –

हे जलानयनशीले! भगिनि! या त्वं शिरसा कुम्भं वहसि तिर्यग् गच्छन्तम् धावन्तम् अनड्वाहम् (वृषभम्) अद्राक्षीः = दृष्टवत्यसि।

**(म०भा०) "क्लिलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम्"॥२॥**

**क्लिलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानं** कर्त्तव्यम्। **क्लौ किमुदाहरणम्? कण्डूयतेरप्रत्ययः कण्डूरिति। नैतदस्ति। यलोपविधिं प्रति न स्थानिवत्। इदं तर्हि पिपठिषतेरप्रत्ययः पिपठीः। नैतदस्ति। दीर्घविधिं प्रति न स्थानिवत्। इदं तर्हि लावयतेर्लौः। पावयतेः पौः। नैतदस्ति। अकृत्वा वृद्ध्यावादेशौ णिलोपः। प्रत्ययलक्षणेन वृद्धिर्भविष्यति। इदं तर्हि लवमाचष्टे लवयति। लवयतेरप्रत्यये लौः। स्थानिवद्भावाद् णेरूठ् न प्राप्नोति। क्लौ लुप्तं न स्थानिवद्भवति। एवमपि न सिद्ध्यपि। कथम्? क्लौ णिलोपो णावकारलोपः। तस्य स्थानिवद्भावादूठ् न प्राप्नोति। नैष दोषः। नैव विज्ञायते क्लौ लुप्तं न स्थानिवदिति। कथं तर्हि। क्लौ विधिं प्रति न स्थानिवदिति।**

**लुकि किमुदाहरणम्? बिम्बम्। बदरम्। नैतदस्ति। पुंवद्भावेनाप्येतत् सिद्धम्। इदं तर्हि आमलकम्। नैतदस्ति। वक्ष्यत्येतत् फले लुग्वचनानर्थक्यम्। प्रकृत्यन्तरत्वादिति। इदं तर्हि पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुः दशपटुरिति। ननु चैतदपि पुंवद्भावेनैव सिद्धम्। कथं पुंवद्भावः? भस्याढे तद्धिते पुंवद्भवतीति वा० ६।३।३५। भस्येत्युच्यते। यजादौ च भसंज्ञा भवति। न चात्र यजादिं पश्यामः। प्रत्ययलक्षणेन यजादिः। वर्णाश्रये**

**नास्ति प्रत्ययलक्षणम्। एवं तर्हि ठक्छसोश्च इत्येवं भविष्यति। ठक्छसोश्चे-त्युच्यते। न चात्र ठक्छसौ पश्यामः। प्रत्ययलक्षणेन। न लुमता तस्मिन्निति प्रत्ययलक्षणस्य प्रतिषेधः। न खल्वप्यवश्यं ठगेव क्रीत-प्रत्ययः। क्रीताद्यर्था वा तद्धिताः। किं तर्हि, अन्येऽपि तद्धिता ये लुकं प्रयोजयन्ति। पञ्चेद्राण्यो देवता अस्येति पञ्चेन्द्रः। पञ्चाग्निः दशाग्निः।**

**अयं भावः** – वार्तिकस्यार्थः क्विनिमित्तविधौ, लुग्रूपे आदेशे, उपधा-प्रयुक्ते कार्ये, चङ्परह्रस्वे, कुत्वे च स्थानिवत्त्वं नेत्यर्थः। तत्र क्वौ इत्यत्र विधिपद-मध्याह्रियते। तेन क्विनिमित्तविधावित्यर्थः सम्पद्यते। क्वि इत्यस्यावृत्तिं विधायादेशेन सम्बध्यते। तेन लुग्रूपे आदेशे इत्यर्थः सम्पद्यते।

तत्र क्वौ किमुदाहरणम्? कण्डूयतेरप्रत्यये कण्डूरिति। अत्र क्यजन्तात् कण्डूयधातोः क्विपि तस्यार्धधातुकत्वेन "अतो लोपः" इत्यकारलोपे तस्य स्थानिवत्त्वाद् व्यवधानेन लोपो व्योर्वलि इति यलोपो न प्राप्नोति। स्थानिवद्भावस्य निषेधे यकारस्य लोपो भवति। नैतदुदाहरणमस्ति। यलोपविधौ स्थानिवत्त्वस्य निषेधो भवति। तेनैवात्र तस्य निषेधो भविष्यति। तर्हि 'पिपठीः' इत्येतदुदाहरणं गृह्यताम्। अत्र पिपठिषेति सन्नन्ताद्धातोः क्विपि तस्यार्धधातुकत्वेन "अतो लोपः" इत्यकारलोपे तस्य स्थानिवत्त्वात् "र्वोरुपधाया दीर्घ इकः" इति दीर्घो न प्राप्नोति, इकः उपधात्वं नास्ति धातोः रेफान्तत्वाभावात्। स्थानिवद्भावनिषेधेन दीर्घो भवि-ष्यति। एतदपि नास्त्युदाहरणं दीर्घ विधावित्यनेनैव स्थानिवत्त्वस्य निषेधो भविष्यति।

तर्हि क्वौ इत्यस्योदाहरणं लौः पौः। णिजन्ताद् लूधातोः क्विपि वृद्धौ आवादेशे च णिलोपे तस्य स्थानिवद्भावे णेर्व्यवधानेन च्छ्वोः शूडनुनासिके च (६।४।१९) इति ऊठादेशो न प्राप्नोति। स्थानिवद्भावनिषेधे तु "एत्येधत्यू-ठ्सु" (६।१।२९) इति वृद्धौ सत्यां लौः पौरिति प्रयोगौ भवतः। तत्र। ण्यल्लोपावियङ्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन वृद्ध्यावादेशाभ्यां पूर्वं णिलोपः। ननु णेरभावात् कथं वृद्धिः प्रत्ययलक्षणेन वृद्धिर्भविष्यति।

तर्ह्येतदुदाहरणम् – लवप्रातिपदिकात् तत्करोति तदाचष्टे इति वार्तिकेन णिचि टिलोपे णिजन्ताद्धातोः लटि तिपि शपि गुणे अयादेशे लवयति रूपं भवति।



लवयतीति लौः। अत्र कर्त्रर्थे क्विपि टिलोपे लव् इ णेर्लोपे क्विपः सर्वापहारिलोपे टेर्लोपस्य स्थानिवत्त्वेन णिलोपस्य वा स्थानिवत्त्वेन "च्छ्वोः शूडनुनासिके च" (६।४।१९) इति सूत्रेणोठ् न स्यात्। स्थानिवत्त्वस्य निषेधेनोठादेशो भवति। तेन लौः इति रूपं सिद्ध्यति। नन्वयं स्थानिवद्भावनिषेधः क्विपि परतो णेः स्थानि-वत्त्वस्यैव भवति नतु णौ परतः टेर्लोपस्य। तत्र, क्विलुगुपधात्वेति वार्तिकेन न केवलं क्विपि परत एव स्थानिवद्भावस्य निषेधो भवत्यपितु क्विपि कस्यापि विधेः स्थानिवद्भावस्य निषेधो भविष्यति। क्वौ विधिं प्रति न स्थानिवदिति। तत्रोभयोः टिलोपणिलोपयोः स्थानिवत्त्वस्य निषेधो भविष्यति।

लुकि किमुदाहरणम्? बिम्बम् बदरम्। बिम्ब्याः फलानि बिम्बम्। बदर्याः फलानि बदरम्। अत्र बिम्बीबदरीशब्दाभ्याम् विकारेऽर्थे "अनुदात्तादेश्च" (४।३।४०) इत्यञि फले लुक् (४।३।१६३) इति तस्य लुकि। 'लुक्तद्धितलुकि' (१।२।४९) बिम्बीबदर्योः ङीष्प्रत्ययस्यापि लुक् भवति। तस्य ङीषः स्थानिव-द्भावेन बिम्बबदर्योरन्त्याकारस्य लोपः प्राप्नोति। लुकि स्थानिवद्भावस्य निषेधेन नान्त्याकारयोर्लोपो भवति। ननु बिम्बबदर्योः सिद्धिः "भस्याढे तद्धिते" इति पुंवद्भावेन भविष्यति। विकारार्थकेऽञि प्रत्यये परतः पूर्वस्य भसंज्ञा भविष्यति। बिम्बीबदर्योरुत्तरयोर्ङीषो निवृत्तिर्भविष्यति। बिम्बं बदरम् द्वयोः प्रयोगयोः सिद्धिः भविष्यति। ङीष्प्रत्ययस्याभावे स्थानिवद्भावस्य प्राप्तिरेव नास्ति। तत्प्रतिषेधस्या-वश्यकता नास्ति। तर्हि लुकि आमलकमुदाहरणमस्ति। आमलक्याः फलम् इत्यर्थे 'नित्यं वृद्धशरादिभ्यः' (४।३।१४४) इति मयटि प्रत्यये तस्य 'फले लुकि' (४।३।१६३) इति लुकि, मयट्प्रत्ययस्याजादित्वस्याभावे पुंवद्भावस्याप्राप्त्या 'लुक्तद्धितलुकि' (१।२।४९) इति स्त्रीप्रत्ययस्य लुकि तस्य स्थानिवत्त्वेन आमलकशब्दस्यान्त्याकारस्य "यस्येति च" (६।४।१४८) इति लोपः प्राप्नोति। स्थानिवद्भावनिषेधात् नास्त्यल्लोपस्य प्राप्तिः। एतदपि नास्त्युदाहरणम्, यतो हि आमलकी बिम्बी बदरी एते शब्दाः स्त्रीप्रत्ययान्ता न सन्ति (व्युत्पादिता न सन्तीत्यर्थः)। किन्तु हि स्वतन्त्राः प्रकृत्यन्तराः। तदुक्तं महाभाष्ये – "नैतदस्ति। वक्ष्यत्येतत् फले लुग्वचनानर्थक्यं प्रकृत्यन्तरत्वादिति।"

लुकि तर्ह्यन्यत् उदाहरणम् – पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुः। "तद्धितार्थोत्तरपदसमाहारे च" (२।१।५१) इति द्विगुसमासे तेन क्रीतम् इत्यधिकारे "आर्हादगोपुच्छसंख्यापरिमाणान्तात् ठक्" (५।१।१९) इति ठकि प्रत्यये तस्य अध्यर्धपूर्वद्विगोर्लुक् (५।१।२८) इति लुकि तस्य "लुक्तद्धितलुकि" (१।२।४९) इति पट्वीशब्दस्यङीषो लुकि तस्य स्थानिवत्त्वादुकारस्य यणि प्राप्ते लुकि स्थानिवद्भावस्य निषेधात् इको यणचि (६।१।७७) इत्यस्य प्राप्तिर्न भवति। ननु पञ्चपटुः इत्युदाहरणं पुंवद्भावेन सिद्ध्यति। कथमत्र पुंवद्भावः, यतो हि "भस्याढे तद्धिते" इत्यस्यार्थः – ढभिन्ने तद्धिते परे भसंज्ञकस्य स्त्रीशब्दस्य पुंवद्भवतीति। भसंज्ञा च यकारादौ अजादौ च प्रत्यये परतो भवति। 'पञ्चपटुः' शब्दे नास्ति यकारादिरजादिर्वा प्रत्ययः। तर्हि "प्रत्ययलोपे प्रत्ययलक्षणम्" इति लुप्तस्य प्रत्ययस्य तत्कार्यं भविष्यति। न भविष्यति। यतो हि भसंज्ञासूत्रे यकारादिरजादिश्चेति वर्णग्रहणमस्ति। वर्णग्रहणे नास्ति प्रत्ययलक्षणम्। अतः भसंज्ञा प्रत्ययलक्षणेन निषिध्यते। भसंज्ञाया अभावेन पुंवद्भावोऽपि न प्राप्नोति। भवतु नाम भस्याढे तद्धिते इत्यनेन न स्याद् पुंवद्भावः। ठक्छसोश्चेति वार्तिकेन पुंवद्भावो भविष्यति। पञ्चपटुरिति प्रयोगेऽस्त्येव ठक्। ननु तस्य लुक् जातः। ननु 'न प्रत्ययलोपे प्रत्ययलक्षणमिति प्रत्ययलक्षणकार्यपुंवद्भावो भविष्यति। ननु 'न लुमताङ्गस्य' (१।१।६३) इति निषेधो भविष्यति प्रत्ययलक्षणस्य। तर्हि नास्त्यावश्यकं यत् ठगेव क्रीतप्रत्ययो भवति। किन्तु क्रीताद्यर्थका एव तद्धितप्रत्यया भवन्तीति। अन्येऽपि तद्धितप्रत्ययाः सन्ति ये लुकं प्रयोजयन्ति। पञ्चेन्द्राण्यो देवता अस्येति पञ्चेन्द्रः। पञ्चाग्नाय्यो देवता अस्येति पञ्चाग्निः। इन्द्रस्य स्त्रीत्यर्थे इन्द्रशब्दाद् पुंयोगे ङीषि आनुगागमे च इद्राणी शब्दो निष्पद्यते "तद्धितार्थोत्तरपदसमाहारे च" इति तद्धितार्थे द्विगुसमासे "सास्य देवता" इत्यणि तस्य द्विगोर्लुगनपत्ये (४।१।८८) इति लुकि "लुक्तद्धितलुकि" (१।२।४९) इति ङीषो लुकि सति "सन्नियोगशिष्टानामन्यतरापाये उभयोरप्युपायः" इति परिभाषया ङीषा सहानुकस्याप्यपाये जाते, यद्यत्र ङीषः स्थानिवत्त्वं स्यात् तदा – "आनुक् इत्यस्याप्युक्तपरिभाषया ङीषा सह प्रवर्त्तनं स्यात्।" अर्थात् ङीषा सहानुकोऽपि श्रवणं



स्यात्। तच्च नेष्टम्। अतो ङीषः स्थानिवद्भावस्य निषेधे उभयोः श्रवणं न भवति। एवं दशेन्द्राण्यो देवताऽस्येति दशेन्द्रः, पञ्चाग्नाय्यो देवता अस्येति पञ्चाग्निरित्यत्र 'इन्द्राणी अग्नायीति शब्दयोर्भाषितपुंस्कत्वाभावेन तयोः पुंवत्त्वं न प्राप्नोति।' अत एवात्रानुगागमस्याथवैकारादेशस्य श्रवणन्निवारयितुं स्थानिवद्भावनिषेधस्यावश्यकता वर्तते। यदि ङीषङीपोरभावेनानुगैकारादेशयोरप्राप्तौ सत्यामपि, ङीष्ङीपोर्लुकि तयोः स्थानिवद्भावे नाग्नीन्द्रशब्दयोः (पञ्चेन्द्रः पञ्चाग्निरित्यनयोः) इकाराकारयोर्लोपः सर्वथा प्राप्नोत्येव तन्निवारणाय स्थानिवत्त्वस्य लुकि प्रतिषेध आवश्यकः।

(म० भा०) **"उपधात्वे किमुदाहरणम्? पिपठिषतेरप्रत्ययः पिपठीरिति। नैतदस्ति। दीर्घविधिं प्रति न स्थानिवत्। इदं तर्हि सौरी बलाका। नैतदस्ति। यलोपविधिं प्रति न स्थानिवत्। इदं तर्हि पारिखीयः। चङ्परनिर्ह्रासे चोपसंख्यानं कर्त्तव्यम्। वादितवन्तं प्रयोजितवान्। अवीवदद्वीणां परिवादकेन। किं पुनः कारणं न सिद्ध्यति? योऽसौ णौणिर्लुप्यते तस्य स्थानिवद्भावात् ह्रस्वत्वं न प्राप्नोति। ननु चैतदप्युपधात्वविधिं प्रति न स्थानिवदित्येव सिद्धम्। विशेषत एव तद्वक्तव्यम्। क्व? प्रत्ययविधौ इति। इह माभूत् – पटयति लघयतीति। कुत्वे चोपसंख्यानं कर्त्तव्यम्। अर्चयतेरर्कः। मर्चयते मर्कः। नैतद्व्यञ्जन्तम्। औणादिक एव कशब्दस्तस्मिन्नाष्टमिकं कुत्वम्। एतदपि णिचा व्यवहितत्वान्न प्राप्नोति।"**

**अयं भावः** – सन्नन्तात् पिपठिष इत्यस्मात् कर्तरि क्विपि तस्य आर्धधातुकत्वेन सनः सकारस्यातो लोप इत्यल्लोपे तस्य स्थानिवत्त्वेन "र्वोरुपधाया" इत्यकारव्यवधानेन रेफोपधाया अभावेन दीर्घो न प्राप्नोति। स्थानिवद्भावनिषेधात् दीर्घो भवति। तर्हि उपधात्वे नास्तीदमुदाहरणम्। दीर्घविधावेवैतत् सिद्ध्यति। इदं तर्हि सौरी बलाका। सूर्येणैकदिक् इत्यर्थे "तेनैकदिक्" (४।३।११२) इति सूत्रेणाणि प्रत्यये स्त्रीत्वविवक्षायां ङीप्प्रत्ययेऽणि परतः सूर्यशब्दस्यान्त्याकारस्य भत्वात् यस्येति चेतिलोपे ङीपि परतोऽणोऽकारलोपे तयोः स्थानिवद्भावे "सूर्यतिष्यागस्त्यानां य उपधायाः" (६।४।१४९) इति यलोपो न प्राप्नोति,

यकारस्योपधात्वाभावात्। तत्र यतो हि यलोपविधौ स्थानिवद्भावस्य निषेध उक्तः। तेनैवात्रापि स्थानिवद्भावस्य निषेधो भविष्यति।

इदं तर्ह्युपधात्वे उदाहरणम्। पारिखीयः। परिखाया अदूरभवः इत्यर्थे परिखाशब्दात् चातुरर्थिकेऽणि प्रत्यये आदिवृद्धौ भत्वाद् पारिखाशब्दस्यान्त्याकारलोपे पारिखशब्दाद् "वृद्धादकेकान्तखोपधात्" (४।२।१४१) इति छ-प्रत्यये तस्य "ईयादेशेऽकारलोपे" पारिखीयः भवति पारिखा अ इत्यवस्थायाम् भत्वादाकारलोपे तस्य स्थानिवद्भावाद् पारिख् आ अ इति स्थितौ आ इत्यस्यैवाणपेक्षयोपधात्वं भवति न तु खकारस्य "वृद्धादकेत्यादिसूत्रेण छप्रत्ययो न प्राप्नोति।" अत उपधात्वे स्थानिवद्भावस्य निषेधे सति खोपधत्वं प्राप्नोति। छप्रत्यये सति पारिखीयः इति प्रयोगः सिद्ध्यति।

चङ्परनिर्ह्रासे चोपसंख्यानम् कर्त्तव्यम्। वादितवन्तं प्रयोजितवान् अवीवदद्वीणाम् परिवादकेन "अर्थात् चङ्परनिर्ह्रासे कर्त्तव्ये स्थानिवत्त्वस्य प्रतिषेधः कर्त्तव्यः।" यतो हि अवादि इ अत् इति स्थितौ णौ परे प्रथमणेः "णेरनिटि" (६।४।५१) इति लोपे णौ चङ्युपधाया ह्रस्वः (७।४।१) इति उपधाया ह्रस्वो न स्यात्। प्रथमणेर्व्यवधानात्।

ननूपधात्वे विधावेव स्थानिवत्त्वनिषेधे सिद्धे अवीवदत् इत्युक्तः प्रयोगः सिद्ध्यति। पुनः चङ्परनिर्ह्रास इत्यस्यावश्यकत्त्वं नास्ति? तत्र, तस्यास्ति किञ्चिद् वैशिष्ट्यम्। किं तद् वैशिष्ट्यमिति चेद्? उच्यते। उपधात्वनिमित्तकप्रत्ययविधौ न स्थानिवदित्यर्थो ग्रहीतव्यः। अत एव पटयतीत्यत्रोपधानिमित्तकप्रत्ययविधेरभावात् न तत्र टेर्लोपस्य स्थानिवत्त्वस्य निषेधः। उपधात्वे निमित्तकविधावित्येवार्थकरणे तु पटयतीत्यत्र टिलोपस्य स्थानिवत्त्वनिषेधात् वृद्धिः प्राप्नुयात्। अत एव चङ्परनिर्ह्रासविधौ स्थानिवत्त्वस्य निषेधः सार्थकः।

कुत्वे चोपसंख्यानम् – कुत्वविधौ चोपसंख्यानमिति भावः। अर्चीतिण्यन्तात् अर्च्धातोः "अकर्त्तरि च कारके संज्ञायाम्" इति कर्मणि घञि प्रत्यये णिलोपे "चजोः कु घिण्यतोः" (७।३।५२) इति कुत्वेऽर्कः इति भवति। तत्र कुत्वे कर्त्तव्ये णिलोपस्य स्थानिवत्त्वेन व्यवधानात् कुत्वं न प्राप्नोति। घिण्य-



तोरित्यत्र तस्मिन्निति परिभाषोपस्थानात्। अतः स्थानिवद्भावस्य निषेधः कर्त्तव्यः यदि अर्चिरित्यत्र "एरच्" (३।३।५६) इत्यस्य प्राप्तिरस्ति तर्हि कप्रत्यय औणादिको बोध्यः। कुत्वं च "चो कुः" (८।२।३०) इति सूत्रेण भविष्यति।

**(म० भा०) 'पूर्वत्रासिद्धे च'॥ ३॥ पूर्वत्रासिद्धे च न स्थानिवदिति वक्तव्यम्। किं प्रयोजनम्? "क्सः लोपसलोपे प्रयोजनम्"॥ ४॥ अदुग्ध अदुग्धाः।** "लुग्वादुहदिहलिहगुहामात्मनेपदे दन्त्ये" (७।३।७३) **इति लुग्ग्रहणं न कर्त्तव्यं भवति।**

**दध आकारलोपे आदिचतुर्थत्वे॥ ५॥ दध आकारलोप आदिचतुर्थत्वे प्रयोजनम् धत्से धध्वे धध्वमिति। 'दधस्तथोश्च' (८।२।३८) इति चकारो न कर्त्तव्यो भवति। "हलो यमां यमि लोपे"॥ ६॥ हलो यमां यमि लोपे प्रयोजनम्।** आदित्यः। हलो यमां यमि लोपः (८।४।६४) **सिद्धो भवति।**

**"अल्लोपणिलोपौ संयोगान्तलोपप्रभृतिषु"॥ ७॥ अल्लोपणिलोपौ संयोगान्तलोपप्रभृतिषु प्रयोजनम्।** पापच्यतेः पापक्तिः। यायज्यतेर्यायष्टिः। **"द्विर्वचनादीनि च"॥ ८॥** द्विर्वचनादीनि च न पठितव्यानि भवन्ति। पूर्वत्रासिद्धेनैव **सिद्धानि भवन्ति। किमविशेषेण? नेत्याह। "वरे यलोपस्वरवर्जम्"॥ ९॥ वरे यलोपं स्वरं च वर्जयित्वा।**

**अयं भावः** – पूर्वस्मिन्निति पूर्वत्र। सप्तम्यास्त्रल् प्रत्ययो भवत्यत्र। पूर्वत्रासिद्धमित्यत्र पूर्वत्रेति पदेन सपादसप्ताध्यायी गृह्यते। यतो हीदं सूत्रमष्टमाध्यायस्य द्वितीयपादस्य प्रथममस्ति। पूर्वशब्दस्याकाङ्क्षा परशब्देन पूर्यते। कस्य परत्वमष्टमाध्यायस्य पादत्रयं प्रकरणात् प्राप्तं भवति। अतः सपादसप्ताध्याय्यां प्रति त्रिपाद्यसिद्धं भवति। त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं भवतीत्यर्थो निर्गलति। अचः परस्मिन्निति सूत्रमपि सपादसप्ताध्याय्याः सूत्रस्ति। एतदपेक्षया त्रिपादीस्थं शास्त्रमप्यसिद्धम् भवति। अत एतत्फलितार्थकथनमेव पूर्वत्राऽसिद्धे चेति वार्तिके। अचः परस्मिन्निति सूत्रस्योदाहरणेषु स्थानिवद्भावनिषेधेन ज्ञायते। अचः परस्मिन्नतिरिक्तानां वतिघटितानामतिदेशसूत्राणां त्रिपाद्यामपि प्रवृत्तिर्भवतीति। वार्तिकस्य कानि प्रयोजनानि? उच्यन्ते –

अदुग्ध, अदुग्धाः इत्यत्र दुह्धातोर्लुङि अटि त प्रत्यये च्लौ प्रत्यये तस्य क्सादेशे "अलोऽन्त्यस्य" (१।१।५२) इति सहायेन लुग्वादुहदिहेति सूत्रे क्सस्यान्त्यस्याकारस्य लोपे तस्य स्थानिवद्भावाद् "झलो झलि" (८।२।२६) इति सकारलोपो न प्राप्नोति। अकारव्यवधानेन झल्परकत्वाभावात्। अतः स्थानिवद्भावस्य निषेधेन झलो झलि (८।२।२६) इति सकारलोपः सिद्ध्यति।

एवमदुग्धाः इत्यत्रापि लुङि अटि थ। सि च्लौ तस्य क्सादेशेऽत्रापि अल्लोपस्य स्थानिवत्त्वेन सलोपस्य प्राप्तिर्नभवति। अतस्तन्निषेधेन सलोपो भवति। यद्यपि लुग्वा दुहदिहलिहगुहात्मात्मनेपदे दन्त्ये (७।३।७३) इति सूत्रे लुग्ग्रहणसामर्थ्यात् सर्वस्य क्सस्य लोपो भविष्यति। तथापि तस्या "दुह्वहि" इत्यत्र चारितार्थ्यमस्ति। तत्सामर्थ्यात् सम्पूर्णस्य क्सस्य लोपो भविष्यतीति वक्तुं न शक्यते। यतो हि 'अदुह्वहि' इत्यत्र लुग्ग्रहणसामर्थ्यात् सर्वस्य क्सस्य लोपो भवति। तत्राकारलोपे कृते झलो झलि इत्यस्याप्रवर्तनात्। वकारस्य झल्प्रत्याहारान्तर्गतत्वाभावात्।

दध आकारलोपे आदिचतुर्थत्वे स्थानिवद्भावनिषेधस्य प्रयोजनम्। तथाहि – धत्से धध्वे धध्वमिति। ङित्वत्संज्ञकात् ञकारेत्संज्ञकाच्च धाधातोर्लटि थासि शपि श्लौ द्वित्वेऽभ्यासकार्ये थासः स्थाने से इत्यादेशेऽभ्यस्तत्वेन "श्नाभ्यस्तयोरातः" (८।२।३७) इत्याकारलोपे तस्य स्थानिवद्भावे "दधस्तथोश्च" (८।२।३८) इत्यादेश्चतुर्थस्य (भष्भावो न प्राप्नोति) अकारेण व्यवधानात्। स्थानिवद्भावस्य निषेधेन भष्भावो भवति। ध्वशब्दे च परेऽत्रापि स्थानिवद्भावेन भष्भावो न प्राप्नोति, तन्निषेधेन च भष्भावो भवति। 'दधस्तथोश्च' (८।२।३८) इत्यत्र चकारः आकारलोपस्य स्थानिवद्भावस्य निषेधाय न कर्त्तव्यः। पूर्वत्रासिद्धे चेति वार्तिकेनैवं लक्ष्यं सिद्ध्यति।

हलो यमां यमि लोपे॥ ६॥ इति। आदित्यः इत्यत्रादितेरपत्यमित्यर्थे "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" इति ण्यति भत्वादकारलोपे आदिवृद्धौ पुनः आदित्यो देवताऽस्येत्यर्थे 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति ण्यति भत्वादकारलोपे तस्याकारस्य स्थानिवद्भावाद् "हलो यमां यमि लोपः" इति यलोपो न प्राप्नोति। स्थानिवद्भावस्य निषेधात् "हलो यमां यमि लोपः" (८।४।६४) इति यलोपो भवति।



(म० भा०) अल्लोपणिलोपौ संयोगान्तलोपप्रभृतिषु॥

अर्थात् अल्लोपयोः संयोगान्तलोपादिषु विधिषु कर्त्तव्येषु स्थानिवद्भावो न भवतीति। यथा – पाचयतेः पापक्तिः। याजयतेर्यायष्टिः। तथाहि – पापच्य यायज्येति यङन्ताभ्यां धातुभ्यां क्तिनि प्रत्यये तस्यार्धधातुकत्वादतो लोपः (६।४।४८) इत्यल्लोपे यलोपे च तस्य स्थानिवत्त्वाद् पापच्ति इत्यवस्थायां झलि परकत्वाभावात् "चोकुः" इति कुत्वं न प्राप्नोति। एवं च यायज् ति इत्यत्र "व्रश्चभ्रस्जेति" (८।२।३६) जकारस्य षत्वं न प्राप्नोति कृतस्याल्लोपस्य तत्र दृष्टत्वाद् झलि परत्वाभावात्। पूर्वत्रासिद्धीये कर्त्तव्ये स्थानिवद्भावस्य निषेधेन कुत्वजश्त्वे भवतः। अल्लोपस्य स्थानिवद्भावनिषेधस्य फलमुक्तम्। इदानीं णिलोपस्य स्थानिवद्भावनिषेधस्य फलमुच्यते – पाचयतेः पक्तिः। याजयतेर्यष्टिः। पाचि याजि णिजन्ताभ्यां धातुभ्यां क्तिनि प्रत्यये तस्यार्धधातुकत्वात् 'णेरनिटि' (६।१।५१) इति णिलोपे तस्य प्रायोगिकमजादेशं मत्वा स्थानिवद्भावे कृते चो कुः (८।२।३०) इति व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः (८।२।३६) इति च कुत्वं षत्वं च न स्याताम्। स्थानिवद्भावनिषेधेन कुत्वषत्वे भवतः।

अत्राल्णिलोपयोः स्थानिवद्भावनिषेधस्य संयोगान्तलोपप्रभृतीनामुदाहरणानि दातव्यानि भाष्यकारैः। सत्यम्। संयोगान्तलोपादीनामुदाहरणानि पदान्तविधिवति स्थानिवद्भावनिषेधेन सिद्धानीति कृत्वोदाहरणान्तराणि पापक्तिः यायष्टिरित्यादीनि प्रदत्तानि। तथाहि तान्युदाहरणानि प्रदीयन्ते –

स्कन्दयतीति स्कन्। काष्ठं तक्षयतीति काष्ठतक्। दोहयतीति धोक्। लेहयतीति लेट्। इरित्संज्ञकात् णिजन्तात् गतिशोषणार्थकाद् स्कन्द् इत्यस्मात् 'क्विप् च' (३।२।३२) इति क्विपि सर्वापहारिलोपे णिलोपे "स्वादिकार्ये" यकारस्य संयोगान्तलोपे स्कन् इति रूपं भवति। एवं काष्ठं तक्षयति अत्र तनूकरणार्थकात् तक्षिणिजन्तात् धातोः क्विपि उपपदसमासे सुपो लुकि क्विपो लोपे षकारस्य संयोगान्तलोपे काष्ठतक् भवति। दोहयतीति धोक् अत्रापि णिजन्ताद् दुहधातोः क्विपि णिलोपे ह्रस्य घत्वे दकारस्य धत्वे धस्य जश्त्वे चर्त्वे गुणे धोक् इति भवति। एवं लेहयतीति लेट् अत्रापि णिजन्तात् लिहि धातोः क्विपि णिलोपे गुणे

हस्य ढत्वे जश्त्वे चर्त्वे च लेट् इति भवति। अत्रोक्तेषूदाहरणेषु णेर्लोपस्य स्थानिवद्भावो न भवति पदान्तविधौ तन्निषेधात् अथवा संयोगान्तलोपधत्वढत्वानि कार्याणि भवन्ति। एतानि कार्याणि पूर्वत्रासिद्धे चेति वार्तिकेन स्थानिवद्भावस्य निषेधेनापि सिद्ध्यन्ति।

पूर्वत्रासिद्धीयकार्येषु स्थानिवत्त्वस्य निषेधेन न पदान्तेति सूत्रे द्विर्वचनादयोऽपि न पठितव्यानि भविष्यन्ति। किन्तु वरे यलोपं स्वरं च परित्यज्य। अर्थात् सूत्रे द्विर्वचनसवर्णानुस्वारजश्चर्विधिषु स्थानिवद्भावनिषेधस्यावश्यकता नास्ति। पूर्वत्रासिद्धे न स्थानिवदित्यनेनैव सर्वाणि निर्दिष्टान्युदाहरणानि सिद्धानि भवन्ति।

**(म० भा०) ''तस्य दोषः संयोगादिलोपलत्वणत्वेषु''॥ १०॥**

**तस्यैतस्य लक्षणस्य दोषः संयोगादिलोपलत्वणत्वेषु।** संयोगादि**लोपे - काक्यर्थम्। वास्यर्थम्। स्कोः संयोगाद्योरिति लोपः प्राप्नोति। लत्वम् - निगार्यते निगाल्यते। अचि विभाषेति लत्वं न प्राप्नोति।** णत्वम् **- माषवपनी। व्रीहिवपनी। प्रातिपदिकान्तस्येति णत्वं प्राप्नोति।**

**अयं भावः** - काक्यै अर्थम् वास्यै अर्थम् इत्यत्र समासे सुपो लुकि सति काकी अर्थम् वासी अर्थमित्यत्र ''इको यणचि'' इति यणि कृते ककारयकारयोः संयोगसंज्ञायामेवं सकारयकारयोः संयोगसंज्ञायाम् ''स्कोः संयोगाद्योरन्ते च'' (८। २। २९) इति ककारस्य सकारस्य च लोपः प्राप्नोति। यतो हि 'पूर्वत्रासिद्धे न स्थानिवत्' इति वार्तिकेन यणः स्थानिवत्त्वस्य निषेधे उक्ते ककारसकारलोपौ प्राप्नुतः। तस्मात् स्थानिवद्भावस्य निषेधो न वक्तव्यः। यणः स्थानिवद्भावे कृते ककारसकारौ संयोगादी न भवतः। एवं च निगार्यते निगाल्यते इत्यत्र पूर्वत्रासिद्धे न स्थानिवदिति णेर्लोपस्य स्थानिवत्त्वस्य निषेधे अच्परकत्वाभावात् ''अचि विभाषा'' (८। २। २१) इति विकल्पेन लत्वं न स्यात्। तस्य निषेधे कृते णिलोपस्य स्थानिवद्भावेन लत्वं सिद्ध्यति। एवं माषवपनी। व्रीहिवपनी। इत्यत्र षष्ठीतत्पुरुषसमासे कृते माष + वपन ई, व्रीहि - वपन ई इत्यवस्थायां भत्वाद् यस्येति चेति सूत्रेण नकाराकारयोर्लोपे प्रातिपदिकान्तनुम्विभक्तिषु च (८। ४। ११) इति नकारस्य णत्वं प्राप्नोति। अल्लोपस्य स्थानिवत्त्वं तु न भवति।



पूर्वत्रासिद्धे चेति वार्तिकेन तस्य निषेधात्। अतो निषेधस्य निषेधे कृते स्थानिवत्त्वेनाकारमादाय नकारस्यान्त्याभावाण्णत्वं न भवति।

ननु माषशब्दस्य वपनीशब्देन समासे सति नकारस्य समासान्तत्वाभावाण्णत्वं न प्राप्नोति, चेत् न, गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः (ङीबुत्पत्तेरपि इत्यभिप्रायः)। तस्मात् प्राप्तस्य णत्वस्याल्लोपस्य स्थानिवद्भावनिषेधस्य प्रतिषेधो वक्तव्यः। कृते च स्थानिवद्भावे णत्वं निवार्यते।

**न पदान्तद्विर्वचन ....... चर्विधिषु॥ १। १। ५८॥**

*****

## ॥ द्विर्वचनेऽचि॥ १।१।५९॥

अत्र ''काशिकावृत्तिः'' –

द्विर्वचननिमित्तेऽचि अजादेशः स्थानिवद्भवति। द्विर्वचन एव कर्त्तव्ये। रूपातिदेशश्चायं नियतकालस्तेन कृते द्विर्वचने पुनरादेशरूपमेवावतिष्ठते। आल्लोपोपधालोपयणयवायावादेशाः प्रयोजनम्। आल्लोपः पपतुः पपुः, ''आतो लोप इटि च'' (६।४।६४) इत्याकारलोपे कृते तस्य स्थानिवद्भावात् 'एकाच' इति द्विर्वचनं भवति। उपधालोपः जघ्नतुः, जघ्नुः। ''गमहनजनखनघसाम्'' (अ. सू. ६।४।९८) इत्युधालोपे कृते, अनच्कत्वाद् द्विर्वचनं न स्यात्, अस्माद् वचनाद् भवति। णिलोपः आटिटत्। आटतेर्णिचि लुङि चङि णिलोपे कृते तस्य स्थानिवद्भावात् ''अजादेर्द्वितीयस्य'' (अ.सू. ६।१।२) इति टिशब्दस्य द्विर्वचनं भवति। यण् चक्रतुः चक्रुः। करोतेरतुसि उसि च यणादेशे कृतेऽनच्कत्वाद् द्विर्वचनं न स्यात्, स्थानिवद्भावाद् भवति। अयवायावादेशाः। निनाय निनय, लुलव लुलाव। नयतेर्लुनातेश्चोत्तमे णलि गुणे कृते वृद्धौ चायवायावादेशास्तेषां स्थानिवत्त्वान्नेर्लोः द्विर्वचनं भवति। द्विर्वचन इति किम्? जग्ले मम्ले। श्रवणमाकारस्य न भवति। द्विर्वचननिमित्त इति किम्? दुद्यूषति ऊठि यणादेशो न भवति। अचीति किम्? जेघ्रीयते, देध्मीयते। 'ई घ्राध्मोः' (अ.सू. ७।४।३१) 'यङि च' (७।४।३०) इति ईकारादेशस्तस्य स्थानिवद्भावादाकारस्य द्विर्वचनं स्यात्। अज्ग्रहणान्न भवति॥ इति काशिकावृत्तिः॥

''द्विर्वचनेऽचि''॥ १।१।५९॥

महाभाष्यम् –''आदेशे स्थानिवदनुदेशात्तद्वतो द्विर्वचनम्''॥ १॥

आदेशे स्थानिवदनुदेशात् तद्वतः। किंवतः? आदेशवतो द्विर्वचनं प्राप्नोति।



**अयं भावः** – अचः परस्मिन् पूर्वविधावित्यनेन विधीयमानः स्थानिवद्भावः कार्यातिदेशो भवति, तथैव द्विर्वचनेऽचीति सूत्रेण विधीयमानः स्थानिवद्भावः कार्यातिदेशः स्यादिति प्रश्नः। अर्थात् आदेशे स्थानिनः कार्यातिदेशेऽपि द्वित्वमादेशवतः शब्दस्यैव स्यादिति।

(म० भा०) – तत्र को दोषः? ''तत्राभ्यासरूपम्''॥ २॥

''तत्राभ्यासरूपं न सिद्ध्यति। चक्रतुः चक्रुरिति।''

**अयं भावः** – चक्रतुः चक्रुरित्यत्राभ्यासरूपं न सिद्ध्यति। तथाहि– कृ अतुस् कृ उस् इत्यवस्थायाम् इको यणचीति यणि क्र् इति स्थितौ अज्विरहितस्य द्वित्वं न प्राप्नोति। द्विर्वचनेऽचीति स्थानिवद्भावेन = स्थानिकार्यातिदेशेन द्वित्वे कृतेऽपि आदेशेऽच्त्वाभावेनाभ्यासेऽज्विशिष्टस्य ककारस्य श्रवणं न स्यादिति। तस्मात् कार्यातिदेशेऽस्ति दोषः।

(म० भा०)–''अज्ग्रहणं तु ज्ञापकं रूपस्थानिवद्भावस्य''॥ ३॥

**यदयमज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो रूपं स्थानिवद्भवतीति। कथं कृत्वा ज्ञापकम्? अज्ग्रहणस्यैतत् प्रयोजनम् – इह माभूत् जेघ्रीयते देध्मीयते इति। यदि च रूपं स्थानिवद् भवति ततोऽज्ग्रहणमर्थवद्भवति। अथ हि कार्यं, नार्थोऽज्ग्रहणेन। भवत्येवात्र द्विर्वचनम्।**

**अयं भावः** – द्विर्वचनेऽचीति सूत्रेऽज्ग्रहणं ज्ञापकमस्ति यदत्र रूपस्थानिवद्भावो भवतीति। कथं ज्ञापकमिति चेदुच्यते यतो ह्येतस्याज्ग्रहणस्यैतत् प्रयोजनम् यत् जेघ्रीयते देध्मीयत इत्यत्र स्थानिवद्भावः न स्यादिति। घ्राधातोः ''धातोरेकाचो हलादेः क्रियासमभिहारे यङ्'' (३।२।२२) इति यङि ''ईघ्राध्मोः'' इति धातोराकारस्येकारे जाते तस्याच्परकत्वाभावेन स्थानिवद्भावो न भवति। तेन जेघ्रीयते देध्मीयते इति रूपे सिद्ध्यतः। यद्यत्र रूपस्य स्थानिवद्भावेनेकारादेशे 'घ्रा' इत्यस्याकारस्य रूपातिदेशः स्यात् तर्हि अभ्यासे आकारस्यैव श्रवणं स्यात्। तच्च नेष्टम्। तद्वारयितुमज्ग्रहणं सार्थकं भवति। यदि कार्यातिदेशपक्षोऽत्र सूत्रे भवेत् तर्हि सूत्रेऽज्ग्रहणं विनैवेकारादेशे घ्रा इत्यस्य स्थानिनोऽच्कार्य–

स्यातिदेशेन घ्रीशब्दस्यैव द्वित्वं स्यात्, अभ्यासे ईकारस्यैव श्रवणं स्यात्। अज्ग्रहणम् सार्थकमस्ति। अत एव चक्रतुः चक्रुरित्यत्राभ्यासेऽकारस्य श्रवणं भवति।

**(म० भा०) – ''तत्र गाङ्प्रतिषेधः''॥ ४॥**

**तत्र गाङः प्रतिषेधो वक्तव्यः। अधिजगे। इवर्णाभ्यासता प्राप्नोति। न वक्तव्यः ''गाङ् लिटि'' (२। ४। ४९) इति द्विलकारको निर्देशः। लिटि लकारादाविति।**

**अयं भावः –** अनेन सूत्रेण विधीयमाने स्थानिवद्भावे यदि रूपातिदेशः स्वीक्रियते तर्हि इङः स्थाने गाङादेशे स्थानिवद्भावस्य निषेधः कर्त्तव्यः। तथाहि – अधिजगे इत्यत्राधिपूर्वकादिङ्धातोर्लिटि तप्रत्यये तस्यैशादेशे ''गाङ् लिटि'' (२। ४। ४९) इति गाङादेशे तस्य द्विर्वचनेऽचि इति सूत्रेण द्वित्वनिमित्तेऽचि परत्वात् रूपातिदेशे तस्य द्वित्वेऽभ्यास इवर्णत्वं प्राप्नोति। अतस्तद्वारणायातिदेशस्य निषेधः कर्त्तव्यः। न कर्त्तव्यः। ''गाङ् लिटि'' इत्यत्र द्विलकारको निर्देशः कर्त्तव्यः। अर्थात् लावस्थायामेव गाङादेशो भवतीत्यर्थः करणीयः। अतोऽचिपरत्वाभावात् स्थानिवद्भावो न भविष्यतीत्यदोषः।

**(म०भा०)–''कृत्येजन्तदिवादिनामधातुष्वभ्यासरूपम्''॥ ५॥**

**कृत्येजन्तदिवादिनामधातुष्वभ्यासरूपं न सिद्ध्यति। कृति-अचिकीर्तत्। कृति॥ एजन्त-जग्ले मम्ले। एजन्त॥ दिवादि-दुद्यूषति सुस्यूषति। दिवादि॥ नामधातु – भवनमिच्छति भवनीयति। भवनीयतेः सन् बिभवनीयिषति।**

**अयं भावः –** यदि 'द्विर्वचनेऽचि' इत्यस्यार्थ ईदृशः स्यात् अचि परतो योऽजादेशः स स्थानिवद् द्वित्वे कर्त्तव्ये इति तदा कृत्येजन्तदिवादिनामधातुषु अभ्यासरूपं न सिद्ध्यति। तथाहि – संशब्दनार्थकात् कृत् धातोः णिचि लुङि तिपि च्लौ तस्य चङि णेर्लोपेऽत्र ''उपधायाश्च'' (७। १। १०१) इति ऋकारस्येत्वे तस्य द्वित्वे कर्त्तव्ये स्थानिवद्भावः प्राप्नोति। स्थानिवद्भावे सति अभ्यासे इवर्णो न प्राप्नोति। अचकीर्तत् इत्यनिष्टं रूपं प्राप्नोति। अचिकीर्तत् इतीष्टं रूपं न प्राप्नोति।



एजन्त – जग्ले मम्ले। अत्र हर्षक्षयार्थकाभ्यां ग्लैम्लैधातुभ्यां कर्मणि-लिटि तस्यात्मनेपदे तप्रत्यये तस्यैश्त्वे ग्लै ए म्लै ए इत्यवस्थायां ''आदेच उपदेशेऽशिति'' (६। १। ४५) इत्यात्वेऽच्परकत्वात् 'द्विर्वचनेऽचि' इत्यनेन स्थानिवद्भावात् द्वित्वे कृतेऽभ्यासे आत्वं न श्रूयेत। अतो जग्ले मम्ले इति प्रयोगौ न सिद्ध्यतः।

दिवादि – दुद्यूषति सुस्यूषति। क्रीडाद्यर्थकाद् दिव्धातोः तन्तुसन्तानार्थकात् षिव्धातोश्च सनि ''सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्'' (७। २। ४९) इतीडभावपक्षे ''हलन्ताच्च'' (१। २। १०) इति सनः कित्त्वे ''च्छ्वोः शूडनुनासिके च'' (६। ४। १९) इति वकारस्योठादेशे यणि सन्यङोः (६। १। ९) इति द्वित्वे षत्वे दुद्यूषति सुस्यूषति इति रूपे। द् य् ऊ स इत्यवस्थायां द्वित्वे कर्त्तव्ये यणादेशस्य स्थानिवत्त्वात् 'दि' इत्यस्य द्वित्वेऽभ्यासे उकारस्य श्रवणं न स्यात् किन्तु इकारस्यैव श्रवणं स्यात्। अत उपर्युक्तार्थस्वीकारेऽनिष्टापत्तिः स्यात्।

नामधातु – अत्र भवनमिच्छतीत्यर्थे क्यचि भवनीयति। भवनीयितुमिच्छतीत्यर्थे भवनीयधातोः सनि इटि द्वित्वे लडादिकार्ये बिभवनीयिषति सिद्ध्यति। अत्र भूधातोः ल्युटि तस्यानादेशे गुणेऽवादेशे भवनशब्दस्य निष्पत्तिः। द्वित्वे कर्त्तव्येऽनः इत्यस्याच्परकत्वेन गुणेन जायमानस्योकारस्य स्थानिवत्त्वेन ऊकारमादाय भूशब्दस्य द्वित्वेऽभ्यासेऽकारस्यश्रवणं न स्यात् किन्तूकारस्यैव श्रवणं स्यादिति दोषः।

**(म० भा०) एवं तर्हि प्रत्यय इति वक्ष्यामि।**

**''प्रत्यय इति चेत् कृत्येजन्तनामधातुष्वभ्यासरूपम्''॥ ६॥**

**प्रत्यय इति चेत् कृत्येजन्तनामधातुष्वभ्यासरूपं न सिद्ध्यति। दिवादय एके परिहृताः।**

**अयं भावः –** भवन्तु नाम दोषाः। उक्तप्रथमार्थस्वीकारे। द्विर्वचनेऽचीति सूत्रे प्रत्यय इति पठनीयम् – द्विर्वचनेऽचि प्रत्यय इति। अत्र प्रत्ययपदे अचीति सप्तम्यन्तपदस्य विशेषणत्वात् यस्मिन्विधिस्तदादावल्ग्रहणमिति परिभाषया तदादिपदोपस्थित्याऽजादौ प्रत्यये परेऽजादेशः स्थानिवद्भवति द्वित्वे कर्तव्ये इति। तेन

दुद्यूषति सुस्यूषतीत्यत्र अजादिप्रत्ययस्याभावेन स्थानिवद्भावो न भवति। उवर्ण-स्याभ्यासे श्रवणं भविष्यति। किन्तु अचिकीर्तत्, जग्ले मम्ले, बिभवनीयिषति, एते प्रयोगाः न सिद्ध्यन्ति। यतो हि अचिकीर्तत् इत्यत्र 'णिच्' जग्ले मम्ले इत्यत्र 'एश्' बिभवनीयिषतीत्यत्र 'अन्' एते सर्वेऽजादिप्रत्ययाः सन्ति। भविष्यत्यत्र स्थानिवद्भावः। तेनैतेषामभ्यासे इकाराकारेकाराणां श्रवणं न स्यादिति द्वितीयार्थ-स्वीकारे दोषाः सन्ति।

**( म० भा० ) ''एवं तर्हि द्विर्वचननिमित्ते अच्यजादेशः स्थानि-वदिति वक्ष्यामि। स तर्हि निमित्तशब्द उपादेयो न ह्यन्तरेण निमित्तशब्दं निमित्तार्थो गम्यते। अन्तरेणापि निमित्तशब्दं निमित्तार्थो गम्यते। तद्यथा – 'दधित्रपुषं' प्रत्यक्षो ज्वरः।'' ज्वरनिमित्तमिति गम्यते। ''नड्वलोदकं पादरोगः'' पादरोगनिमित्तमिति गम्यते। ''आयुर्घृतम्'' आयुषो निमित्त-मिति गम्यते।**

**अयं भावः –** यद्यजादौ प्रत्यये परे स्थानिवद्भवति द्वित्वे कर्त्तव्य इत्यर्थे ''अचिकीर्तत्, जग्ले मम्ले, बिभवनीयिषति एतेषु रूपेषु स्थानिवद्भवात् अकारेका-रोकाराणामभ्यासे श्रवणं भविष्यति।'' तद्वारणाय 'द्विर्वचनेऽचि' इत्यस्यार्थ इत्थं करिष्यते – द्विर्वचननिमित्तकेऽचि परे स्थानिवद्भवति द्वित्वे कर्तव्ये इति। तेनाचिकीर्तत् इत्यत्र णिच् (इ) प्रत्ययद्वित्वस्य निमित्तं नास्ति। जग्ले मम्ले इत्यत्र ग्ला एश् म्ला एश् इत्यत्र एश्प्रत्ययस्य द्वित्वस्य निमित्तता नास्तीति भगवान् भाष्कारोऽग्रे वक्ष्यति। बिभवनीयिषति अत्रापि ल्युट् (अन) प्रत्ययस्य द्वित्वं प्रति निमित्तत्वं नास्ति। तस्मात् स्थानिवद्भावस्य प्राप्तिरेव नास्ति कुतो दूषण-मिति। ननु निमित्तशब्दं विना निमित्तार्थो न प्राप्नोति, तर्हि द्विर्वचननिमित्तेऽची-त्याद्यर्थः करणीयः। तर्हि निमित्तशब्दं विनापि निमित्तार्थः प्राप्नोति। यथा – 'दधित्रपुषं प्रत्यक्षो ज्वरः' इत्युच्यमाने दधित्रपुषमिति ज्वरनिमित्तकं भवतीति गम्यते। ''दध्येव विशिष्टावस्थायुक्तं त्रपुषमुच्यत'' इति नागेशः। एवं 'नड्वलोदकं पादरोगः' इत्यत्रापि नड्वलोदकं पादरोगनिमित्तमिति गम्यते। तथा आयुर्घृतम् इत्यत्र घृतमायुषो निमित्तमिति गम्यते। अतो द्विर्वचनेऽचीति सूत्रेऽपि निमित्तशब्दस्य पाठं विनापि निमित्तार्थो गम्यते। तेनोक्तेषूदाहरणेषु स्थानिवद्भावो न भवति।



**( म० भा० ) ''अथवा अकारो मत्वर्थीयः। द्विर्वचनमस्मिन् अस्ति सोऽयं द्विर्वचनः। द्विर्वचन इति।''**

**एवमपि न ज्ञायते कियन्तमसौ कालं स्थानिवद्भवतीति। यः पुनराह द्विर्वचने कर्तव्ये इति। कृते तस्य द्विर्वचने स्थानिवन्न भविष्यति।**

**एवं तर्हि प्रतिषेधः प्रकृतः सोऽनुवर्तिष्यते। क्व प्रकृतः। न पदान्त-द्विर्वचनेति। द्विर्वचननिमित्ते अचि अजादेशो न भवतीति। एवमपि न ज्ञायते कियन्तमसौ कालमजादेशो न भवतीति। यः पुनराह द्विर्वचने कर्तव्ये इति। कृते तस्य द्विर्वचने अजादेशो भविष्यति। एवं तर्ह्युभयमनेन क्रियते प्रत्ययश्च विशेष्यते द्विर्वचनञ्च। कथं पुनरेकेन यत्नेनोभयं लभ्यम्? लभ्य-मित्याह। कथं? एकशेषनिर्देशात्। एकशेषनिर्देशोऽयम् द्विर्वचनं द्विर्वचनं च द्विर्वचनम्। द्विर्वचने कर्तव्ये द्विर्वचने अचि प्रत्यये इति, द्विर्वचननि-मित्तेऽचि स्थानिवद्भवति।**

**अयं भावः –** यद्यपि लक्षणावृत्त्या यथा दृष्टान्तेषु कार्यजननप्रतीतिः प्रयोजनम्, तथैव दार्ष्टान्तेषु अचिकीर्तत् आदिषूदाहरणेषु स्थानिवत्त्वस्याभावेनेष्ट-रूपोपलब्धिरेव प्रयोजनमस्ति, तथापि प्रकृतेऽभिधावृत्त्यैवेष्टार्थलाभेनेष्टसिद्धिर्भवति लक्षणायां गौरवमस्तीति भगवान् भाष्यकारः पक्षान्तरमुपस्थापयति – अथवेति। द्विर्वचनशब्दोऽधिकरणवाचकल्युट्प्रत्ययान्तः। ततः ''अर्श आदिभ्योऽच्'' (५। २।१२७) इति मतुबर्थे द्विर्वचनशब्दात् (द्विर्वचनं भवत्यस्मिन्नित्यर्थे स द्विर्वचनः प्रत्ययः) अचि प्रत्यये सति, तस्मिन् द्विर्वचनेऽचि प्रत्यये सति यस्मिन् परे द्विर्वचनं भवति यश्च द्विर्वचनस्य निमित्त भवति, स एवाजादौ प्रत्यये परेऽजादेशः स्थानि-वद्भवतीति तृतीयोऽर्थो निष्पद्यते। अचीत्यस्य प्रत्ययपदे विशेषणत्वात् तदादिविधेः सत्त्वात् अजादावित्यर्थः सम्पद्यते। 'एवमपि न ज्ञायते' इति महाभाष्येण तृतीयार्थे दोषोद्भावनं क्रियते। द्विर्वचनशब्दार्थो द्विर्वचननिमित्तकार्थ इति स्वीकारेऽपि न ज्ञायते यत् कियन्तं कालं स्थानिवद्भावो भवतीति। यो द्विर्वचनशब्दस्य द्वित्वमर्थं स्वीकरोति, तस्य मते द्वित्वे कर्त्तव्ये स्थानिवद्भावो भविष्यति। कृते द्वित्वे स्थानि-वद्भावो न भविष्यतीत्यर्थो भवति। यदा द्विर्वचनशब्दस्य द्वित्वमर्थो नास्ति किन्तु द्विर्वचननिमित्तार्थो भवति तदा द्विर्वचनशब्देन द्वित्वे कर्तव्ये स्थानिवद्भावो भवती-

त्यर्थो न प्राप्नोति। एकेन सूत्रपठितेन द्विर्वचनशब्देनैक एवार्थो भवितुमर्हति - द्वित्वं द्वित्वनिमित्तको वेति।

एवं तर्हि न पदान्तद्विर्वचनेत्यादिसूत्राद् नेत्यस्यानुवृत्तिं विधाय प्रकृतसूत्रस्यार्थो भविष्यति - द्विर्वचननिमित्ते अचि अजादेशो न भवतीति चतुर्थोऽर्थः। तस्यामवस्थायाम् अजादेशस्य निषेधेनादेशस्यैवाभावेन स्थानिवद्भावस्य प्राप्तिरेव नास्ति, कियन्तं कालं स्थानिवद्भावो भवतीति प्रश्न एव न वर्तते। द्वित्वनिमित्ते अचि परे अजादेशो न भवतीति चतुर्थेऽर्थे स्वीकृतेऽपि न ज्ञायत एतद् यत् कियन्तं कालमजादेशो न भवतीति। यस्तु द्विर्वचनशब्दस्य द्वित्वार्थं स्वीकरोति, तस्य मते द्वित्वे कर्तव्ये अजादेशस्य निषेधो भविष्यति। कृते द्वित्वे अजादेशस्य निषेधो भविष्यति तत आदेशो भविष्यति।

द्विर्वचनेऽचीत्यत्र द्विर्वचन इत्येकशब्देनार्थद्वयं न सम्भवति, तर्ह्यत्रोभयार्थको द्विर्वचनशब्दो भविष्यति? कथं पुनरेकेन प्रयत्नेन (द्विर्वचनशब्दस्य सकृत्-पठितेन) उभयं लभ्यते? लभ्यते। एकशेषस्य निर्देशोऽस्ति भगवतः पाणिनेः। द्विर्वचनं च द्विर्वचनश्चेत्येकशेषोऽस्ति। तत्र नपुंसकलिङ्गनिर्दिष्टो द्विर्वचनशब्दः द्वित्वार्थकः। पुँलिङ्गे निर्दिष्टो द्विर्वचनशब्दः प्रत्ययार्थबोधकः। तेन द्विर्वचननिमित्ते अजादौ प्रत्यये परे अजादेशो स्थानिवद्भवति द्वित्वे कर्त्तव्ये इति पञ्चमोऽर्थो निष्पद्यते।

**(म० भा०) "द्विर्वचननिमित्तेऽचि स्थानिवदिति चेण्णौ स्थानिवद्वचनम्"॥ ६॥**

**द्विर्वचननिमित्तेऽचि स्थानिवदिति चेण्णौ स्थानिवद्भावो वक्तव्यः। अवनुनावयिषति अवचुक्षावयिषति।**

**अयं भावः** – द्वित्वनिमित्तकेऽचि परतः स्थानिवद्भावो भवतीत्यर्थस्वीकारे णौ परतोऽपि स्थानिवद्भावो वक्तव्यः। यतो हि णिरिति द्वित्वस्य निमित्तं नास्ति। अवनुनावयिषति अवचुक्षावयिषति इत्यत्र स्तवनार्थकात् नुधातोः टोरनुबन्धात् शब्दार्थकात् क्षुधातोश्च णिचि सनि सन्यङोरिति बहिरङ्गत्वात् पूर्वमन्तरङ्गत्वेन वृद्धावादेशे च कृते णिचो द्वित्वनिमित्तत्वाभावेन 'द्विर्वचनेऽचि' इत्यनेन स्थानिवद्भावस्याप्राप्त्या सन्यङोरिति द्वित्वे कृतेऽभ्यासेऽकारस्य श्रवणं स्यात् तच्चानिष्ट-



मस्ति। अतो णिचो द्वित्वनिमित्तं विनापि द्वित्वे कर्तव्ये स्थानिवद्भावो वक्तव्यः। अस्माद् वचनाद् स्थानिवत्त्वेनाभ्यासे उकारस्य श्रवणं भवति तच्चेष्टमस्ति।

**(म० भा०) – "न वक्तव्यः।" ओःपुयण्जिपु वचनं ज्ञापकं णौ स्थानिवद्भावस्य॥ ८॥**

**यदयम् – "ओः पुयण्ज्यपरे" (७।४।८०) इत्याह, तज्ज्ञापयत्याचार्यो भवति णौ स्थानिवदिति। यद्येतज्ज्ञाप्यते 'अचिकीर्तत् अत्रापि प्राप्नोति। तुल्यजातीयस्य ज्ञापकम्। कथं तुल्यजातीयः? यथा जातीयकाः पुयण्जयः। कथं जातीयकाश्च ते? अवर्णपराः।'**

**अयं भावः** – णौ परे स्थानिवद्भावो न वक्तव्यः। यतो हि "ओः पुयण्ज्यपरे" (७।४।८०) इति सूत्रे पु = पवर्ग यणिति प्रत्याहारो जकारश्चैते आचार्येण पठितास्ते न ज्ञायते यद्भवति णौ स्थानिवद्भावः। अन्यथा बिभावयिषति, यियावयिषति, रिरावयिषति, लिलावयिषति, जिजावयिषति इत्येतेषु प्रयोगेषु क्रमशः भू यु रु लू जु धातुभ्यो णिचि सनि प्रत्यये णिप्रत्ययस्य द्वित्वनिमित्ताभावे द्वित्वे कर्तव्ये स्थानिवद्भावस्याभावे सति अभ्यासेऽकारस्यैव प्राप्त्या "सन्यतः" इतीत्वे सिद्धे पवर्गयण्जकारग्रहणं न कर्तव्यम्, तदेव[1] व्यर्थीभूय ज्ञापयति भवति णौ परतः स्थानिवद्भाव इति। तेन स्थानिवद्भावेनोक्तप्रयोगेष्वाकारस्य श्रवणं भवेत्। तच्चानिष्टं स्यात्। अतो 'नुनावयिषति' 'चुक्षावयिषति' इत्यत्र उकारस्येत्त्वविधानं स्वांशे चरितार्थं भवति। ननु ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्येति वार्तिककारमतमनुसृत्य "अचिकीर्तत् इत्यत्रापि स्थानिवद्भावः प्राप्नोति।" कृत् धातोः णिचि लुङि तिपि च्लौ तस्य चङादेशे "उपधायाश्च" (७।१।१०१) इति ऋकारस्येत्त्वे तस्य स्थानिवद्भावात् कृत् इत्यस्य द्वित्वेऽभ्यासकार्ये (अत्वेर-

१. **टिप्पणी** – अत्राण्यन्ताभ्यां पूङ्यौतिभ्यां धातुभ्यां सनि तस्य 'स्मिपूङ्रञ्ज्वशां सनि' (७।२।७४) 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपि सनाम्' (७।२।४९) इति सन इडागमे सन्यङोरित्यस्य बहिरङ्गत्वेनान्तरङ्गत्वात् पूर्वं गुणावादेशयोरिडादेः सन्प्रत्ययस्य द्वित्वनिमित्त-कत्वेन 'द्विर्वचनेऽचि' इति स्थानिवद्भावेऽभ्यासे उकारस्य सत्त्वेन तस्यैव श्रवणापत्तेः। तदर्थम् 'ओः पुयण्जयपरे' इति सूत्रे पकारयकारौ विध्यर्थौ तेन पिपविषते, यियविषति इत्यत्रेत्त्वं भवति। शेषः पवर्गयण्जग्रहणं पूर्वोक्तार्थे ज्ञापकमस्ति।

परत्वे हलादिशेषे) उत्तरस्य ऋकारस्येत्वे रपरत्वे कृत अचकीर्तत् इति रूपं प्राप्नोति। तच्चेष्टं नास्ति। तन्न। उपर्युक्तं ज्ञापनं तुल्यजातीयकमस्ति। तच्चाभ्यासस्योत्तर-खण्डेऽवर्णपरकेषु पवर्गयण्जकारेषु णौ स्थानिवद्भावो भवति। अचिकीर्तत् इत्यत्र तु द्वित्वे कृते उत्तरखण्डे ईकारो लभ्यते। अतोऽत्र स्थानिवद्भावस्य प्रश्न एव नास्ति। अत्र ज्ञापकस्वरूपानुसारं सजातीयत्वं नास्तीत्यर्थः।

**(म० भा०) कथं जग्ले मम्ले? अनैमित्तिकमात्वं शिति तु प्रतिषेधः।**

**अयं भावः –** जग्ले मम्ले इत्यत्र हर्षक्षयार्थकाभ्यां धातुभ्यां कर्मणि लिटि तप्रत्यये एकादेशे "आदेच उपदेशेऽशिति" इत्यात्वे द्वित्वेऽभ्यासस्य ह्रस्वत्वे चुत्वे उत्तरस्याकारलोपे जग्ले मम्ले इति रूपे। अत्रात्वस्य नैमित्तिकत्वात् स्थानि-वद्भावो न भवति। अशिति इत्यत्र पर्युदासो नास्ति। किन्तु प्रसज्यप्रतिषेधोऽस्ति। शिद्भिन्ने प्रत्यये परे आत्वं न भवति किन्तु शिति परे आत्वं भवतीत्यर्थोऽस्ति। इत्थं 'द्विर्वचनेऽचि।' इति सूत्रे प्राप्तदोषाः समाहिताः।

**(म० भा०) "कानि पुनरस्य योगस्य प्रयोजनानि? पपतुः पपुः। तस्थतुः तस्थुः। जग्मतुः जग्मुः। आटिटत् आशिशत्। चक्रतुः चक्रुरिति। अल्लोपधालोपणिलोपयणादेशेषु कृतेष्वनच्कत्वाद् द्विर्वचनं न प्राप्नोति। स्थानिवद्भावाद्भवति।"**

**नैतानि सन्ति प्रयोजनानि। पूर्वविप्रतिषेधेनापि सिद्धानि। कथम्? वक्ष्यति ह्याचार्यः – "द्विर्वचनं यणयवायावाल्लोपोपधालोपणिलोपकि-किनोरुत्वेभ्यः" इति। सपूर्वविप्रतिषेधो न पठितव्यो भवति। किं पुनरत्र-ज्यायः। स्थानिवद्भाव एव ज्यायान्। पूर्वविप्रतिषेधे सतीदं वक्तव्यं स्यात् – "ओदौदादेशस्य उद्भवति चुटुतुशरादेरभ्यासस्ये"ति। ननु च त्वयापीत्त्वं वक्तव्यम्। परार्थं मम भविष्यति सन्यत इद् भवतीति। ममापि तर्ह्युत्वं परार्थं भविष्यति उत्परस्यातस्ति च (७।४।८८।८९) इति। इत्त्वमपि त्वया वक्तव्यम्। यत् समानाश्रयं तदर्थम् – उत्पिपविषते संयियविषति इत्येव-मर्थम्। तस्मात् स्थानिवदित्येष पक्षो ज्यायान्॥ ५९॥**



**अयं भावः –** द्विर्वचनेऽचि इत्यस्य प्रयोजनानि कानीति पृच्छति। तान्युच्यन्ते – पपतुः पपुः, तस्थतुः तस्थुः, जग्मतुः जग्मुः, आटिटत् आशिशत्। चक्रतुः चक्रुरिति। पपतु पपुरित्यत्र पानार्थकपाधातोः लिटि तस्य तसि झौ च तयोरतुसादेशे उसादेशे च पा अतुस् पा उस् इति स्थिते 'आतो लोप इटि च' (६।४।६४) इत्याकारलोपे अनच्कत्वेन द्वित्वाप्राप्तौ द्विर्वचनेऽचीति स्थानिवद्भावे द्वित्वे आकारलोपे पपतुः पपुरिति रूपे। जग्मतुः जग्मुरित्यत्रापि गम्धातोः लिटि प्रथमपुरुषद्विवचनबहुवचनयोः 'गमहनजनखनघसां लोपः क्ङित्यनङि' (६।४।९८) इत्युपधाकारस्य लोपेऽनच्कत्वात् 'लिटि धातोरनभ्यासस्य' (६।१।८) इत्यप्राप्तौ द्विर्वचनेऽचीति रूपातिदेशे जग्मतुः जग्मुरितिसिद्ध्यतः। आटिटत्। आशिशत्। इत्यत्र गत्यर्थकादट्धातोः व्याप्त्यर्थकात् अश्धातोश्च णिचि लुङि तप्रत्यये, च्लौ, तस्य चङादेशे 'णेरनिटि' (६।४।५१) इति णिलोपे द्वितीयस्या-चोऽभावात् 'चङि' (६।१।११) इति द्वित्वं न प्राप्नोति। स्थानिवद्भावाद् भवति। चक्रतुः चक्रुरित्यत्र करणार्थकाद् कृधातोः लिटि तसि झिप्रत्यये च तयोरतुसि उसि च कृते इको यणचि (६।१।७७) इति यणि, अनच्कत्वाद् द्वित्वाप्राप्तौ स्थानिवद्भावाद् द्वित्वं भवति।

एतानि पपतुः पपुरित्यादीनि पूर्वोक्तानि प्रयोजनानि पूर्वविप्रतिषेधेनापि सिद्धानि भवन्ति। कथम्? 'दाश्वान्साह्वान्मीढ्वांश्च' (६।१।१२) इति सूत्रे आचार्यो वार्तिकं वक्ष्यति – "द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणि-लोपकिकिनोरुत्वेभ्यः" इति। अर्थात् यणादयो विधयः परे तथापि पूर्वविप्रतिषेधेन द्विर्वचनं पूर्वं भवति। अनेन वार्तिकेन पूर्वं द्वित्वे सति 'द्विर्वचनेऽचि' इत्यस्य अतिदेशस्यावश्यकता नास्ति।

सूत्रेण स्थानिवद्भावेन प्रयोगाः सिद्ध्यन्ति तर्हि पूर्वविप्रतिषेधस्य पाठो न कर्त्तव्यः। तर्ह्युभयोः कतरो ज्यायः। स्थानिवद्भावस्य विधानं कर्त्तव्यम्।? अथवा पूर्वविप्रतिषेधः पठनीयः?

द्विर्वचनेऽचीति सूत्रेण स्थानिवद्विधानमेव ज्यायः। विप्रतिषेधवादिन इदमपि वक्तव्यम् – "ओदौदाशस्य चुटुतुशरादेरभ्यासस्येति"। अस्यार्थो भवति – ओकारौकारयोः केनचिदादेशेन युक्तस्याङ्गस्य चवर्गटवर्गतवर्गशर्प्रत्याहा-

रादिकस्याभ्यासस्याकारस्योकारो भवतीति। तेन चुक्षावयिषति, ऊर्णुनावयिषति, नुनावयिषति, तुतावयिषति, शुश्रावयिषति, पुस्फारयिषति इत्यादिषु अभ्यासस्याकारस्येत्वं विधीयते। अत्र ट्वित्संज्ञकात् शब्दार्थकात् क्षुधातोः णिचि सनि इटि क्षु इस, स्तवनार्थकात् णुधातोः णिचि सनि इटि, णुधातोः णिचि सनि इटि, तुधातोः णिचि सनि इटि, श्रवणार्थकात् श्रुधातोः णिचि सनि इटि, संचलनार्थकात् स्फुर्धातोः णिचि। चिस्फुरोर्णौ (६।१।५४) इत्यात्वं भवति। सनि इटि इति स्थिते सनि परे द्वित्वं प्राप्नोति। द्वित्वापेक्षया वृद्धिरावादेशश्च प्राप्नोत्यन्तरङ्गत्वात्। वाचनिके पूर्वविप्रतिषेधे सत्यपि वृद्ध्यावादेशौ भवतः। क्रमशः क्षाव् नाव् ताव्, श्राव्, स्फार्शब्दानां द्वित्वे ह्रस्वेऽभ्यासे प्राप्तस्याकारस्य "सन्यतः" इतीत्वप्राप्तौ उकारस्येत्त्वविधानं कृतम्। स्थानिवद्भावकथनेन तु णिचि परतः कृतयोर्गुणावादेशयोर्द्वित्वे कर्त्तव्ये स्थानिवद्भावो भविष्यति। तेन द्वित्वे सत्यभ्यासे उकारः प्राप्नोति। "ओदौदादेशस्य चुटुतुशरादेरभ्यासस्येति वचनस्यावश्यकता नास्ति।" ननु स्थानिवद्भावपक्षे णिचि परतो ज्ञापकेन स्थानिवद्भावं साधयितुम् "ओः पुयण्ज्यपरे" इति इत्त्वविधायकं सूत्रं कर्त्तुमापतति। सूत्राकरणे तु णिचि स्थानिवत्त्वाभावेन चुक्षावयिषति ऊर्णुनावयिषति नुनावयिषति तुतावयिषति शुश्रावयिषति पुस्फारयिषति इत्यादिषु प्रयोगेषु "सन्यतः" इतीत्वं प्राप्नोति। स्थानिवद्भावं स्वीकुर्वतो मम मते "ओः पुयण्ज्यपरे" इति सूत्रेण कस्यचिन्नूतनस्येकारस्य विधानं नास्ति किन्तु "सन्यतः" इति सूत्रेण विधीयमानमित्त्वमेव परार्थं भविष्यति। अर्थात् विभावयिषति पिपावयिषति यियावयिषति जिजावयिषतीत्यादिप्रयोगाणां कृते इत्त्वं भविष्यति। तथा च चुक्षावयिषति नुनावयिषतीत्यादिप्रयोगेष्वित्त्ववारणाय "ओः पुयण्ज्येति सूत्रं सप्रयोजनं भविष्यतीति।"

पूर्वविप्रतिषेधं स्वीकुर्वतो ममापि "ओदौदादेशस्ये"ति विधानं नूतनं विधानं नास्ति, किन्तु "उत्परस्यातः" 'ति च' इति सूत्रे (७।४।८८-८९) पठित उकारः परार्थोऽस्ति। अर्थात् अवनुनावयिषति चुक्षावयिषत्यादिप्रयोगार्थोऽस्ति। तथा विभावयिषति पिपावयिषत्यादिषूत्वप्रतिषेधार्थो विद्यते।

पूर्वविप्रतिषेधं स्वीकुर्वतो भवतः "ओदौदादेशस्ये"ति वचनेन सह "ओः पुयण्जयपरे" इति सूत्रेणोकारोऽपि स्वीकर्त्तव्यो यत्र द्वित्वावादेशयोः समाना-



श्रयत्वम् = समाननिमित्तकत्त्वमस्ति। यथा – पिपविषते यियविषति। तथाहि – पूङ्युधातुभ्यां सनि "स्मिपूङ्रञ्ज्वशां सनि" (७।२।७४) सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् (७।२।४९) इति सूत्राभ्यां यथा संख्यमिटि पू इस यू इस इत्यत्र परत्वाद् गुणे कृते द्वित्वादेशयोः समानाश्रयात् उभयोरन्तरङ्गबहिरङ्गत्वाभावेन पूर्वविप्रतिषेधेनाऽवादेशं प्रबाध्य द्वित्वे जातेऽभ्यासे ऊकारस्य श्रवणं स्यात्, तन्निवारयितुम् ओः पुयण्ज्यपरे इत्यनेनेत्त्वविधानं कर्त्तुमापतिष्यति। एवञ्च जुधातोः णिचि सनि इटि अन्तरङ्गत्वाद्गुणेऽवादेशे कृते द्वित्वे कर्त्तव्ये ततः स्थानिवत्त्वेन द्वित्वे कृतेऽभ्यासे उकारस्य श्रवणापत्तिः स्यात्, तद्वारणाय "ओः पुयण्ज्यपरे" इति सूत्रेणेत्वविधानमपि आपतिष्यति। इति पूर्वविप्रतिषेधपक्षो गौरवग्रस्तोऽस्ति। अतः स्थानिवद्भावपक्षोऽधिकोपयोगी विद्यते। ॥ १।१।५९ ॥

*****

## ॥ प्रत्ययलोपे प्रत्ययलक्षणम्॥ ( १ । १ । ६२ )

अत्र ''काशिकावृत्तिः'' –

प्रत्ययनिमित्तकं कार्यमसत्यपि प्रत्यये कथं तु नाम स्यादिति सूत्रमिदमारभ्यते।

प्रत्ययलोपे कृते प्रत्ययलक्षणं प्रत्ययहेतुकं प्रत्ययनिमित्तकं वा कार्यं भवतीत्यर्थः सम्पद्यते। उदाहरणानि – अग्निचित्, सोमसुत्, अधोक्। अग्निचित्– अग्निं चिनोत्यर्थे ''अग्नौ चेः'' ( ३ । २ । ९१ ) इति क्विपि, प्रत्ययविधायके सूत्रे अग्निशब्दस्य सप्तमीस्थत्वेनोपपदसंज्ञायामुपपदसमासे प्रातिपदिकत्वेन सुपो लुकि क्विपः सर्वापहारिलोपे तुकि सौ तल्लोपे च प्रत्ययलोपे प्रत्ययलक्षणमिति लुप्तां विभक्तिमादाय 'सुप्तिङन्तं पदम्' ( १। ४। १४ ) इति पदसंज्ञायां अग्निचिदिति रूपं जायते। सोमसुत् – सोमं सुनोतीत्यर्थे ''सोमे सुञः'' ( ३। २। ९० ) इति क्विपि ततोऽग्निचिद्वत् प्रक्रिया बोद्धव्या। अधोक् – प्रपूरणार्थकाद्दुह्धातोर्लङि तिपि अटि इतश्चेतीकारलोपे तकारलोपे दादेर्धातोर्घः ( ८ । २ । ३२ ) इति हकारस्य घत्वे ''एकाचो बशो भष् झषन्तस्य स्ध्वोः'' ( ८ । २ । ३६ ) इति दकारस्य धकारे 'झलां जशोऽन्ते' ( ८। २। ३९ ) इति घकारस्य गकारे ''वाऽवसाने'' ( ८ । २ । ५६ ) इति विकल्पेन गकारस्य ककारे प्रत्ययलोपे प्रत्ययलक्षणमिति लुप्तं प्रत्ययमादाय सुप्तिङन्तं पदम् ( १ । ४ । १४ ) इति पदत्वं भवति।

ननु 'प्रत्ययस्य लुक्श्लुलुपः' ( १। १। ६१ ) इति पूर्वसूत्रात् प्रत्ययस्येति पदस्यानुवृत्तिं विधायेष्टमर्थं प्राप्नोति पुनः प्रकृतसूत्रे प्रत्ययपदस्य पाठो न स्यादिति चेद्, न। कृत्स्नप्रत्ययलोपे सत्येव प्रत्ययनिमित्तकं कार्यं यथा स्यादिति सूत्रे प्रत्ययपाठः कृतः। तेन आघ्नीय, सङ्ग्मीय इत्यत्र



सीयुटः प्रत्ययस्यैकदेशस्य ''लिङः सलोपोऽनन्त्यस्य'' ( ७। २। ७९ ) इति सूत्रेण सकारस्य लोपे सति प्रत्ययलक्षणकार्यं झल्त्वमादायानुनासिकलोपरूपं कार्यं न भवति।

आघ्नीय – आङ्पूर्वकाद् हन्धातोर्लिङि ''आङो यमहनः'' ( १ । ३ । २८ ) इति सूत्रेणात्मनेपदे इटि तस्य ''इटोऽत्'' ( ३ । ४ । १०६ ) इत्यदादेशे सीयुडागमे ( आहन् सीय इ ) सकारलोपे ''गमहनजनखनघसां लोपः क्ङित्यनङि'' ( ६ । ४ । ९८ ) इत्यकारलोपे आघ्नीय सिद्ध्यति। अत्र प्रत्ययावयवस्य सकारस्य लोपे तस्य प्रत्ययलक्षणद्वारा नयनं न भवति, कृत्स्नस्य ( सम्पूर्णस्य ) प्रत्ययस्य लोपाभावात्। अतोऽत्र प्रत्ययलोपेति सूत्रेण स्थानिवत्त्वेन झल्त्वमानीय ''अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति'' ( ६ । ४ । ३७ ) इत्यनुनासिकलोपो न भवति। एवं सङ्ग्मीय इत्यत्र सम्पूर्वकाद् गम्धातोः लिङि ''समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः'' ( १ । ३ । २९ ) सूत्रेणात्मनेपदे इटि तस्यादादेशे सीयुटि ( सम् गम् सीय् अ ) ''लिङः सलोपोऽनन्त्यस्य'' ( ६ । २ । ७९ ) इति सकारलोपे तस्य स्थानिवत्त्वेन झल्त्वमानीय अनुनासिकलोपो न भवति। अत्र प्रत्ययस्यैकदेशस्य सकारस्य लोपात् सम्पूर्णस्य प्रत्ययस्य लोपाभावाच्च। ततः गमहनेति सूत्रेणोपधाभूतस्याकारस्य लोपे मकारस्यानुस्वारे परसवर्णे च कृते सङ्ग्मीय इति रूपं सिद्ध्यति।

प्रत्ययलक्षणमिति पदं न स्यात् तदा रायः कुलम् रैकुलम्। गवे हितं गोहितम् इत्यत्र प्रथमप्रयोगे षष्ठीतत्पुरुषसमासे द्वितीयप्रयोगे चतुर्थीतत्पुरुषसमासे समासत्वात् प्रातिपदिकत्वे सुपो लुकि प्रत्ययस्य स्थानिवत्त्वेनायावादेशौ प्राप्नुतः। प्रत्ययलक्षणमिति पदस्य सत्त्वे तु यत्र प्रत्ययस्यैव प्राधान्यं स्यात् तत्रैव प्रत्ययनिमित्तकं कार्यं स्यात्। ''एचोऽयवायावः'' ( ६ । १ । ७८ ) इति सूत्रे तु वर्णस्य प्राधान्यमस्ति। 'इको यणचि' ( ६ । १ । ७७ ) इति सूत्रात् अचीत्यस्यात्रानुवर्तनात्। इति काशिकावृत्तिः॥

( म० भा० ) – ''प्रत्ययलोपे प्रत्ययलक्षणम्''

**( म० भा० ) "प्रत्ययग्रहणं किमर्थम्? लोपे प्रत्ययलक्षणमितीयत्युच्यमाने सौरथी वैहतीति गुरूपोत्तमलक्षणः ष्यङ् प्रसज्येत। नैष दोषः। नैवं विज्ञायते लोपे प्रत्ययलक्षणं भवति इति। कथं तर्हि? प्रत्ययो लक्षणं यस्य कार्यस्य तल्लुप्तेऽपि भवतीति।"**

**अयं भावः –** सूत्रे प्रथमप्रत्ययग्रहणस्य प्रयोजनं पृच्छति प्रत्ययग्रहणं किमर्थमिति। प्रत्ययग्रहणं विनापि प्रत्ययलक्षणमित्यत्र प्रत्ययो लक्षणं निमित्तं यस्य तत्प्रत्ययनिमित्तमिति बहुव्रीहिसमासं कृत्वा प्रत्ययनिमित्तं कार्यं लोपे भवतीत्यर्थे प्रत्यासत्त्या लोप इति विज्ञास्यत इति तात्पर्यम्। क्रियमाणेऽक्रियमाणे वा प्रत्ययग्रहणे प्रत्यासत्तिराश्रयणीया भवतीत्यर्थः। अतः प्रत्ययग्रहणं विनापि न कार्यहानिरिति भावः।

प्रत्ययं विना सौरथी वैहतीत्यत्र दूषणमस्ति। तथाहि – रम्धातोरौणादिके क्थनि प्रत्यये हन्धातोश्च क्ते प्रत्यये "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" (६।४।३७) इति सूत्रेण मकारनकारयोर्लोपे रथहतशब्दौ निष्पद्येते। सु–शोभनो रथो यस्य सुरथः। विशेषेण हतः इति विहतः। सुरथस्य गोत्रापत्यं स्त्रीत्यर्थे 'अत इञ्' इति इञि प्रत्यये विहतस्य गोत्रापत्यं स्त्रीत्यर्थे इञि प्रत्यये प्रातिपदिकत्वेनोभयोः सुपो लुकि आदिवृद्धौ "इतो मनुष्यजातेः" (४।१।६५) इति ङीपि भत्वादिकारयोर्लोपे सौरथी वैरथीति रूपे भवतः। प्रत्ययलक्षणपदे बहुव्रीहावन्यपदार्थापेक्षया प्रत्ययस्य लक्षणमिति तत्पुरुषसमासे लाघवमस्ति। यस्यार्थः प्रत्ययस्य लोपे तस्यैव पुनः प्रादुर्भावः प्रकल्प्यते। अर्थाद् यस्य लोपस्तस्मिन् सति यः प्रत्ययो भवति, तस्य तल्लोपेऽपि प्रादुर्भावो भवतीत्यर्थः सम्पद्यते। सुरथस्य विहतस्य चापत्यं गोत्रं स्त्रीत्यर्थे इञि प्रत्यये कृतेऽत्रमकारनकारयोर्भावे यथा गुरूपोत्तमत्वात् ष्यङादेशः अणिञोरनार्षयोः गुरूपोत्तमयोः ष्यङ् गोत्रे (४।१।७८) इति सूत्रेण भवति, तथैव लोपेऽपि स्यात्। गुरूपोत्तमञ्चेत्थम् – त्रिप्रभृतीनामन्त्यमक्षरमुत्तमं भवति। उत्तमस्य समीपे उपोत्तमं भवति। गुरु उपोत्तमं यस्मिन् तद् गुरूपोत्तमम् भवति। अतः सौरथी वैहतीति प्रयोगयोरिकारयोः स्थाने ष्यङादेशे सौरथ्या वैहत्या इति प्राप्नुतः। तच्च नेष्टम्। अतः प्रत्ययग्रहणं



कार्यमिति चेत्। नैवम्। भगवान् भाष्यकारो दोषं परिहरति – नैष दोष इति। "नैवं विज्ञायते लोपे प्रत्ययलक्षणं भवति – प्रत्ययस्य प्रादुर्भाव इति।"

प्रत्ययस्य लक्षणं दर्शनं प्रादुर्भाव इत्यर्थो न स्वीक्रियते। यतो हि लोपं विधायकस्य तस्य प्रादुर्भावकरणे लोपविधानमनर्थकं स्यात्। अत एव प्रत्ययो लक्षणं यस्य कार्यस्य तल्लुप्तेऽपि स्यादित्यत्र बहुव्रीहिसमासो ज्ञेयः। तस्मान्नेदं प्रथमप्रत्ययग्रहणस्य प्रयोजनम्। नात्र प्रत्ययलोपः किन्तु धात्वोरवयवयोर्मकारनकारयोर्लोपः।

**( म० भा० ) – "इदं तर्हि प्रयोजनम्। सति प्रत्यये यत्प्राप्नोति तत् प्रत्ययलक्षणेन यथा स्यात्। लोपोत्तरकालं यत्प्राप्नोति तत्प्रत्ययलक्षणेन माभूदिति। किं प्रयोजनम्? ग्रामणि कुलं सेनानि कुलम्। औत्तरपदिके ह्रस्वत्वे कृते "ह्रस्वस्य पिति कृति तुक्" ( ६।१।६१ ) इति तुक् प्राप्नोति, स माभूदिति। यदि तर्हि यत् सति प्रत्यये प्राप्नोति तत्प्रत्ययलक्षणेन भवति, लोपोत्तरकालं यत् प्राप्नोति तन्न भवति। जगत् जनगदिति तुग्न प्राप्नोति लोपोत्तरकालं यत्र तुगागमः। तस्मान्नार्थ एवमर्थेन प्रत्ययग्रहणेन।"**

**अयं भावः –** सौरथी वैहती इति प्रत्ययग्रहणस्य फलं नास्ति। अन्यत् फलं प्रस्तौति भगवत्पतञ्जलिः – सति प्रत्यये यत् कार्यं प्राप्नोति तत् प्रत्ययनिमित्तकं कार्यं प्रत्ययलोपे भवति। प्रत्ययस्य लोपानन्तरं यत् कार्यं प्रत्ययनिमित्तकं तन्न स्यादिति।

एतस्य प्रयोजनम् – ग्रामणि कुलम् सेनानि कुलम्। तथाहि – ग्रामं नयतीति ग्रामणीः। (ग्रामण्यः कुलम् सेनान्यः कुलम्) अत्र षष्ठीसमासे कृते कुलशब्दस्योत्तरपदकत्वे क्विप्प्रत्ययान्तस्य ग्रामणीशब्दस्य सेनानीशब्दस्य च "इको ह्रस्वोऽङ्यो गालवस्य" (६।३।६१) इति ह्रस्वे कृते "ह्रस्वस्य पिति कृति तुक्" (६।१।७१) इति तुक् प्राप्नोति। स न स्यादिति प्रत्ययग्रहणं क्रियते। प्रत्ययलोपे इत्यत्र प्रत्ययशब्दो लुप्तसप्तमीविभक्तिको वर्तते। तेन प्रत्यये सति यत्कार्यं दृष्टं तल्लोपे सति भवति। ग्रामणीरित्यत्र क्विपि सति तुग्न दृष्टो ह्रस्वाभावात्। क्विब्लोपे कृते ह्रस्वत्वे च कृते तुक्प्राप्तिः। तस्मादस्ति प्रत्ययग्रहणस्य

प्रयोजनं ग्रामणि कुलं सेनानि कुलमिति। यदि तर्हीत्यादिभाष्येण प्रत्यये सति यत् कार्यं प्राप्नोति तत् कार्यं प्रत्ययलोपे भवतीत्यत्र दूषणं प्रस्तूयते – जगत् जनगदित्यत्र तुग्न प्राप्नोति। तथाहि – गच्छतीति जगत् जनं गच्छतीति जनगत् इत्यत्र 'क्विप् च' (३।२।७६) इति क्विपि जगदित्यत्र "द्युतिगमिजुहोत्यादीनां द्वे चे" ति द्वित्वे "गमः क्वौ" इति वार्तिकेन मकारलोपे जगदिति भवति। एवं जनगत् इत्यत्रापि उपपदसमासे 'गमः क्वौ' इति मलोपे जनगदिति भवति। द्वयोरुदाहरणयोः प्रत्यये सति तुग्न प्राप्नोति लुप्ते प्रत्यये गमः क्वाविति मकारलोपे च सति तुक् प्राप्नोति। क्विलोपः प्रत्ययमात्रापेक्षत्वादन्तरङ्गः। मलोपोऽङ्गाधिकापेक्षत्वाद् बहि-रङ्गः। 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया मलोपस्यासिद्धत्वात् पूर्वं क्विलोपः। अतः सति प्रत्यये इति लक्षणस्य दोषग्रस्तत्वात् प्रत्ययग्रहणस्य सेनानि कुलम् ग्रामणि कुलम् इति प्रयोजनं न वक्तुं शक्यते।

(म० भा०) **कस्मान्न भवति – ग्रामणि कुलम् सेनानि कुलम्? बहिरङ्गं ह्रस्वत्वम्, अन्तरङ्गस्तुक्। 'असिद्धं बहिरङ्गमन्तरङ्गे।'**

**इदं तर्हि प्रयोजनम् – कृत्स्नप्रत्ययलोपे प्रत्ययलक्षणं यथास्यादेक-देशलोपे माभूदिति। आघ्नीत सं रायस्पोषेण ग्मीय। पूर्वस्मिन्नपि योगे प्रत्ययग्रहणस्यैतत् प्रयोजनमुक्तम्। अन्यतरच्छक्यमकर्त्तुम्।**

**अयं भावः** – ग्रामणि कुलम् सेनानि कुलम् अत्र तुगागमः कस्माद्धेतोर्न भवति? "इको ह्रस्वोऽङ्यो गालवस्य" (६।३।६१) इत्यस्योत्तरपदाधिकार-त्वेन पूर्वोत्तरपदसापेक्षत्वात् बहिरङ्गत्वम्। तुक्विधायकस्य वर्णमात्रापेक्षत्वादन्तरङ्ग-त्वम्। परत्वाद् विहितस्यापि ह्रस्वस्यान्तरङ्गशास्त्रेण तुग्विधायकेनासिद्धं बहि-रङ्गमन्तरङ्गे इति परिभाषयाऽसिद्धत्वबोधनात्। अतः प्रथमप्रत्ययग्रहणस्य ग्रामणि कुलम् सेनानि कुलम् इति प्रयोजनं वक्तुं न शक्यम्। प्रत्ययग्रहणं विनाऽपि सिद्ध्यत उदाहरणे। इदं तर्हि प्रयोजनम् – कृत्स्नप्रत्ययलोपे प्रत्ययलक्षणं यथा स्यात् प्रत्ययस्यैकदेशलोपे न स्यादिति। यथा – आघ्नीत, सं रायस्पोषेण ग्मीय। अत्र आङ्पूर्वकाद्हन्धातोः सार्वधातुकलिङि लकारे "आङो यमहनः" (१।३।२८) इत्यात्मनेपदे प्रथमपुरुषस्यैकवचने तप्रत्यये शपि लुकि सीयुटि 'लिङः सलोपोऽनन्त्यस्य' (७।२।७९) इति सीयुटः सकारलोपे यलोपे गमहनेत्यादिनो-



पधाकारलोपे 'आघ्नीत' इति रूपं भवति। अत्र सीयुट्प्रत्ययस्यैकदेशस्य सकारस्य लोपो जातो न तु सम्पूर्णस्य प्रत्ययस्य लोपो जातः। तेन प्रत्ययग्रहणेन सकारस्य स्थानिवत्त्वेन झल्त्वमादाय "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" (६।४।३६) इति नकारलोपो न भवति। एवं गम्धातोर्विधिलिङि छान्दसत्वादात्मनेपदे इटि शपो बहुलं छन्दसीति लुकि सीयुटि तस्य सकारलोपे उपधालोपे इटोऽदादेशे गमीय इति रूपं भवति। अत्र सीयुटः सकारस्यैकदेशस्य लोपे तस्य प्रत्ययलक्षणेन सकारस्य झल्त्वमादाय अनुदात्तोपदेशेत्यादिना मकारलोपो न भवति। अत्रैकदेशस्य लोपेन प्रत्ययलक्षणस्याभावात्। समुपसर्गकाद् गम्धातोस्तु समो गम्यृच्छिसर्त्यर्तिश्रुविदिभ्यः (१।३।२९) इत्यात्मनेपदं भवतीति बोद्धव्यम्।

(म० भा०) **"अथ द्वितीयं प्रत्ययग्रहणं किमर्थम्? प्रत्ययलक्षणं यथा स्यात्। वर्णलक्षणं माभूदिति। रायः कुलम् रैकुलमिति।"**

**अयं भावः** – यदि प्रत्ययलोपे तल्लक्षणमित्येव सूत्रमुच्यते तदा प्रत्ययनि-मित्तके कार्ये कर्त्तव्ये प्रत्ययनिमित्तकं तत्कार्यं वर्णनिमित्तकं वा तत्कार्यं स्यादुभ-यत्र प्रत्ययलक्षणं स्यात्। प्रत्ययग्रहणे तु प्रत्ययनिमित्तकमेव कार्यं प्रत्ययलोपे भवति न तु वर्णरूपनिमित्तकमपि कार्यं भवति। तेन रायः कुलम् रैकुलमित्यत्र "एचोऽयवायावः" (६।१।७८) इति सूत्रे इकोयणचीति सूत्रात् अचीति सप्तम्यन्तपदमनुवर्तते। तेनायादीनां वर्णनिमित्तकार्यत्वमस्ति। न भवत्यत्र प्रत्यय-लक्षणम्। एवं गवे हितं गोहितमित्यत्रापि लुप्तां चतुर्थीं विभक्तिं प्रत्ययलक्षणेना-नीयावादेशो न भवति, वर्णाश्रयत्वात्।

(म० भा०) **किमर्थं पुनरिदमुच्यते?**

**"प्रत्ययलोपे प्रत्ययलक्षणवचनं सदन्वाख्यानाच्छात्रस्य" ॥ १ ॥**

**प्रत्ययलोपे प्रत्ययलक्षणमित्युच्यते "सदन्वाख्यानाच्छात्रस्य। सच्छास्त्रेणान्वाख्यायते, सतो वा शास्त्रमन्वाख्यायकं भवति। सदन्वाख्या-नाच्छास्त्रस्य। "उगिदचां सर्वनामस्थानेऽधातोः" (७।१।७०) इतीहैव स्यात् – गोमन्तौ यवमन्तौ, गोमान् यवमानित्यत्र न स्यात्। इष्यते च स्यादिति। तच्चान्तरेण यत्नं न सिद्ध्यति, अतः प्रत्ययलोपे प्रत्ययलक्षण-वचनम्। एवमर्थमिदमुच्यते। अस्ति प्रयोजनमेतत्? किं तर्हीति।"**

**अयं भावः** – प्रत्ययलोपे प्रत्ययलक्षणस्य प्रयोजनं पृच्छति – किमर्थं पुनरिदमुच्यत इति। तत्र प्रयोजनं वार्तिकेन प्रस्तूयते – सदन्वाख्यानाच्छात्रस्येति। अर्थात् सद् = विद्यमानं शास्त्रेणान्वाख्यायते। विद्यमानस्यान्वाख्यायकं शास्त्रं भवतीति। अयमेवार्थः सदन्वाख्यानाच्छास्त्रस्य। यथा – ''उगिदचां सर्वनामस्थानेऽधातोः'' (७।१।७०) इति सूत्रं गोमत् औ यवमत् औ इत्यत्रैव प्रवर्तेत। अर्थात् सर्वनामस्थानस्य विद्यमानतायामेव, गोमान् इत्यत्र न स्यात् सर्वनाम्नः सोः लुप्तत्वात्।

**(म० भा०) ''लुक्युपसंख्यानम्''॥ २॥ लुकि उपसंख्यानम् कर्त्तव्यम्। पञ्च सप्त। किं पुनः कारणं न सिद्ध्यति? ''लोपे हि विधानम्''॥ ३॥ लोपे हि प्रत्ययलक्षणं विधीयते, तेन लुकि न प्राप्नोति। ''नवाऽदर्शनस्य लोपसंज्ञित्वात्''॥ ४॥ न वा कर्त्तव्यम्। किं कारणम्? अदर्शनस्य लोपसंज्ञित्वात्। अदर्शनं लोपसंज्ञं भवतीत्युच्यते, लुमत्संज्ञाश्चाप्यदर्शनस्य क्रियन्ते। तेन लुक्यपि भविष्यति।**

**अयं भावः** – सूत्रस्य प्रयोजनं पूर्वमुक्तम्। इदानीं लक्ष्ये सूत्रस्य प्रवृत्तिर्न भवति, तदर्थं वार्तिकं प्रस्तूयते लुक्युपसंख्यानमिति। पञ्चन् सप्तन् शब्दाभ्यां जसि नान्तत्वात् षट्संज्ञायां ''षड्भ्यो लुक्'' (७।१।२२) इति जस्विभक्तेर्लुकि सति प्रत्ययलोपे प्रत्ययलक्षणमिति प्रत्ययलक्षणेन पदसंज्ञा न प्राप्नोति। यतो हि सूत्रे यत्र लोपपदेन प्रत्ययस्याऽदर्शनं भवति तत्रैव प्रत्ययलक्षणकार्यं भवति। सप्त पञ्च इत्यत्र प्रत्यस्यादर्शनं लुक्पदेन जातम्। तर्हि लुक्युपसंख्यानमिति वार्तिकं न कर्त्तव्यम्। तत्रादर्शनस्य लोपसंज्ञित्वं भवति। अदर्शनमिति पदं लोपसंज्ञं भवतीत्युच्यते। लुक्श्लुलुपः एताः संज्ञा अपि अदर्शनस्यैव भवन्ति।

**(म० भा०) ''यद्येवम् – प्रत्ययादर्शनं तु लुमत्संज्ञम्॥ ५॥ प्रत्ययादर्शनं तु लुमत्संज्ञमपि प्राप्नोति। तत्र को दोषः? तत्र लुकि श्लुविधिः प्रतिषेध्यः॥ ६॥ तत्र लुकि श्लुविधिः प्राप्नोति स प्रतिषेध्यः। अत्ति हन्ति (६।१।१०) श्लाविति द्विर्वचनं प्राप्नोति।''**

**अयं भावः**– यदि प्रत्ययादर्शनं लुक्श्लुलुपां संज्ञा स्यात्? तदा लुक्श्लुलुपां संकरः प्राप्नोति। तस्य प्रतिषेधो वक्तव्यः। यथा लुकि श्लुविधिः प्राप्नोति।



अत्ति हन्ति। श्लौ (६।१।१०) इति सूत्रेण द्विर्वचनं प्राप्नोति। जुहोतीत्यत्र ''उतो वृद्धिर्लुकि हलि'' इति वृद्धिः प्राप्नोति। लुप्यपि लुविधिः प्राप्नोति। यथा हरीतक्याः फलानीत्यर्थेऽणि तस्य हरीतक्यादिभ्यश्चेति वार्तिकेनाणो लुपि ''लुक्तद्धितलुकि'' (१।२।४९) इति ङीषो लुक् प्राप्नोति। लवणेन संसृष्टः (लवणः सूपः) इत्यर्थे ठकि तस्य लवणाल्लुक् (४।४।२४) इति लुकि ''लुपि युक्तवद्व्यक्तिवचने'' (१।२।५१) इति युक्तवद्भावः प्राप्नोति।

**(म० भा०) ''न वा पृथक्संज्ञाकरणात्''॥ ८॥ न वैष दोषः। किं कारणम्? 'पृथक्संज्ञाकरणात्'। पृथक्संज्ञाकरणसामर्थ्याल्लुकि श्लुविधिर्न भविष्यति। तस्माददर्शनसामान्याल्लोपसंज्ञा लुमत्संज्ञाम् अवगाहते। यथैव तर्हि अदर्शनं सामान्याल्लोपसंज्ञा लुमत्संज्ञाम् अवगाहते, एवं लुमत्संज्ञा अपि लोपसंज्ञामवगाहेरन्। तत्र को दोषः? अगोमती गोमती सम्पन्ना गोमतीभूता 'लुक्तद्धितलुकि' (१।२।४९) इति ङीषो लुक् प्रसज्येत। ननु चात्रापि 'न वा पृथक्संज्ञाकरणादित्येव सिद्धम्।' यथैव तर्हि पृथक् संज्ञाकरणसामर्थ्यादत्र लुमत्संज्ञा लोपसंज्ञां नावगाहन्ते, एवं लोपसंज्ञापि लुमत्संज्ञां नावगाहेत। तत्र स एष दोषो – लुक्युपसंख्यानमिति। अस्त्यन्यल्लोपसंज्ञायाः पृथक्संज्ञाकरणे प्रयोजनम्। किम्? लुमत्संज्ञासु यदुच्यते तल्लोपमात्रे माभूदिति।**

**अयं भावः** – लुकि श्लुविधिः प्राप्नोतीति दूषणं प्रदत्तम्। तन्नास्ति दूषणम्। यतो हि, लुक्श्लुलुपां परस्परं सांकर्यं न प्राप्नोति पृथक् पृथक् लुगादीनां संज्ञाविधानसामर्थ्यात्। अतो लुकि श्लुविधिर्न प्रवर्त्तते। अतोऽदर्शनसामान्यस्यैव लुक्श्लुलुप्लोपसंज्ञाविधानेनातोऽदर्शनसामान्यात् लोपसंज्ञा लुमत्संज्ञां गृह्णीयात्। लुक्युपसंख्यानस्यावश्यकता नास्तीति तत्र, यथाऽदर्शनसामान्याल्लोपसंज्ञा लुमत्संज्ञां गृह्णाति तथैव लुमत्संज्ञा अपि लोपसंज्ञां गृह्णीयुः। अस्मिन् व्याख्याने अगोमती गोमती सम्पन्ना गोमतीभूतेत्यत्राभूततद्भावे विधीयमानस्य च्विप्रत्ययस्य सर्वापहारिलोपे 'लुक्तद्धितलुकि' (१।२।४९) इति स्त्रीप्रत्ययस्य लुक् प्राप्नोति। स्त्रियाः पुंवद्भाषितपुंस्कादिति पुंवद्भावस्तु न भवति। प्रकृतिविकृत्योः सामानाधिकरण्याभावात्। अमहती महती सम्पन्ना महद्भूता ब्राह्मणीत्यत्र तु भवति पुंवद्भावो यतो

ह्यत्र विशेषणत्वं महतीशब्दस्यामहतीशब्दं प्रति। तस्माद् विद्यतेऽत्र सामानाधिकरण्यम्। किन्तु महतो दकारस्य "आन्महत" इति आत्वं न भवति, महच्छब्दस्य गौणार्थकत्वाद्। ननु यथा लुगादि पृथक् पृथक् संज्ञाकरणात् तासां परस्परं साङ्कर्यं परिहृतम्। तत्रैकयैव संज्ञया प्रदेशवाक्येषु संज्ञिप्रत्यायने सिद्धेऽनेकसंज्ञाविधानसामर्थ्यात् तद्भावितग्रहणं विज्ञायते। तद्भावितस्वरूपं (संज्ञिरूपम्) चेत्थम् - लुक्श्लुलुप्संज्ञा अदर्शनबोधकाः सन्ति। अर्थात् प्रत्ययादर्शनस्य संज्ञाः इत्युक्ते प्रत्यासत्तिन्यायेन यया संज्ञया यददर्शनं भाव्यते, तस्यैवादर्शनस्य सा संज्ञेति लभ्यते। लुक्संज्ञया यददर्शनं भाव्यते तस्यादर्शनस्य लुक्संज्ञा भवतीति क्रमेण तत्तत्संज्ञा भावितस्यादर्शनस्य संज्ञा भविष्यति। तथैव लोपभावितस्यादर्शनस्य लोपसंज्ञा भवेत्। एतदेव हृदि निधाय भगवान् भाष्यकार उक्तवान् "न वा पृथक्संज्ञाकरणादित्येव सिद्ध"मिति। अग्रेऽपि यथा प्रत्ययादर्शनस्य तत्तत्संज्ञाभावितस्य लुगादयः संज्ञा लोपसंज्ञाभावितस्य प्रत्ययादर्शनस्य ग्रहणं न कुर्वन्ति तथैव लोपसंज्ञाऽपि लुगादिसंज्ञाभावितस्य प्रत्ययदर्शनस्य ग्रहणं न कुर्यात्। भवतु यदि लोपसंज्ञायामपि तद्भावितस्य ग्रहणमस्तु तदा लुक्युपसंख्यानमिति वार्तिकमवश्यमेव पठनीयम्। किन्तु लोपसंज्ञासामर्थ्यात् अत्र तद्भावितस्य प्रत्ययादर्शनस्य ग्रहणं न कर्त्तुं शक्यते। यतो हि लोपसंज्ञायाः पृथक्संज्ञाकरणे प्रयोजनमस्ति। किं तत् प्रयोजनम् इति चेदुच्यते। प्रत्ययाप्रत्ययादर्शनस्य लोपसंज्ञा यथा स्यादिति। यथा - शोभना दृषदोऽस्य स सुदृषत् प्रासादः। अत्र लुप्तस्य सामासिकस्य जस्प्रत्ययस्य प्रत्ययलोपे प्रत्ययलक्षणं न भवति। यतो हि "सोर्मनसी अलोमसी" (६।२।११७) इति सूत्रे मन्नन्तस्य असन्तस्योत्तरपदस्य सोरुत्तरस्य पदस्याद्युदात्तस्वरो भवति। अनिनस्मिन्निति परिभाषया मन्नन्तस्यासन्तस्य चार्थवतोऽनर्थकस्य च ग्रहणं भवति। सुपो धातुप्रातिपदिकयोरिति लुप्तस्यासः प्रत्ययाप्रत्ययसाधारणत्वात्। अतो लोपसंज्ञाया प्रत्ययाप्रत्ययादर्शनस्य संज्ञात्वान्न तत्र तद्भावितस्य लोपसंज्ञा।

**( म० भा० ) "लुमति प्रतिषेधाद्वा"॥ ८॥**

**अथवा यदयं 'न लुमताङ्गस्य' ( १।१।६३ ) इति प्रत्ययलक्षणप्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो भवति लुकि प्रत्ययलक्षणमिति।**



**अयं भावः** - भवतु लोपसंज्ञायां तद्भावितग्रहणम्। न लुमताङ्गस्य (१।१।६३) इति प्रत्ययलक्षणं प्रतिषेधति। यदि लोपनिमित्तककार्यं प्रत्ययलक्षणेन न प्राप्नोति, तदा प्रत्ययलक्षणप्रतिषेधस्य वैयर्थ्यं भवति। तदेव व्यर्थीभूय विज्ञापयति यत् लोपनिमित्तकं कार्यं प्रत्ययलक्षणेन प्राप्नोतीति। तेन न लुमताङ्गस्येति निषेध उपपन्नो भवति।

**( म० भा० ) 'सतो निमित्ताऽभावात् पदसंज्ञाऽभावः'॥ ९॥**

**अयं भावः** - अत्र वार्तिके निमित्तशब्दो निमित्तत्वपरः। तेन यस्य सतो विद्यमानस्य कार्यं प्रति निमित्तत्वं नाभूत् स प्रत्ययो लुप्तोऽप्यनिमित्तं स्यादिति वार्तिकस्याभिप्रायः। यथा - राज्ञः पुरुष इत्यत्र सति ङसि प्रत्यये भसंज्ञायां स्वादिष्वसर्वनामस्थाने (१।४।१७) इति पदसंज्ञा बाधिता भवति। पदसंज्ञानिमित्तको नलोपो न भवति, भसंज्ञानिमित्तकश्चाल्लोपो भवति। ङसि लुप्ते प्रत्ययलक्षणेनाल्लोपः स्यान्नलोपश्च न स्यात्। उच्यते तत्। अत्र द्वे पदसंज्ञे स्तः। एका स्वादिषु प्रत्ययेषु प्रकृतेः। सा च भसंज्ञया बाधिता भवति। द्वितीया - "सुप्तिङन्तं पदम्" (१।४।१४) इति प्रकृतिप्रत्ययसमुदायस्य। सा च लुप्तेऽपि प्रत्यये स्थितैव। अतः पदत्वान्नलोपो भविष्यति। प्रत्ययलक्षणेन भत्वादल्लोपस्तु न। न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधाद् भत्वाभावः।

ननु सति प्रत्यये वक्तुं शक्यतेऽनेन संज्ञा भविष्यतीति। सति ङसि प्रत्यये भसंज्ञया पदसंज्ञा बाध्यते। ङस्प्रत्ययेन सह राज्ञ इत्यस्य सुबन्तत्वात् पदसंज्ञाऽस्त्येव। अतो ङस्प्रत्ययस्य विद्यमानतायां राजन् इत्यस्य पदसंज्ञा न भविष्यति, राज्ञः इत्यस्य पदसंज्ञा भविष्यति इति वक्तुं शक्यते। परन्तु लुप्ते ङसि राजन् इत्येतदेव सुबन्तं पूर्वं च तदेव। उभयोः पदसंज्ञयोः राजन् इत्येवावधिर्वर्तते। यावत एवावधेः 'सुप्तिङन्तमिति' पदसंज्ञा भवति तावत एवावधेः स्वादिष्विति पदसंज्ञा प्राप्नोति। लुप्तं ङस्प्रत्ययं प्रत्ययलक्षणेनानीयाच्परत्वेन "यचि भम्" (१।४।१८) इति द्वे पदसंज्ञे बाधित्वा भसंज्ञा प्राप्नोतीति प्रथमो दोषः।

**( म० भा० )"तुग्दीर्घत्वयोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्षणत्वात् परिवीरिति"॥ १०॥**

**तुग्दीर्घत्वयोश्च विप्रतिषेधो नोपपद्यते। क्व? परिवीरिति। किं कारणम्? एकयोगलक्षणत्वात्। एकयोगलक्षणे हि तुग्दीर्घत्वे। इह लुप्ते प्रत्यये सर्वाणि प्रत्ययाश्रयाणि कार्याणि प्रत्यवषन्नानि भवन्ति – तान्येतेन प्रत्युत्थाप्यन्ते। अनेनैव तुग् अनेनैव च दीर्घत्वमिति। तदेकयोगलक्षणं भवति। योगलक्षणानि च न प्रकल्पन्ते।**

**अयं भावः** – परिपूर्वकाद् व्येञ्धातोः क्विपि ''वचिस्वपियजादीनां किति'' (६।१।१५) इति यकारस्य सम्प्रसारणे 'सम्प्रसारणाच्च' (६।१।१०८) इति पूर्वरूपे क्विपः सर्वापहारिलोपे प्रत्ययलोपे सति सर्वाणि कार्याणि प्राप्तानि न भवन्ति। पर्यवषन्नानि = मृतानि। अप्राप्तानीति यावत्। प्रत्ययलोपे प्रत्ययलक्षणमिति क्विपः स्थानिवद्भावेन 'हलः' इति दीर्घः प्राप्नोति ''ह्रस्वस्य पिति कृति तुक्'' इति तुक् प्राप्नोति। प्रत्ययलोपेति सूत्रेण तुक् प्रत्युत्थाप्यतेऽनेनैव दीर्घश्च। अत्र कार्यद्वयमेकयोगलक्षणमस्ति। तच्च नोपपन्नं भवति। एकयोगलक्षणानि कार्याणि न भवन्ति। पौर्वापर्यक्रमाभावात्।

**( म० भा० )–''सिद्धं तु स्थानिसंज्ञानुदेशादान्यभाव्यस्य''॥ ११॥**

**सिद्धमेतद्। कथम्? स्थानिसंज्ञाऽन्यभूतस्य भवतीति वक्तव्यम्। किं कृतं भवति? सत्तामात्रमनेन क्रियते। यथा प्राप्ते तुग्दीर्घत्वे भविष्यतः। तद्वक्तव्यं भवति। यद्यप्येतदुच्यते, अथवैतर्हि स्थानिवद्भावो नारभ्यते। यद्येवम् – आङो यमहन आत्मनेपदं – भवतीति हन्तेरेव स्याद्वधेर्न स्यात्। नहि काचिद्धन्तेः संज्ञास्ति या वधेरतिदिश्यते। हन्तेरपि संज्ञास्ति। का? हन्तिरेव। कथम्? स्वं रूपं शब्दस्याशब्दसंज्ञा ( १।१।६८ ) इति वचनात् स्वं रूपं शब्दस्य संज्ञा भवतीति हन्तेरपि हन्तिः संज्ञाभवतीति।**

**अयं भावः** – सिद्धं त्विति। तुग्दीर्घयोर्विप्रतिषेध उपपद्यते। कथमिति चेदुच्यते – स्थानिसंज्ञानुदेशादान्यभाव्यस्य। अर्थात् स्थानिसंज्ञाऽन्यभूतस्य भवतीति वक्तव्यम्। अन्यो भावोऽन्यद्वस्तु। स्थान्यपेक्षयाऽन्यादेशः। अत्र स्थानी क्विप् प्रत्ययः। तदन्यो लुग्रूपादेशः। स स्थानिनः संज्ञा कृत्पित्प्रत्ययत्वादिः ताः संज्ञा आन्यभाव्यस्य स्युः। अन्यभाव एवान्यभाव्यम्। चातुर्वर्ण्यादीनां स्वार्थे उपसंख्यानमिति गुणवचनब्राह्मणादिभ्यः कर्मणि च (५।१।१२४) इति सूत्रस्थेन



वार्तिकेन स्वार्थे ष्यञि प्रत्यये आदिवृद्धौ आन्यभाव्यम् = अन्यभूतमित्यनर्थान्तरम्। स्थानिसंज्ञाया अतिदेशेन स्थानिसत्तैवोपस्थाप्यते। न तु प्रत्ययलक्षणकार्यं क्रियते। लुप्तः क्विप् प्रत्ययः केवलमुपस्थितोऽस्तीति ज्ञास्यते। परिवीरित्यत्र तुग्दीर्घयोः यो परो भविष्यति तस्य कार्यं भविष्यति। 'हलः' सूत्रस्य तुगपेक्षया परत्वमस्ति। तेन पूर्वं दीर्घो भविष्यति पश्चात् तुकः प्राप्तिरेव नास्ति, तत्र ह्रस्वाभावात्। यद्यपि सिद्धं तु स्थानिसंज्ञानुदेशादान्यभाव्यमिति गौरवयुक्तं न्यासान्तरं क्रियते तथापि न्यासेऽस्मिन्ननल्विधाविति सन्निवेशेन स्थानिवदादेशोऽनल्विधाविति सूत्रं न करणीयम्। तस्य कार्यं स्थानिसंज्ञान्यभूतस्यानल्विधावितिन्यासः करिष्यते। ननु न्यासेऽस्मिन् दूषणमुपस्थितं भवति। 'आङो यमहनः' (१।३।२८) इत्यात्मनेपदं हन्तेरेव स्यात्। वधेर्न प्राप्नोति। यतो हि हन्तेर्न काचित् संज्ञास्ति या वधेरतिदिश्येत। अस्ति हन्तेरपि संज्ञा हन्तिरिति। ''स्वं रूपं शब्दस्याशब्दसंज्ञा'' (१।१।६८) इति वचनात् शब्दस्य शब्दोऽपि संज्ञा भवति। एवं हन्तेरपि हन्तिरिति संज्ञा भवति या वधेरपि अतिदिश्यते।

**( म० भा० ) ''भसंज्ञाङीप्ष्फगोरात्वेषु च सिद्धम्''॥ १२॥**

**भसंज्ञा – राज्ञः पुरुषो राजपुरुषः। प्रत्ययलक्षणे 'यचि भम्' ( १।४।१८ ) इति भसंज्ञा प्राप्नोति। ''स्थानिसंज्ञाऽन्यभूतस्यानल्विधा'' वितिवचनान्न भवति।**

**ङीप् – चित्रायां जाता चित्रा प्रत्ययलक्षणेनाऽणन्तादीकारः प्राप्नोति। ''स्थानिसंज्ञाऽन्यभूतस्यानल्विधाविति वचनान्नभवति।''**

**ष्फ – वतण्डी। प्रत्ययलक्षणेन यञन्तादिति ष्फः प्राप्नोति। 'स्थानिसंज्ञान्यभूतस्यानल्विधावितिवचनान्न भवति।'**

**गोरात्वम् – गामिच्छति गव्यति। प्रत्ययलक्षणेनाऽमि ''ओतोऽम्-शसोः'' ( ६।१।९३ ) इत्यात्वं प्राप्नोति। ''स्थानिसंज्ञाऽन्यभूतस्यानल्वि-धाविति वचनान्न भवति।''**

**अयं भावः** – स्थानिसंज्ञाऽन्यभूतस्यानल्विधाविति वचनाद् वार्तिको-क्तानि भसंज्ञाङीबादिकार्याणीष्टानि सिद्ध्यन्ति।

भसंज्ञा – राज्ञः पुरुषः राजपुरुषः। इत्यत्र षष्ठीतत्पुरुषसमासे सति लुप्तं ङस्प्रत्ययं प्रत्ययलक्षणेनानीय 'यचि भम्' (१।४।१८) इति भसंज्ञा प्राप्नोति। सत्यां भसंज्ञायां "नलोपः प्रातिपदिकान्तस्य" (८।२।७) इति नलोपो न प्राप्नोति। "स्थानिसंज्ञान्यभूतस्यानल्विधावितिवचनात् स्थानिसंज्ञादेशस्य न भवति"। यतो हि 'यचि भम्' (१।४।१८) इत्यत्राजादिप्रत्ययस्याश्रयणादल्विधिसत्त्वात्। अतो भत्वाभावे 'सुप्तिङन्तं पदम्' (१।४।१४) इति पदत्वान्नलोपो भवति।

ङीप् – चित्रायां जाता चित्रा "तत्र जातः" (४।३।२५) इत्यधिकारेऽपि श्रविष्ठाफाल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् (४।३।३४) इति सूत्रस्थेन "लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम्" इति वार्तिकेनाण्प्रत्ययस्य लुकि तस्य लुग्रूपादेशस्य प्रत्ययलक्षणेनाण्प्रत्ययमादायाणन्तत्वात् टिड्ढाणञित्यादिसूत्रेण टाप्प्रत्ययं प्रबाध्य ङीप् प्राप्नोति। स्थानिसंज्ञान्यभूतस्यानल्विधावितिवचनाद् ङीष्प्रत्ययो न भवति। तत्रादित्यनुवर्तनात् ङीष्विधावल्विधित्वात्। ततष्टाप्प्रत्यये सति चित्रेति रूपं सिद्ध्यति। टिड्ढाणञिति सूत्रेऽदित्यनुवर्तनादकारान्तादणो ङीप् स्यादित्यर्थो लभ्यते।

ष्फ – वतण्डी। वतण्डस्य गोत्रापत्यं स्त्रीत्यर्थे "वतण्डाच्च" (४।१।१०८) इति यञि तस्य "लुक् स्त्रियाम्" (४।१।१०९) इति लुकि ततः प्रत्ययलक्षणेन यञन्तत्वेन "प्राचां ष्फः तद्धितः" (४।१।१७) इति ष्फः प्राप्नोति। अत्रादित्यनुवर्तनाद् भवत्यल्विधिः। स्थानिसंज्ञाऽन्यभूतस्यानल्विधाविति निषेधात्। अतोऽन्यभूतस्य यञ्लुक्रूपादेशस्य स्थानिसंज्ञाया निषेधो भवति। अत्राप्यल्विधिसत्त्वात्। ततष्टापि सति चित्रेत्येवरूपं भवति।

गोरात्वम् – आत्मनो गामिच्छत्यर्थे सुप आत्मनः क्यच् (३।१।८) इति क्यचि क्यजन्तस्य धातुत्वात् "सुपो धातुप्रातिपदिकयोः" (२।४।७१) इति सुपो लुकि तस्य प्रत्ययलक्षणेनामिति प्रत्ययमादाय "औतोऽम्शसोः" (६।१।९३) इत्यात्वं प्राप्नोति। अत्रात्वविधायके सूत्रे इको यणचि (६।१।७७) इति सूत्रादचीति पदमनुवर्तते। भवत्यत्राल्विधिः। स्थानिसंज्ञाऽन्यभूतस्यानल्विधावितिवचनादम्लुग्रूपादेशस्य स्थानिसंज्ञा (अम्संज्ञा) न भवति। अल्विधिसत्त्वात्। तेनात्वमोकारस्य न भवति। वान्तो यि प्रत्यये (६।१।७९) इति सूत्रेणावादेशे गव्यतिरूपं सिद्ध्यति।



**(म० भा०) "तस्य दोषो ङौ नकारलोपेत्त्वेम्विधयः"॥ १३॥**

**तस्यैतस्य लक्षणस्य दोषो ङौ नकारलोपः – आर्द्रे चर्मन् लोहिते चर्मन्। प्रत्ययलक्षणेन "यचि भम्" (१।४।१८) इति भसंज्ञा सिद्धा भवति। स्थानिसंज्ञाऽन्यभूतस्यानल्विधाविति वचानान्न प्राप्नोति। इत्त्वम् – आशीः। प्रत्ययलक्षणेन हलीतीत्वं सिद्धं भवति। स्थानिसंज्ञाऽन्यभूतस्यानल्विधाविति वचनान्न प्राप्नोति। इम् – अतृणेट् प्रत्ययलक्षणेन हलीति इम् सिद्धो भवति। स्थानिसंज्ञाऽन्यभूतस्यानल्विधावितिवचनान्न प्राप्नोति। सूत्रं च भिद्यते। यथान्यासमेवास्तु। ननु चोक्तं सतो निमित्ताभावात् पदसंज्ञाभावस्तुग्दीर्घत्वयोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्षणत्वात् परिवीरिति। नैष दोषः। वक्ष्यत्यत्र परिहारम् – इहापि परिवीरिति। शास्त्रपरविप्रतिषेधेन परत्वाद् दीर्घत्वं भविष्यति।**

**अयं भावः** – स्थानिसंज्ञाऽन्यभूतस्यानल्विधावितिवचने दूषणमपि वर्तते। ङौ नकारलोपेत्त्वेम्विधयो न सिद्ध्यन्ति। यथा – ङौ नकारलोपः। आर्द्रे चर्मन् लोहिते चर्मन्। अत्र 'चर्मन् ङि' इत्यवस्थायां सुपां सुलक् पूर्वसवर्णाच्छेयाडाड्यायाजालः (७।१।३९) इति ङेर्लुकि तस्य प्रत्ययलक्षणेन ङिविभक्तिमादाय 'यचि भम्' इति भसंज्ञायां नकारलोपस्याभावः सिद्ध्यति। किन्तु स्थानिसंज्ञाऽन्यभूतस्यानल्विधविति वचनस्वीकारे "यचि भमित्यत्राजादावितिनिमित्तकत्वेन अल्विधिसत्त्वेन भसंज्ञाया निषेधेन नकारलोपः प्राप्नोति। तदर्थं न ङिसम्बुद्ध्योः" (८।२।८) इति सूत्रं कर्त्तुमापतति। इत्त्वम् – आशीः। उकारेत्संज्ञकात् आङ्पूर्वकात् अनुशिष्टावित्यर्थकात् शास्धातोः क्विपि तस्य सर्वापहारिलोपे प्रत्ययलक्षणेन क्विपमादाय "शास इदङ्हलोः" (६।४।३४) इति शास आकारस्येत्वं सिद्धं भवति। किन्तु स्थानिसंज्ञान्यभूतस्यानल्विधाविति वचनस्वीकारे इत्वविधायके शास इदङ्हलोरिति सूत्रे हलीति अलाश्रयणात् इत्वं न भवति। तदर्थमाशासः क्वावुपसंख्यानमिति वार्तिकं कर्त्तुमापतति। इम् – अतृणेट्। अत्र तृहधातोर्लङि अटि तिपि श्नमि तिपः तकारस्य हल्ङ्यादिना लोपे तस्य प्रत्ययलक्षणेन तकारमादाय 'तृणह इम्' (७।३।९२) इमागमः सिद्ध्यति। किन्तु स्थानिसंज्ञाऽन्यभूतस्यानल्विधावितिवचनस्वीकारे इमागमविधायके तृणह इमिति सूत्रे हलादिपितिसार्व-

धातुक इत्यर्थे अलाश्रयणात् लुग्रूपादेशस्य स्थानिसंज्ञाया निषेधात् इमागमो न सिद्ध्यति।

उक्तैर्दोषैः सह स्थानिसञ्ज्ञाऽन्यभूतस्यानल्विधाविति वचनस्वीकारे भगवतः पाणिनेः सूत्रमपि भिद्यते। तर्हि प्रत्ययलोपे प्रत्ययलक्षणमित्येव सूत्रं स्यात्। ननु यथान्यासमित्यत्र दूषणद्वयमुपन्यस्तम्। प्रथमं दूषणम् सतो निमित्ताभावात् पदसंज्ञाऽभाव इति। द्वितीयं दूषणम् तुग्दीर्घत्वयोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्षणत्वात् परिवीरिति।

तत्र प्रथमदूषणस्य परिहारः – न ङीति ङौ नकारलोपप्रतिषेधाज्ज्ञापकात् प्रत्ययलक्षणेन भसंज्ञा नेत्येवं रूपमनुपदमेतत् सूत्र एव वक्ष्यति भगवान् भाष्यकारः। द्वितीयदूषणं परिहरति – इहापि परिवीरिति – शास्त्रपरविप्रतिषेधेन परत्वाद्दीर्घत्वं भविष्यतीति। अर्थादिदं सूत्रं तत्तच्छास्त्रप्रवृत्तिनिमित्तसम्पादनद्वारा तत्तच्छास्त्रसम्पादकमस्तीति विप्रतिषिद्धयोः शास्त्रयोः पौर्वापर्यं पाठदेशेनैव निर्धारणीयमिति भावः। परिवीः इहापि "हलः" इति सूत्रस्य तुगपेक्षया परत्वाद्दीर्घ एव पूर्वं भविष्यति।

**(म० भा०) कानि पुनरस्य योगस्य प्रयोजनानि?**

**"प्रयोजनमपृक्तशिलोपे नुममामौ गुणवृद्धिदीर्घत्वेमडाट्श्नम्विधयः"॥ १४॥**

**अपृक्तलोपे शिलोपे च कृते नुम्, अमामौ गुणवृद्धी, दीर्घत्वम्, इम्, अडाटौ, श्नम्विधिरिति प्रयोजनानि। नुम् – अग्रे त्री ते वाजिना त्री षधस्था। ताता पिण्डानाम्। नुम्॥ अमामौ – हे अनड्वन् अनड्वान्। गुणः – अधोक् अलेट्। वृद्धिः – न्यमार्ट्। दीर्घत्वम् - अग्रे त्री ते वाजिना त्री षधस्थाः। ताता पिण्डानाम्। इम् - अतृणेट्। अडाटौ - अधोक् अलेट्। ऐयः औनः। श्नम् विधिः - अभिनोऽत्र अच्छिनोऽत्र। अपृक्तशिलोपयोः कृतयोरेते विधयो न प्राप्नुवन्ति। प्रत्ययलक्षणेन भवन्ति।**

'अग्रे त्री ते वाजिना त्री षधस्था' (ऋ० सं० ३। २०। २) इति वैदिके मन्त्रे त्रीतिरूपं जसि शसि च भवति, लोके त्रीणि भवति। त्रिशब्दाज्जसः स्थाने



श्यादेशे तस्य 'शेश्छसि बहुलम्' (६। १। ७०) इति शेः लोपे प्रत्ययलक्षणेन शिमादाय 'नपुंसकस्य झलचः' (७। १। ७२) इति सर्वनामस्थाने परतो नुमि सर्वनामस्थाने चाऽसाम्बुद्धौ (६। ४। ८) इति उपधादीर्घे 'न लोपः प्रातिपदिकान्तस्य' (८। २। ८) इति नकारलोपे त्री इति रूपं सिद्ध्यति। एवं वाजिनानि लोके, वेदे तु वाजिना। प्रक्रिया पूर्ववत्। लोके षधस्थानीति वेदे षधस्था। तानि तानि (लोके) वेदे ताता इति।

अमामौ – हे अनड्वन् अनड्वान्। अत्र अनडुह्शब्दात् सम्बोधनस्यैकत्वविवक्षायां सौ तस्य हल्ङ्यादिभ्यो दीर्घात्सुतिस्यपृक्तं हल् (६। १। ६८) इति लोपे प्रत्ययलक्षणेन सम्बुद्धिमादाय "अम्सम्बुद्धौ" (७। १। ९९) इति सम्बुद्धौ परेऽमागमे ततः 'सावनहुहः' (७। १। ८२) इति नुमि हकारस्य संयोगान्तलोपे हे अनड्वन् इति सिद्ध्यति। अनडुह्शब्दस्य प्रथमाया एकवचने सौ तस्य हल्ङ्याब्भ्यः (६। १। ६८) इति सकारलोपे तस्य प्रत्ययलक्षणेनादाय चतुरनडुहोरामुदात्तः (७। १। ९८) इत्यामागमे नुमि दीर्घे हकारलोपे अनड्वान् इति सिद्ध्यति।

गुणः – अधोक् अलेट्। प्रपूरणार्थकाद् दुह्धातोर्लङि तिपि तस्य हल्ङ्यादिना लोपे प्रत्ययलक्षणेन लुप्तकारमादाय सार्वधातुके परे 'पुगन्तलघूपधस्य च' (७। ३। ८६) इति गुणे अडागमे च ततो हस्य घत्वे दस्य भष्भावे जश्त्वे चर्त्वे च अधोक् इति भवति। एवं लिह्धातोरास्वादनार्थकाद् लङि तिपि तस्य हल्ङ्यादिना लोपे प्रत्ययलक्षणे तमादाय 'पुगन्तलघूपधस्य च' (७। ३। ८६) इति गुणेऽडागमे च कृते ततो हस्य ढत्वे जश्त्वे चर्त्वे अलेट् इति भवति।

वृद्धिः – न्यमार्ट्। निपूर्वकादूकारषकारानुबन्धकान्मृज्धातोर्लङि तिपि तस्य हल्ङ्यादिना लोपे, तं प्रत्ययलक्षणेन मत्वा मृजेर्वृद्धिः (७। २। ११४) इति धातोर्विहिते प्रत्यये परे वृद्धौ रपरत्वेऽडागमे यणि जकाररस्य षत्वे तस्य जश्त्वे चर्त्वे न्यमार्ट् इति भवति।

दीर्घत्वम् – अग्रे त्री ते वाजिना त्री षधस्था (ऋ.सं. ३। २०। २) त्रीणि = त्री, वाजिनानि = वाजिना, वधस्थानि = षधस्था। इत्यत्र त्रि वाजिनषधस्थशब्देभ्यो जसि तस्य स्थाने श्यादेशे तस्य "शेश्छन्दसि बहुलम्" (६।

१।७०) इति शेः लोपे प्रत्ययलक्षणेन तमादाय नुमि सर्वनामस्थाने चासम्बुद्धौ (६।४।८) इत्युपधादीर्घे नलोपे त्री वाजिना षधस्था एतानि वेदे रूपाणि जायन्ते।

अडाटौ – अधोक् अलेट्, ऐयः औनः। अधोक् अलेट् इत्येतयोरपृक्तलोपे प्रत्ययलक्षणेनापृक्तमादायाडागमो भवतीति गुणस्योदाहरणे व्याख्यातम्।

ऐयः औनः। इयर्तेर्लङि तिपि शपि तस्य श्लौ द्वित्वे इकारलोपे हल्ङ्यादि-सूत्रेणापृक्तलोपे प्रत्ययलक्षणेनापृक्तमादाय गुणे रपरत्वे अभ्यासस्याऽसवर्णे (६।४।७८) इतीयङादेशे "आडजादीनाम्" (६।४।७२) इत्याडागमे वृद्धौ रेफस्य विसर्गे ऐयः इति रूपं भवति। क्लेदनार्थकादीकारेत्संज्ञकात् उन्द्धातोः लङि सिपि श्नमि इकारलोपे हल्ङ्यादिनापृक्तलोपे प्रत्ययलक्षणेनापृक्तमादाय "आडजादीनाम्" इत्याडागमे "आटश्च" (६।१।९०) इतिवृद्धौ 'श्नान्नलोपः' इति नकारलोपे 'दश्च' (८।२।७२) इति दकारस्य रुत्वे, विसर्गे औनः इति।

श्नम् विधिः – अभिनोऽत्र अच्छिनोऽत्र। इरित्संज्ञकाद् विदारणार्थका-द्भिद्धातोर्लङि सिपि इकारलोपेऽपृक्तलोपे तस्य प्रत्ययलक्षणेन स्थानिवद्भावेन रुधादिभ्यः श्नम् (३।१।७८) इति श्नमि अडागमे 'दश्च' (८।२।७२) इति दकारस्य रुत्वे उत्वे पूर्वरूपेऽभिनोऽत्रेति रूपम्। एवमच्छिनोऽत्र। इरित्संज्ञकाच्छे-दनार्थकाच्छिद्धातोः लङि सिपि इकारलोपे हल्ङ्यादिनाऽपृक्तलोपे प्रत्ययलक्षणे-नापृक्तमादाय श्नमि अडागमे 'दश्च' (८।२।७२) इति दकारस्य रुत्वे, उत्वे पूर्वरूपे अच्छिनोऽत्रेति सिद्ध्यति। अपृक्तशिलोपयोः कृतयोरेते विधयो न प्राप्नुवन्ति। प्रत्ययलक्षणेन भवन्ति।

**(म० भा०) – "नैतानि सन्ति प्रयोजनानि। स्थानिवद्भावेनाप्येतानि सिद्धानि। न सिद्ध्यन्ति। आदेशः स्थानिवदित्युच्यते। न च लोप आदेशः। लोपोऽप्यादेशः। कथम्? आदिश्यते यः स आदेशः, लोपोऽप्यादिश्यते। दोषः खल्वपि स्याद्यदि लोपो नादेशः स्यात्। इह "अचः परस्मिन् पूर्वविधौ" (१।१।५७) इत्येतस्य भूयिष्ठानि लोप उदाहरणानि तानि न स्युः।"**



**अयं भावः** – एतान्यस्य सूत्रस्य प्रयोजनानि न सन्ति, स्थानिवद्भावेनापि एतानि प्रयोजनानि सिद्धानि भविष्यन्ति। न सिध्यन्ति। आदेशस्य तत्र स्थानिव-मुच्यते। लोपश्च आदेशो न भवति। भोः लोपोऽप्यादेशोऽस्ति। कथम्? आदिश्यते यः स आदेशो भवति। लोपोऽपि आदिश्यते। यदि लोपस्यादेशत्वं न स्वीक्रियते तदा दोषोऽपि स्यात्। "अचः परस्मिन्न्"तिसूत्रे लोपस्य बहून्युदाहरणानि लोपस्य सन्ति, तानि न सेत्स्यन्ति।

**(म० भा०) – "यत्र तर्हि स्थानिवद्भावो नास्ति तदर्थमयं योगो वक्तव्यः।" क्व च स्थानिवद्भावो नास्ति। योऽल्विधिः। किं प्रयोजनम्? ङौ नकारलोपेत्वेम्विधयः।**

**"भसंज्ञाङीप्ष्फगोरात्वेषु च दोषः"॥ १५॥**

**भसंज्ञाङीप्ष्फगोरात्वेषु च दोषो भवति। भसंज्ञायां तावन्नदोषः। आचार्यप्रवृत्तिर्ज्ञापयति "न प्रत्ययलक्षणेन भसंज्ञा भवती"ति, यदयं 'न ङिसम्बुद्ध्योः' (८।२।८) इति ङौ प्रतिषेधः शास्ति। ङीप्यपि नैवं विज्ञायते – अणन्तादकारान्तादिति। कथं तर्हि? अण्योऽकार इति।**

**ष्फेऽपि नैवं विज्ञायते – यञन्तादकारान्तादिति। कथं तर्हि? यञ्योऽकार इति।**

**गोरात्वेऽपि नैवं विज्ञायते–अमि अचीति। कथं तर्हि? अच्यमीति।**

**अयं भावः** – भसंज्ञाया न कोऽपि दोषः। आचार्यपाणिनेर्व्यवहारेण ज्ञायते यत् प्रत्ययलक्षणेन भसंज्ञा न भवतीति। यतो ह्ययं "न ङिसम्बुद्ध्योः" (८।२।८) ङौ प्रत्यये परतः नलोपस्य प्रतिषेधं शास्ति। यदि ङौ परतः प्रत्ययलक्षणेन भसंज्ञा भवेत् तर्हि पदसंज्ञाया अभावादेव नलोपः प्रातिपदिकान्तस्य (८।२।७) इन लोपस्य प्राप्त्यभावात् नलोपनिषेधस्य वैयर्थ्यमेव। तदेव व्यर्थीभूय ज्ञापयति – 'प्रत्ययलक्षणेन भसंज्ञा न भवती'ति। ज्ञापिते तु प्रत्ययलक्षणेन, आर्द्रे चर्मन् इत्यत्र सुपां सुलुगिति सूत्रेण ङेर्लुकि भसंज्ञाया अभावे सुप्तिङन्तं पदम् (१।४।१४) इति पदत्वे नलोपप्राप्तौ नलोपप्रतिषेधस्य सार्थक्यं भवति। अत एव राज्ञः पुरुषः राजपुरुष इत्यत्र प्रत्ययलक्षणेन भसंज्ञाया अभावात् सुबन्तस्य पदत्वेन नलोपो भवति।

ङीप्यपि नास्ति दोषः। चित्रायां जाता इत्यर्थे "सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्" (४। ३। १६) इत्यणि तस्य लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् इति वार्तिके "श्रविष्ठाफाल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्" (४। ३। ३४) इति सूत्रस्थेन लुकि चित्रशब्दात् टाप्प्रत्ययं प्रबाध्य 'टिड्ढाणञ्' इति सूत्रेण ङीप् प्राप्नोति। तद्वारयति भगवान् पतञ्जलिः – नैवं विज्ञायते – अणन्तादकारान्तात् प्रातिपदिकान्ङीप् स्यादिति ङीब्विधायकस्य 'टिड्ढाणञ्' इति सूत्रस्यार्थः। तत्राणन्तादित्यर्थः प्रत्ययग्रहणे तदन्ता ग्राह्या इति नियमात्तदन्तम् अर्थात् अणन्तमित्यर्थः। अधिकृतात् प्रातिपदिकादिति पञ्चम्यन्तपदानुसारेण अणन्तात् प्रातिपदिकादिति लभ्यते। अणन्तपदस्य प्रातिपदिकादित्यत्र विशेषणत्वात्। "अजाद्यतष्टाप्" इत्यतोऽनुवृत्तस्यादित्यस्यापि प्रातिपदिके विशेषणत्वात् अकारान्तादिति लभ्यते। अणन्तादकारान्तात् प्रातिपदिकात् ङीप् भवतीत्यर्थे ङीप् प्राप्नोतीति दूषणमस्ति। कथं तर्हि विज्ञायते? प्रातिपदिकावयवो योऽणोऽकारः ततो ङीप् स्यादित्यर्थे कृते वर्णाश्रये नास्ति प्रत्ययलक्षणमिति परिभाषया ङीपो निषेधेन टाब् भवति। "प्राचां ष्फः तद्धितः" (४। १। १७) इत्यत्रापि नैतादृशोऽर्थः क्रियते यञन्तादकारान्तादिति। किन्तु यञो योऽकारस्ततः ष्फः प्रत्ययो भवतीत्यर्थः करिष्यते। अतो वतण्डस्य गोत्रापत्यं स्त्रीत्यर्थे 'वतण्डाच्च' (४। १। १०८) इति यञि तस्य 'लुक्स्त्रियाम्' (४। १। १०९) इति लुकि स्त्रीत्वविवक्षायां टापं प्रबाध्य प्राचां ष्फः तद्धितः (४। १। १७) इति भवति। यतो हि "अजाद्यतष्टाप्" (४। १। ४) इत्यतोऽदित्यनुवर्तते प्राचां ष्फ तद्धितः इति सूत्रे। तेनोक्तेऽर्थे वर्णप्राधान्यं भवति। वर्णाश्रये नास्ति प्रत्ययलक्षणमिति निषेधो भवति। एवं गामात्मन इच्छतीत्यर्थे क्यचि धातुत्वात् सुपोर्लुकि प्रत्ययलक्षणेन लुप्तां विभक्तिमादाय 'औतोऽम्शसोः' (६। १। ९३) इत्यात्वं न शङ्कनीयम्। अत्र नैवं विज्ञायते अमि अचीति। यस्यार्थो भवति – अजादौ अमि प्रत्यये परतः पूर्वपरयोरात्वं भवतीति। किन्तु अच्यमीति। यस्यार्थो भवति – अम्सम्बधिनि अचि परतः पूर्वपरयोरात्वं भवतीति। अत्र वर्णप्राधान्यात् वर्णाश्रये नास्ति प्रत्ययलक्षणमिति प्रत्ययलक्षणमिति प्रत्ययपदेन ज्ञापितया परिभाषया प्रत्ययलक्षणस्य निषेधात् गव्यति इत्यत्रात्वं न भवतीति। अमि अचि इति प्रथमव्याख्याने



अमीत्यत्र अचो विशेषणत्वं तेन 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति परिभाषया तदादिपदस्योपस्थित्या अजादौ अमि परतः पूर्वपरयोरात्वं भवतीत्यर्थः सम्पद्यते। पक्षेऽस्मिन् वर्णाश्रये नास्ति प्रत्ययलक्षणमिति परिभाषायाः प्रवृत्तिर्नास्ति। वर्णप्राधान्याभावात्। अत्रामीत्यस्य विशेष्यत्वात्। अचि अमीति व्याख्याने अचीत्यस्य विशेष्यत्वात्। तेनासवयवभूतेऽचीत्यर्थस्वीकारे वर्णाश्रयत्वेन वर्णप्राधान्येन च वर्णाश्रये नास्ति प्रत्ययलक्षणमित्यस्याः प्रवर्तनात् गव्यतीत्यत्रात्वं न भवतीत्यर्थः।

**( म० भा० ) प्रयोजनान्यपि तर्हि नैतानि सन्ति। यत्तावदुच्यते ङौ नकारलोप इति। क्रियते एतन्न्यास एव, न ङिसम्बुद्ध्योरिति। इत्त्वमपि वक्ष्यत्येतत् – शास इत्त्वे क्वाविति। इम्विधिरपि हलीतिनिवृत्तम्। यदि हलीतिनिवृत्तम्। तृणहानि अत्रापि प्राप्नोति। एवं तर्हि – 'अचिने' त्यप्यनुवर्तिष्यते।**

**अयं भावः –** 'प्रयोजनं ङौ नकारलोपेत्वेम्विधयः' इति वार्तिके प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रस्य प्रयोजनत्रयमुक्तम्। तदप्येतस्य सूत्रस्य प्रयोजनं नास्ति। तथाहि – आर्द्रे चर्मन् इत्यत्र न ङिसम्बुद्ध्योरिति सूत्रसामर्थ्यात् भसंज्ञाविषये प्रत्ययलोपे प्रत्ययलक्षणं न प्रवर्तते। तेन सुबन्तपदत्वे न लोपः प्राप्नोति। तदर्थं न ङिसम्बुद्ध्योरिति तत्प्रतिषेधाय सार्थकं भवतीति। आशीः। आङ्पूर्वकात् उकारेत्संज्ञकात् शासुधातोः क्विपि तस्य सर्वापहारिलोपात् 'शास उपधाया' इकारादेशो भवति अङि परत हलादौ च क्ङितीत्यर्थकेन "शास इदङ्हलोः" (६। ४। ३४) इति सूत्रेणेत्वं न प्राप्नोति। तदर्थमल्विधावपि प्रत्ययलक्षणं स्यादिति सूत्रस्य प्रयोजनमुक्तम्। तदन्यथासिद्धम्। शास इदङहलोरिति सूत्रे "आशासः क्वावुपसंख्यानमिति वार्तिकेनेत्त्वं" भविष्यति। अत्र सूत्रस्य प्रयोजनं नास्तीति भावः।

तृह्धातोर्लङि तिपि श्नमि इकारलोपेऽपृक्तलोपे च हलादौ पिति सार्वधातुके तृह्धातोः इमागमो भवतीत्यर्थकेन "तृणह इम्" (७। ३। ९२) इति सूत्रेणाल्विधित्वेन इमागमो न प्राप्नोति तदर्थं सूत्रप्रयोजनमुक्तं वार्तिककृता। तत्र, उतो वृद्धिर्लुकि हलि (७। ३। ८९) इति सूत्रादनुवृत्तस्य हलीत्यस्य निवृत्तिकरणादित्वं भविष्यति। इमागमार्थं सूत्रस्य प्रयोजनं नास्तीति। ननु हलीत्यस्य निवृत्तौ तृणहानि इत्यत्रापि इमागमः स्यात्। अत्र पिति सार्वधातुके इति निमित्तस्य सत्त्वात्। तर्द 'नाभ्यस्त-

स्याचि पिति सार्वधातुके' (७।३।८७) इत्यतोऽचि न इत्यनुवृत्तिः करिष्यते। तेनाजादौ पिति सार्वधातुके इमागमो न भविष्यति। तृणहानि नास्त्यत्र दूषणम्।

**(म० भा०) न तर्हीदानीमयं योगो वक्तव्यः? वक्तव्यश्च। किं प्रयोजनम्? प्रत्ययं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन यथा स्यात्। शब्दं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन माभूदिति। किं प्रयोजनम्? शोभना दृषदोऽस्य सुदृषद्ब्राह्मणः। ''सोर्मनसी अलोमोषसी'' (६।२।११७) इत्येष स्वरो माभूदिति।**

**अयं भावः** – यत्र विधौ प्रत्ययं गृहीत्वा कार्यविधानं भवति तत्रैव प्रत्ययलक्षणस्य प्रवृत्तिः स्यात्। यत्र प्रत्ययाप्रत्ययसाधारणशब्दप्रयोगो भवति, तत्र प्रत्ययलक्षणस्य प्रवृत्तिर्नभवति। यथा – सोरुत्तरं मन्नन्तमसन्तं च बहुव्रीहौ समासे आद्युदात्तं भवति। लोमोषसी वर्जयित्वेत्यर्थके ''सोर्मनसी अलोमोषसी'' (६।२।११७) इति सूत्रे मन् अस् शब्दौ प्रत्ययाप्रत्ययसाधारणौ स्तः। यतो हि ''अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन तदन्तविधिं प्रयोजयन्ति – अनया परिभाषया मनस्शब्दौ अर्थवन्तौ अनर्थकौ च स्तः।'' अतः प्रत्ययाप्रत्ययसाधारणौ स्तः। अत एव शोभना दृषदोऽस्येति बहुव्रीहिसमासे सु अस् दृषद् अस् इति स्थितौ समासत्वात् प्रातिपदिकत्वे सुपो लुकि प्रत्ययलक्षणेनासन्तमुत्तरपदं विधाय सोर्मनसी अलोमोषसीति सूत्रेणोत्तरपदस्याद्युदात्तस्वरो न भवति। किन्तु 'नञसुभ्याम्' (६।२।७२) इति सूत्रेणोत्तरपदस्यान्तोदात्तस्वर एव भवतीति भावः। अतः इदं प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रं भाष्यकारमते नियमार्थम् द्वितीयप्रत्ययग्रहणेनैवैतल्लभ्यते। वार्तिककारेणाल्विधौ विध्यर्थं प्रयोजनत्रयमुक्तम्। तेषां भाष्यकारेणान्यथासिद्धिं विधाय विध्यर्थत्वं खण्डितम्।

**''प्रत्ययलोपे प्रत्ययलक्षणम्''॥ १।१।६२॥**

*****

## ॥ न लुमताङ्गस्य॥ १।१।६३॥

अत्र **''काशिकावृत्तिः'' –**

**पूर्वेणातिप्रसक्तं प्रत्ययलक्षणमिति विशेषे प्रतिषेध उच्यते। लुमता शब्देन लुप्ते प्रत्यये यदङ्गं तस्य प्रत्ययलक्षणं कार्यं न भवति। गर्गाः, मृष्टः, जुहुतः। शब्यञोर्लुमता लुप्तयोरङ्गस्य गुणवृद्धी न भवतः। लुमतेति किम्? कार्यते। अङ्गस्येति किम्? पञ्च, सप्त, पयः, साम॥ इति काशिकावृत्तिः॥**

**न लमताङ्गस्य॥ १।१।६३॥**

**(म०भा०) ''लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यानम्''॥ १॥**

**लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यानम् कर्त्तव्यम्। एकपदस्वरे च लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम्। किमविशेषेण? नेत्याह।**

**''सर्वामन्त्रितसिज्लुक्स्वरवर्जम्''॥ २॥**

**सर्वस्वरमामन्त्रितस्वरं सिज्लुक्स्वरं च वर्जयित्वा।**

**सर्वस्वर – सर्वस्तोमः सर्वपृष्ठः। सर्वस्य सुपि (६।१।१९१) इत्याद्युदात्तत्वं यथा स्यात्।**

**आमन्त्रितस्वर – सर्पिरागच्छ। सप्तागच्छत। ''आमन्त्रितस्य चे'' त्याद्युदात्तत्वं यथा स्यात्।**

**सिज्लुकस्वर – मा हि दाताम्। मा हि धाताम्। ''आदिः सिचोऽन्यतरस्याम्'' (६।१।१८७) इत्येव स्वरो यथा स्यात्।**

**अयं भावः** – लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यानं कर्तव्यमिति वार्तिककृद्भिरुक्तम्। लुक्श्लुलप्शब्दोऽस्त्यस्मिन्निति लुमान्, तस्मिन्। एकञ्च तत् पदमित्येकपदम्। एकपदमाश्रयो यस्य स एकपदाश्रयः स चासौ स्वर इति एकपदाश्रयः स्वरः, तस्मिन् स्वरे कर्तव्ये प्रत्ययलक्षणप्रतिषेधो वक्तव्यः। यथा तृतीये वार्तिके ''प्रयोजनं ञिनिकित्स्वरा लुकि प्रयोजयन्ति। गर्गा वत्साः।'' बिदा

उर्वाः। उष्ट्रग्रीवा वामरज्जुरित्युदाहरणानि वक्ष्यति भगवान् भाष्यकारः। ततः प्राक् कश्चनावश्यको विचारः प्रस्तूयते। यथोक्तं वार्तिके एकपदाश्रयस्य स्वरस्य विधाने प्रत्ययलक्षणस्य प्रतिषेध इष्यते। परन्तु यत्र – पदद्वयाश्रयस्वरः कर्त्तव्यः स्यात् तत्र प्रत्ययलक्षणस्य प्रतिषेधो न भवति। पदस्य (८।१।१६) पदात् (८।१।१७) इत्यनयोरधिकारे दधि तिष्ठतीत्यत्र 'तिङतिङः' (८।१।२८) इति सूत्रेणातिङन्तात् पदात् तिङन्तस्य पदस्य निघातो भवति। अत्र दधिपदादुत्तरवर्तिनीं लुप्तां विभक्तिं प्रत्ययलक्षणेनादाय सुप्तिङन्तं पदम् (१।४।१४) इति पदसंज्ञायां सत्यामेव तिष्ठतिरिति पदस्य निघातो भवति। एवञ्चैकपदाश्रयेषु पदद्वयाश्रयेषु स्वरेषु कर्त्तव्येषु न लुमताङ्गस्येति सूत्रमङ्गाधिकार्यस्याभावात् न प्रवर्तते। अतो वार्तिककारेणाङ्गाधिकारविरहितेषु स्वरविधानेषु प्रतिषेधस्याप्राप्त्या प्रत्ययलक्षणस्य प्रतिषेधः कृतः।''

ननु सर्वत्रैकपदस्वरस्य कर्त्तव्ये प्रत्ययलक्षणस्य प्रतिषेध आवश्यकः? इत्याशयेन पृच्छति – किमविशेषेणेति। तदुत्तरति नेत्याहेति। द्वितीयवार्तिकेन समादधाति – ''सर्वामन्त्रितसिज्लुक्स्वरवर्जम्'' अर्थात् सर्वस्वरम् आमन्त्रित-स्वरम् सिज्लुक्स्वरञ्च परित्यज्यैकपदस्वरे कर्तव्ये प्रत्ययलक्षणस्य प्रतिषेधो वक्तव्यः।

तत्र सर्वस्वरः – सर्वस्तोमः सर्वपृष्ठः। सर्वः स्तोमो यस्य सः सर्वस्तोमः। सर्वः पृष्ठः यस्य सः सर्वपृष्ठः। अत्र 'सर्वस्य सुपि' (६।१।९१) इति सर्वशब्द-स्याद्युदात्तस्वरो भवति। ततः ''बहुव्रीहौ प्रकृत्या पूर्वपदम्'' (६।२।१) इति स एवाद्युदात्तो भवति। नन्वत्र बहुव्रीहिसमासस्य पदद्वयाश्रयत्वात् एकपदाश्रत्वेन प्रथमवार्तिकोक्तनिषेधो न प्राप्नोति। तत्प्रतिषेधाय द्वितीयं वार्तिकन्नोपपन्नं भवतीति चेत्, तन्न। अत्र सर्वस्य सुपि इति विहितस्याद्युदात्तस्यैकपदाश्रयत्वमेव। सर्वस्तोमः, सर्वपृष्ठः इत्यत्र बहुव्रीहिसमासे सामासिकविभक्तेः लुकि तस्य प्रत्ययलक्षणेन सुप्त्वमादाय सर्वस्य सुपीति सूत्रेणाद्युदात्तत्वं विधीयते। तस्मादत्र प्रत्ययलक्षणस्य प्रतिषेधो न कर्त्तव्यः।

आमन्त्रितस्वरः – सर्पिरागच्छत सप्तागच्छत इत्यत्र सम्बोधने समागताया विभक्तेः ''सामन्त्रितम्'' (२।३।४८) इत्यामन्त्रितसंज्ञायाम्। तत्रोक्तोदाहरणयोः सुजस्विभक्त्योः लुकि ते प्रत्ययलक्षणेनानीय ''आमन्त्रितस्य'' (६।१।१९८)



इत्याद्युदात्तस्वरो विधीयते। सर्पिस् इत्यस्य ''आद्युदात्तश्च'' (३।१।३) इति सर्पिषः इकारस्योदात्तत्वं भवति। सप्तागच्छत इत्यत्र सप्तन्शब्दस्य घृतादित्वा-दन्तोदात्तत्वम्। अत्र यदि प्रत्ययलक्षणस्य निषेधः स्यात् तदामन्त्रितस्येति सूत्रेणा-द्युदात्तत्वं न स्यात्। अतोऽत्र प्रत्ययलक्षणस्य प्रतिषेधो न कर्त्तव्य इति।

सिज्लुक्स्वरः – मा हि दाताम् मा हि धाताम्। अत्र दाधातो धाधातोश्च लुङि (माङ्योगादडागमस्याऽभावः)। तिङतिङः (८।१।२८) इति निघात-वारणाय हि शब्दो मध्ये पठितः। तेन 'हि च' (८।१।३४) इति निषेधो भवति। तसि तस्य तामादेशे च्लौ तस्य सिजादेशे ''गातिस्थाघुपाभूभ्यः'' (२।४।७७) इति सिचो लुकि प्रत्ययलक्षणेन सिचमादाय ''आदिः सिचोऽन्य-तरस्याम्'' (६।१।१९८) इति धातोराकारस्योदात्तत्वे मा हि दाताम् मा हि धाताम् इति सिद्ध्यतः। अत्रैकपदाश्रये स्वरे कर्त्तव्ये प्रत्ययलक्षणप्रतिषेधो न भवति। द्वितीयवार्तिके सिज्लुकवर्जमिति लुकः प्रतिषेधस्य निषेधात्।

वस्तुतः ''गातिस्थेति सूत्रे सिचो ग्रहणं न कर्त्तव्यम् किन्तु च्लेरेव लुग् विधानं स्यात्'' 'मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः' (२।४।८०) इत्यत्र लेरित्यस्य पाठो नैव कार्यः। अत्र लाघवमविचार्य गातिस्थेतिसूत्रे सिज्ग्रहणेन गौरवमस्ति। तदेव सिज्ग्रहणं व्यर्थीभूय ज्ञापयति – अत्र प्रत्ययलोपे प्रत्ययलक्षणस्य निषेधो नास्ति। अतः सिज्लुक्स्वरे कर्त्तव्ये न लुमताङ्गस्येति सूत्रस्य निषेधो न कार्य इति।

**(म० भा०) ''किं प्रयोजनम्''?**

**प्रयोजनं ञिनिकिल्लुकि स्वराः॥ ३॥**

**ञिनिकित्स्वरा लुकि प्रयोजयन्ति। गर्गाः वत्साः उर्वाः। उष्ट्रग्रीवाः वामरज्जुः। 'ञ्निति' इत्याद्युदात्तत्वं माभूदिति।**

**''पथिमथोः सर्वनामस्थाने (लुकि)''॥ ४॥**

**सर्वनामस्थाने लुकि प्रयोजनम्। (लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम्) पथि प्रियः मथि प्रियः। 'पथिमथोः सर्वनामस्थाने' (६।१।१९९) इत्येष स्वरो माभूदिति।**

**"अह्नो रविधौ"॥ ५॥**

**अह्नो रविधाने लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम् अहर्ददाति अहर्भुङ्क्ते। 'रोऽसुपि' (८। २। ८९) इति प्रत्ययलक्षणेन प्रतिषेधो माभूदिति।**

**अयं भावः** – तृतीयवार्तिकोक्तानि प्रत्ययलक्षणप्रतिषेधविषयकाणि एकपदाश्रयाण्युदाहरणानि – गर्गाः वत्साः। गर्गस्य गोत्रापत्यानि बहूनीत्यर्थे "गर्गादिभ्यो यञ्" (४।१।१०५) इति यञि प्रथमाया बहुवचने जसि 'यञञोश्च' (२।४।६४) इति यञो लुकि, तस्य प्रत्ययलक्षणेन ञित्वमादाय ञ्नित्यादिर्नित्यम् (६।१।१९७) इत्याद्युदात्तत्वं तु न शङ्कनीयम्, तस्य ञ्नित्कित्स्वराः प्रयोजनमिति निषेधात्। एवं वत्साः इत्यत्रापि वत्सस्य बहूनि गोत्रापत्यानीत्यर्थे यञि तस्य बहुत्वे लुकि वत्साः इति सिद्ध्यति। अत्रापि प्रत्ययलक्षणस्य प्रतिषेधात् आद्युदात्तत्वं न भवति। बिदा उर्वाः। बिदस्य बहूनि गोत्रापत्यानि, उर्वस्य बहूनि गोत्रापत्यानीत्यर्थे "अनृष्यानन्तर्ये बिदादिभ्योऽञ्" (४। १। १०४) इत्यञि प्रातिपदिकत्वात् सुपो लुकि, जसि 'यञञोश्च' (२।४।६४) इति यञञोर्लुकि प्रत्ययलोपे प्रत्ययलक्षणमिति यञञौ स्थानिवत्त्वेनादाय "ञ्नित्यादिर्नित्यम्" (६। १।१९७) इत्याद्युदात्तत्वं प्राप्नोति। एकपदस्वरे प्रत्ययलक्षणस्य निषेधात् आद्युदात्तत्वं न भवति। किन्तु प्रातिपदिकस्वरेणान्तोदात्तत्वमेव भवति।

उष्ट्रग्रीवाः वामरज्जुः। उष्ट्रग्रीवा इव, वामरज्जुरिवेत्यर्थे "इवे प्रतिकृतौ" (५।३।९६) इति कनि तस्य "देवपथादिभ्यश्च" (५।३।१००) इति लुकि, प्रत्ययलक्षणेनात्र नित्त्वमादाय ञ्नित्यादिर्नित्यम् (६।१।१९७) इत्याद्युदात्तत्वं प्राप्नोति। एकपदस्वरे कर्तव्ये प्रत्ययलक्षणस्य निषेधात् तन्न भवति। प्रातिपदिकस्वरेणान्तोदात्तत्वमेव भवति।

अत्रयः। अत्रेर्बहूनि गोत्रापत्यानीत्यर्थे "इतश्चानिञः" इति ढकि प्रत्यये तद्धितान्तत्वेन प्रातिपदिकत्वे सुपो लुकि बहुवचने जसि "अत्रिभृगुकुत्सवसिष्ठगौतमाङ्गिरोभ्यश्च" (२। ४। ६५) इति ढक्प्रत्ययस्य लुकि प्रत्ययलक्षणेन कित्त्वमादाय कितः (६।१।६५) इत्यन्तोदात्तत्वं प्राप्नोति। एकपदस्वरे कर्तव्ये प्रत्ययलक्षणस्य निषेधात् तन्न भवति। ननु अत्रिशब्दस्य प्रातिपदिकस्वरेणान्तोदात्तत्वमेव प्राप्नोति। नैवम्। अत्रिशब्दस्याद्युदात्तत्वात्। पथिमथोः सर्वनामस्थाने प्रत्यये लुकि प्रत्ययलक्षणस्य प्रतिषेधः फलमस्ति। पथिप्रियः मथिप्रियः। पन्थाः प्रियो यस्य, मन्थाः प्रियो यस्येत्यत्र बहुब्रीहिसमासे "बहुब्रीहौ प्रकृत्या पूर्वपदम्" (६। २। १) इति पूर्वपदप्रकृतिस्वरेणान्तोदात्तौ पथिमथिशब्दौ स्तः। अत्र लुप्तां सामासिकीं सुविभक्तिं प्रत्ययलक्षणेनादाय "पथिमथोः सर्वनामस्थाने" (६। १।१९९) इत्याद्युदात्तत्वं प्राप्नोति। तत्रैकपदस्वरे कर्त्तव्ये प्रत्ययलक्षणस्य प्रतिषेध आद्युदात्तत्वं न प्राप्नोति।



अह्नोरविधौ प्रत्ययलक्षणप्रतिषेधस्य फलम् – अहर्ददाति अहर्भुङ्क्ते। अत्राहन्शब्दात् 'रोऽसुपि' (८। २। ६९) इति नकारस्य रत्वे कर्तव्ये लुप्तायाः सुविभक्तेः प्रत्ययलक्षणेन सुप्त्वात् असुपीति निषेधः प्राप्नोति। 'अहन्' (८। २। ६८) इति रुत्वेऽनिष्टं रूपं प्राप्नोति। तद्वारणाय प्रत्ययलक्षणस्यात्र प्रतिषेधो वक्तव्यः। तेनात्र रत्वमेव भवति।

**टिप्पणी** – रोऽसुपीत्यत्रासुपि पदे प्रसज्यप्रतिषेध आश्रीयते न तु पर्युदासः। प्रसज्यप्रतिषेधपक्षेऽयमर्थो भविष्यति – अहन्शब्दस्य नकारस्य सुपि परतो रत्वं न भवतीति। पर्युदासपक्षे – अहन्शब्दस्य नकारस्य सुब्भिन्ने परतो रत्वं भवतीति।

पर्युदासपक्षस्वीकारेऽयं दोषोऽस्ति यत्, दीर्घाणि अहानि यस्मिन् स दीर्घाहोनिदाघः। रोऽसुपीतिसूत्रस्य पदाधिकारे पठितत्वात् तदन्तविधौ सति दीर्घाहन्शब्दस्यापि रत्वरुत्वयोः प्राप्तिरस्ति। अत्र सामासिकीं विभक्तिमाश्रित्य सुप्त्वं तु नानेतुं शक्यम्, अहन्नकारस्य रत्वे रुत्वे च कर्तव्ये उत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणस्य प्रतिषेधात्। दीर्घाहन्शब्दात् पुंल्लिङ्गात् सौ तस्य हल्ङ्यादिना लोपे प्रत्ययलक्षणेन सुप्त्वमादाय रोऽसुपीति रत्वनिधानस्य सुप्परे प्रतिषेधात् 'अहन्' (८।२।६८) इति नकारस्य रुत्वे यत्वे लोपे रुत्वस्यासिद्धत्वाद् "सर्वनामस्थाने चाऽसम्बुद्धौ" (६।४।८) इत्युपधादीर्घे दीर्घाहोनिदाघ इति सिद्ध्यति प्रसज्यप्रतिषेधपक्षे। पर्युदासपक्षे दोषः – सुब्भिन्ने परे अहन्नकारस्य रेफो भवतीत्यर्थे सति सुब्भिन्ने निदाघे सति दीर्घाहन्शब्दस्य नकारस्य रत्वं प्राप्नोति। तेन दीर्घाहनिदाघः इत्यनिष्टं रूपं प्राप्नोति। अत्र प्रत्ययत्वेन सादृश्यं न ग्रहीतुं शक्यते। अहर्ददा-

तीत्यत्र रत्वस्य प्राप्तिर्न स्यादिति। अत्र प्रत्ययलक्षणस्यैकपदस्वरेकर्त्तव्ये "अह्नो रविधाविति प्रतिषेधात् रोऽसुपीति रत्वं भवति।"

**( म० भा० ) "उत्तरपदत्वे चापदादिविधौ" ॥ ६ ॥**

**उत्तरपदत्वे चापदादिविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम्। परमवाचा परमवाचे, परमगोदुहा परमगोदुहे, परमश्वलिहा परमश्वलिहे। "पदस्य" ( ८। १। १६ ) इति प्रत्ययलक्षणेन कुत्वादीनि माभूवन्निति। अपदादिविधाविति किमर्थम्? दधिसेचौ दधिसेचः – "सात्पदाद्योः" ( ८। ३। १११ ) इति प्रतिषेधो यथा स्यात्। यद्यपदादि-विधावित्युच्यत उत्तरपदाधिकारो न प्रकल्पेत। तत्र को दोषः? "कर्णो वर्णलक्षणात्" ( ६। २। ११२ ) इत्येवमादिविधिर्न सिद्ध्यति।**

**अयं भावः –** उत्तरपदत्वे कर्त्तव्ये प्रत्ययलक्षणं न भवतीति वक्तव्यम् पदादिविधिं वर्जयित्वेत्यर्थः। तथाहि – परमवाचा परमवाचे, परमगोदुहा परमगोदुहे, परमश्वलिहा परमश्वलिहे। अत्र परमा चासौ वाक् इति परमवाक् तया परमवाचा, तस्यै परमवाचे, इत्युक्तप्रयोगयोः कर्मधारयसमासं विधाय प्रत्ययलक्षणे-नान्तर्वतिनीं विभक्तिमादाय सुप्तिङन्तं पदमितिपदसंज्ञां सम्पाद्य 'चोकुः' (८। २। ३०) इति कुत्वं प्राप्नोति। अत्रोत्तरपदत्वे कर्तव्ये प्रत्ययलक्षणस्य प्रतिषेधो वक्तव्यः। तस्मादत्र कुत्वं न भवति। एवं परमगोदुहा परमगोदुहे इत्यत्रापि कर्मधारय-समासं विधाय प्रत्ययलक्षणेन पदत्वम् विधाय दादेर्धातोर्घः (८। २। ३०) इति घत्वं प्राप्नोति। तत्रोत्तरपदत्वे कर्त्तव्ये प्रत्ययलक्षणस्य निषेधो कर्तव्यः। पदत्वाभावेऽत्र घत्वं न भवति। एवं परमश्वलिहा परमश्वलिहे अत्रापि प्रत्ययलक्षणस्य निषेधात् पदत्वाभावे "हो ढः" (८। ३। ३१) इति ढत्वं न भवति। तत्रापदादि-विधावित्यस्य प्रयोजनम् – दधिसेचौ दधिसेचः। अत्र दध्नः सैचौ, दध्नः सेचः इति षष्ठीतत्पुरुषसमासे तत्र पदादिविधौ प्रत्ययलक्षणस्य निषेधाभावे प्रत्ययलक्षणेन लुप्तामन्तर्वर्तिनीं विभक्तिमादाय पदत्वे जाते 'सात्पदाद्योः' (८। ३। १११) इति 'आदेशप्रत्यययोः' (८। ३। ५९) इति प्राप्तस्य षत्वस्य निषेधो भवति। यदि दधि सिञ्चत इत्यर्थे "अन्येभ्योऽपि दृश्यते" (३। ३। १३०) इति विचि प्रत्यये सर्वापहारिलोपे उपपदसमासे गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्प-



त्तेरिति परिभाषया सामासिक्या विभक्तेः प्रागेव समासे विभक्त्यभावे पदत्वाभवात् सात्पदाद्योरिति षत्वनिषेधो न स्यात्। तेन दधिषेचौ इति प्रयोगः प्राप्नोति। अस्य प्रयोगस्यानभिधानात्, "सोपपदाद् विच्प्रत्ययस्याऽभावाद् दधिषेचावित्यादि-प्रयोगाभावादिति" कैयटः। यदि पदादिविधिं परित्यज्य प्रत्ययलक्षणस्य प्रतिषेधः क्रियते तर्हि "उत्तरपदादिः" (६। २। १११) इत्यधिकारे विहिता उत्तरपदस्याद्यु-दात्तस्वराः न स्युः। यथा – 'कर्णो वर्णलक्षणात्' (६। २। ११२) इति वर्ण-वाचिनो लक्षणवाचिनश्च परस्य कर्णशब्दस्याद्युदात्तत्वं न स्यात्।

**( म० भा० ) "यदि पुनर्नलोपादिविधौ प्लुत्यन्ते लुमता लुप्ते प्रत्यय-लक्षणं न भवतीत्युच्येत। नैवं शक्यम्। राजकुमार्यौ राजकुमार्यः इति शाकलं प्रसज्येत। नैष दोषः।" यदेतत् सिति शाकलं नेति। एतत् प्रत्यये-शाकलं नेति वक्ष्यामि। यदि मन्यते शाकलं नेत्युच्यते, दधि अधुना। मधु अधुना। अत्रापि प्राप्नोति प्रत्यये शाकलं न भवति, कतरस्मिन्, यस्माद् यः प्रत्ययो विहित इति। इह तर्हि परमदिवा परमदिवे "दिव उत्" ( ६। १। १३१ ) इत्युत्वं प्राप्नोति।**

**अयं भावः –** 'अपदादिविधौ' अर्थात् पदादिविधिं परित्यज्योत्तरपदत्वे कर्तव्ये प्रत्ययलक्षणं न भवतीत्युच्यते तर्हि कर्णो वर्णलक्षणात् इत्युत्तरपदादिरि-त्यधिकारे विधीयमानानि कार्याणि आद्युदात्तादीनि न स्युरित्यस्य समाधानं वदति – "यदि पुनर्नलोपादी"ति। अर्थात् "नलोपः प्रातिपदिकान्तस्य" (८। २। ७) इति सूत्रादारभ्य "वाक्यस्य टेः प्लुतः" (८। २। ८२) इति सूत्रं यावत्। लुमता लुप्ते प्रत्ययलक्षणं न प्रवर्तत इति तर्हि किं स्यात्? उत्तरति – तन्न वक्तुं शक्यते। यतो हि राजकुमार्यौ राजकुमार्यः। अत्र "इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च" (६। १। १२७) इति प्रकृतिभावो ह्रस्वश्च प्राप्नुयात्। अत्र प्रत्ययलक्षणे-नान्तर्वर्तिनीं विभक्तिमाश्रित्य कुमारीशब्दस्य पदत्वमस्ति। नास्ति दोषोऽत्र। इकोऽ-सवर्णे शाकल्यस्येति सूत्रे सिति शाकलं नेति वचनं पठितम्, तत्रैव प्रत्यये शाकलं नेति पठिष्यामः। तत्रायमर्थो भविष्यति न केवलं सिति प्रत्यये परे प्रकृतिभावस्य निषेधो भवत्यपितु प्रत्ययमात्रे परे प्रकृतिभावस्य निषेधो भवतीति। अतो राजकुमार्यौ राजकुमार्यः इत्यत्र औजस्प्रत्यययोः परतः प्रकृतिभावस्य निषेधे सति यण् भविष्यति।

ननु प्रत्यये शाकलं नेत्युच्यमाने दधि अधुना मधु अधुना। अत्रापि अधुनेति प्रत्ययस्य सत्त्वात् शाकलं प्रवर्तेत इति वक्तुं न शक्यम्। शाकलं कस्मिन् प्रत्यये परे न भवति, यस्मात् यः प्रत्ययो विहित इति। दधिशब्दात् मधुशब्दाच्च अधुना प्रत्ययो न विहितः। अतोऽत्र प्रकृतिभावो न प्रवर्तते। तर्हि परमदिवा परमदिवे इत्यत्र परमा चासौ द्यौरिति कर्मधारयसमासे लुप्तां विभक्तिं प्रत्ययलक्षणेनादाय पदसंज्ञायां "दिव उत्" (६।१।१३१) इत्युत्वं प्राप्नोति। तत्र 'नलोपादिविधिभिः बहिर्भूतत्वादुत्वविधायकस्य सूत्रस्य।

**(म० भा०) अस्तु तर्ह्यविशेषेण। ननु चोक्तम् – उत्तरपदाधिकारो न प्रकल्पेतेति। वचनादुत्तरपदाधिकारो भविष्यति। तत् तर्हि वक्तव्यम्? न वक्तव्यम्। अनुवृत्तिः करिष्यते। इदमस्ति "यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्" (१।४।१३) "सुप्तिङन्तम् पदम्" (१।४।१४) यस्मात् सुप्तिङ्विधिस्तदादि सुबन्तं च। 'नः क्ये' (१।४।१५) नान्तं क्ये पदसंज्ञं भवति, "यस्मात् क्यविधिस्तदादि सुबन्तं च। "सिति च" (१।४।१६) सिति च पूर्वं पदसंज्ञं भवति, यस्मात् सिद्विधिस्तदादि सुबन्तं च। "स्वादिष्वसर्वनामस्थाने" (१।४।१७) स्वादिष्वसर्वनामस्थाने पूर्वं पदसंज्ञं भवति, यस्मात् स्वादिविधिस्तदादि सुबन्तं च। "यचि भम्" (१।४।१८) यजादिप्रत्यये पूर्वं भं भवति। यस्माद्यजादिविधिस्तदादि सुबन्तं च।"**

**अयं भावः –** "नलोपादिविधौ प्लुत्यन्ते" इति वचनेन परमदिवा परमदिवे इत्यत्रोत्वविधेर्बहिर्भूतत्वे नोत्वप्राप्तिरूपो दोष आपतति। अतो न लोपादिविधौ प्लुत्यन्ते इति वचनं न कार्यम्, किन्तूत्तरपदत्वे चापदादिविधावित्येव पठनीयम्। ननु "उत्तरपदे चापदादिविधावितिवचनस्वीकारे उत्तरपदादिः" (६।२।१११) इत्यधिकारे पठितानां विधीनां "कर्णो वर्णलक्षणादीनां वैयर्थ्यं भवति?" उत्तरपदाधिकारसामर्थ्यात् ते सेत्स्यन्ति। तर्ह्युत्तरपदत्वेति वचनं कर्त्तव्यम्? न कर्त्तव्यम्। उपायान्तरेण परमवाचा परमवाचे इत्यत्र कुत्वं न भविष्यति। तथा हि – 'यचि भम्' (१।४।१८) इति सूत्रे "यस्मात् प्रत्यविधिस्तदादि प्रत्ययेऽङ्गम्" (१।४।१३) इति सूत्रात् तदादिपदस्यानुवृत्तिः करिष्यते। परमा चासौ वाक्



इति परमवाक् तया परमवाचा, तस्यै परमवाचे। अत्र (परम सु वाच् सु) कुत्ववारणाय समासत्वेन सुपो लुकि प्रत्ययलक्षणेन सुपमादाय 'यचि भम्' इत्यत्र तदादिपदस्य सुबन्तस्य चानुवृत्तिं विधायायमर्थो भवति – यजादिप्रत्यये पूर्वं भं भवति, यस्माद् यजादिविधिस्तदादि सुबन्तं चेति। तत्र परमवाच् इत्यत्राजादिप्रत्ययमादाय पूर्वस्य परम वाच् इत्यस्य भं संज्ञा भवति। परमवाच् शब्दान्तरं प्रत्ययलक्षणेन नीतस्य सु इत्यस्यापि भसंज्ञा भवति तदादिपदस्य महिम्ना। तत्पदेन टा विभक्तिर्यस्माद् विहिता सा प्रकृतिर्गृह्यते तत् = सा आदिर्यस्य सः प्रत्ययः। सुबन्तपदेन प्रकृतिप्रत्ययरूपं सुबन्तम्। अर्थात् अजादिप्रत्यये परे प्रकृते प्रकृतिप्रत्यययोर्मध्ये सु इत्यस्यापि भसंज्ञा भवति। तेन भत्वात् पदसंज्ञा न भवति। अतः परमवाच आ इत्यत्र कुत्वं न प्राप्नोति। अनुवृत्तिश्च यथाक्रमेण पठितेषु सूत्रेषु – "यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्" (१।४।११३) इत्यत उत्तरसूत्रे 'सुप्तिङन्तं पदम्' (१।४।१४) इत्यत्र यस्मात् प्रत्ययविधिस्तदादिप्रत्यये इत्यनुवर्तते। अर्थश्चेत्थम् – यस्मात् सुप्तिङ्विधिस्तदादि तदन्तं च प्रत्यये पदसंज्ञं स्यादिति। अत्र सुप्प्रत्यये परतः ततः पूर्वं कश्चन प्रत्ययजातीयको नास्ति यस्य तदादिपदेन व्यवहारो भवेत्। अत एवात्र प्रकृतेरेव तदादित्वव्यवहारो "व्यवदेशिवदेकस्मिन्" इति परिभाषया कर्तव्यः। तथैव "नः क्ये" (१।४।११४) इत्यत्रापि पूर्ववदनुवर्तनीयानि पदान्यनुवर्त्यार्थश्चेत्थं करणीयः – नान्तं क्ये प्रत्यये पदसंज्ञं स्यात्, यस्मात् क्यविधिस्तदादि सुबन्तञ्चेति। तथैव 'सिति' (१।४।११६) इत्यत्रापि सिति प्रत्यये पूर्वं पदसंज्ञं भवति, यस्मात् सिद्विधिस्तदादि सुबन्तं चेति। एवं 'स्वादिष्वसर्वनामस्थाने' (१।४।११७) इत्यत्रापि – असर्वनामस्थाने स्वादिषु प्रत्ययेषु पूर्वं पदसंज्ञं भवति, यस्मात् स्वादिप्रत्ययविधिस्तदादि तदन्तं चेति। एवं चोत्तरसूत्रे "यचि भम्" इत्यत्रापि यजादिप्रत्यये पूर्वं भं संज्ञं भवति, यस्माद्यजादिविधिस्तदादि सुबन्तं चेत्यर्थः सम्पद्यते। ईदृशोपायेन परमवाचा परमवाचे इत्यत्र कुत्वं न भवति। उत्तरपदत्वे चापदादिविधाविति वचनं न कार्यम्।

**(म० भा०) "इह तर्हि परमवाक्।" 'असर्वनामस्थाने' इति प्रतिषेधः प्राप्नोति। अस्तु तस्याः प्रतिषेधः – या स्वादौ पदमिति पदसंज्ञा या तु सुबन्तं पदमिति पदसंज्ञा भविष्यतीति। लुप्त इदानीं प्रत्यये यावत**

**एवावधेः स्वादौ पदमिति-पदसंज्ञा, तावत एवावधेः सुबन्तं पदमिति। अस्ति च प्रत्ययलक्षणेन सर्वनामस्थानपरत इति कृत्वा ''प्रतिषेधाश्च बलीयांसो भवन्तीति प्रतिषेधः प्राप्नोति।''**

**नाऽप्रतिषेधात्। नायं प्रसज्यप्रतिषेधः सर्वनामस्थाने नेति। किं तर्हि? पर्युदासोऽयम् – यदन्यत्सर्वनामस्थानादिति। सर्वनामस्थानेऽव्यापारः। यदि केनचित् प्राप्नोति तेन भविष्यति। पूर्वेण च प्राप्नोति।**

**अयं भावः –** उत्तरपदत्वे चापदादिविधाविति परिभाषां विनैव परमवाचा परमवाचे इत्यत्र कुत्वाभावेऽपि परमवाक् इत्यत्र प्रत्ययलक्षणेन सुपमादाय 'स्वादिष्वसर्वनामस्थाने' इति सर्वनामस्थाने परतः पदसंज्ञा न स्यात् सुबन्तस्य। भवतु निषेधः 'स्वादिष्वसर्वनामस्थाने' इति सूत्रेण या पदसंज्ञा भवति। परमवाच् सु इत्यत्र सुप्तिङन्तं पदमिति सूत्रेण पदसंज्ञा भविष्यति। ननु सुप्रत्ययस्य विद्यमानतायामनेन सूत्रेण पदसंज्ञा भविष्यति, अनेन सूत्रेण न भविष्यतीति वक्तुं शक्यते, लुप्ते प्रत्यये तु द्वयोः संज्ञयोः समानावधिकत्वम्। प्रत्ययलोपे प्रत्ययलक्षणमिति सुप्रत्ययमादाय सर्वनामस्थाने परत इति पदसंज्ञा न स्यादिति प्रसज्यप्रतिषेधपक्षे परमवाच् इत्यस्य पदसंज्ञा न स्यादिति। एकत्रविधौ निषेधे च प्राप्ते ''निषेधाश्च बलीयांसः'' इति न्यायेन निषेधः स्यात्। अत्र प्रसज्यप्रतिषेधो नास्ति। किन्तु पर्युदासोऽस्ति। अर्थात् सर्वनामस्थानभिन्नस्य पदसंज्ञा न स्यादित्यर्थस्वीकारेण निषेधस्य सर्वनामस्थाने व्यापारो न भविष्यति। यदि केनचित् सूत्रेण परमवाच् सु इत्यत्र प्राप्नोति तेन भविष्यति। अत्र सुप्तिङन्तम् पदमिति सूत्रेण पदसंज्ञा प्राप्नोति, सा भविष्यति।

**( म० भा० ) ''अप्राप्तेर्वा। अथवा– अनन्तरा या प्राप्तिः सा प्रतिषिध्यते। कुत एतत्? अनन्तरस्य विधिर्भवति प्रतिषेधो वेति। पूर्वा प्राप्तिरप्रतिसिद्धा तया भविष्यति। ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते। नोत्सहते प्रतिषिद्धा सती बाधितुम्। यद्येवं परमवाचौ परमवाच इति। 'सुप्तिङन्तं पदमिति' पदसंज्ञा प्राप्नोति। एवं तर्हि योगविभागः करिष्यते – स्वादिषु पूर्वं पदसंज्ञं भवति। ततः सर्वनामस्थाने अयचि पूर्वं पदसंज्ञं भवति। ततो भं भसंज्ञं भवति, यजादावसर्वनामस्थान इति।''**



**अयं भावः –** प्रसज्यप्रतिषेधपक्षेऽपि स्वादिष्वसर्वनामस्थाने इति सूत्रेण जायमानायाः पदसंज्ञाया निषेधो भविष्यति न तु सुप्तिङन्तं पदमिति सूत्रेण जायमानायाः पदसंज्ञायाः। अत्र निषेधस्य प्राप्तिर्नास्ति। अत एवाप्राप्तेवेत्युक्तं वार्तिके। अत्रैष न्यायः प्रवर्तते – अनन्तरस्य विधिर्भवति प्रतिषेधो वेति। अर्थात् असर्वनामस्थाने इति निषेधस्य विषये 'स्वादिषु' इति जायमाना पदसंज्ञैवास्ति, आनन्तर्यात्। तस्यैव विधिर्भवति प्रतिषेधो वेति। सुप्तिङन्तं पदमिति सूत्रेण जायमानायाः पदसंज्ञाया निषेधादानन्तर्याभावात्। अतः परमवाक् इत्यत्र कुत्वं भविष्यति। ननु स्वादिष्विति सूत्रेण सुप्तिङन्तमिति पदसंज्ञाया बाधः स्यादिति न वाच्यम्। यतो ह्यसर्वनामस्थाने इत्यनेन स्वादिष्विति पदसंज्ञया प्रतिषिद्धा = बाधिता सती कथं पूर्वां पदसंज्ञां बाधितुमुत्सहेत।

ननु यदि स्वादिष्विति पदसंज्ञाया एवासर्वनामस्थाने इति निषेधः बाधको भवति न तु सुप्तिङन्तमिति पदसंज्ञायाः, तर्हि परमवाक् इत्यत्र कुत्वं सिद्ध्यति। तच्चेष्टम्। परन्तु परमवाचौ परमवाचः इत्यत्र सुप्तिङन्तमिति पदसंज्ञायां कुत्वं प्राप्नोति। अत एवोपायान्तरं निर्दिशन्ति भाष्यकृतः – ''एवं तर्हि योगविभागः करिष्यत'' इति। तथाहि – 'स्वादिष्वसर्वनामस्थाने' इति सूत्रे स्वादिष्विति एतावदेकसूत्रं भविष्यति। अस्यार्थो भविष्यति – स्वादिषु प्रत्ययेषु परतः पूर्वस्य पदसंज्ञा भवतीति। ततोऽसर्वनामस्थाने इत्यस्याकारं यचि भमिति सूत्रस्य यचीत्यस्य यकारात्पूर्वं सम्मेल्य 'सर्वनामस्थाने अयचि' इति सूत्रं करिष्यते। अस्यार्थो भविष्यति – ''याद्यजादिभिन्नसर्वनामस्थाने परतः पूर्वस्य पदसंज्ञा भवति।'' इति। ततो ''भम् भसंज्ञकं भवति यजादावसर्वनामस्थान इति।'' एतन्न्यासेन परमवाचौ परमवाचः इत्यत्र पदसंज्ञा न भविष्यति यकाराद्यजादिभिन्नत्वाभावात्। परमवाक् इत्यत्र तु यकाराद्यजादिभिन्नत्वात् पदसंज्ञायां सत्यां कुत्वं सेत्स्यतीति न कश्चिद्दोषः।

**( म० भा० ) ''यदि तर्हि सावपि पदं भवति। एचः प्लुतविकारे पदान्तग्रहणं चोदयिष्यति। इह माभूत् भद्रं करोषि गौरिति। तस्मिन् क्रियमाणेऽपि प्राप्नोति। वाक्यपदयोरन्त्यस्येत्येवं तत्।''**

**इह तर्हि दधिसेचः ''सात्पदाद्योरिति षत्वप्रतिषेधो न प्राप्नोति। मा भूदेवं पदस्यादिः पदादिः पदादेर्नेति। कथं तर्हि? पदादादिः पदादिः पदादेर्नेत्येवं भविष्यति।'' नैवं शक्यम्। इहापि प्रसज्येत। ऋक्षु वाक्षु कुमारीष्विति। सात्प्रतिषेधो ज्ञापकः स्वादिषु पदत्वेन येषां पदसंज्ञा, न तेभ्यः प्रतिषेधो भविष्यतीति। इह तर्हि – बहुसेचौ बहुसेचः। बहुजयं प्रत्ययः। तत्र पदादादिः पदादिः पदादेर्नेत्युच्यमानेऽपि न सिद्ध्यति। एवं तर्हि – उत्तरपदत्वे च पदादिविधौ ''लुमता लुप्ते प्रत्ययलक्षणं भवती''ति वक्ष्यामि। तन्नियमार्थं भविष्यति। पदादिविधावेव न तु पदान्तविधाविति। कथं बहुसेचौ बहुसेचः? बहुच्पूर्वस्य च पदादिविधावेव न पदान्तविधाविति।**

**अयं भावः** – योगविभागमनुसृत्य सौ सर्वनामस्थाने पूर्वं पदसंज्ञकं भवतीति स्वीकारे भद्रं करोषि गौः इत्यत्र ''एचोऽप्रगृह्यस्याऽदूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ'' (८।२।१०७) इति प्लुतविकाराकारोकारौ प्राप्नुतः। तद्वारणायास्मिन्नेव सूत्रस्थभाष्ये ''एचः प्लुतविकारे पदान्तग्रहणमि''ति वार्तिकमुक्तम्। यतः भद्रं करोषि गौरित्यत्र गोशब्दस्थौकारस्य पदान्तत्वाभावात् प्लुतविकारो न भवति। इदानीं पदान्तग्रहणे कृतेऽपि प्लुतविकारः प्राप्नोति। यतो हि योगविभागानुसारेण गौरित्यत्र सौ परे पदत्वात् प्लुतविकारः प्राप्नोति। तर्हि वाक्यपदयोरन्त्यस्य पदमत्र विवक्षितम्। अत्रौकारान्तरम् विसर्गः। विसर्गान्तस्य पदत्वं नास्ति। किन्तु विसर्गात् पूर्वस्यौकारान्तस्य पदत्वम्। ननूत्तरपदत्वे चापदादिविधाविति वार्तिकस्याभावे दधिसेचौ इत्यत्र सात्पदाद्योरिति पदादिनिमित्तकः षत्वप्रतिषेधो न प्राप्नोति। तर्हि सात्पदाद्योरित्यत्र पदादिपदस्य षष्ठीतत्पुरुषसमासो बोद्धव्यः पदस्यादिः पदादिः पदादेर्नेति। किन्तु पदादादिः पदादिः तस्मात् पदादेः न षत्वं स्यादित्यर्थः करणीयः। ननु पञ्चमीतत्पुरुषसमासे कृते ऋक्षु वाक्षु कुमारीषु किशोरीषु इत्येतेषु प्रयोगेषु ऋच् सु वाच् सु कुमारी सु किशोरी सु इत्यवस्थायां सप्तम्या बहुवचने स्वादिष्विति पदत्वात् ऋच्वाच्कुमारीकिशोरीशब्दानां पदत्वेन प्राप्तस्य षत्वस्य निषेधः स्यात्। ननु सादिति सूत्रे न पठनीयं पदादेरित्येव सूत्रं स्यात्। पदादेरित्यत्र पञ्चमीतत्पुरुषे कृतेऽग्निसात् इत्यत्रानेनैव षत्वनिषेधसिद्धे पुनः सात्ग्रहणं व्यर्थं तदेव व्यर्थीभूय ज्ञापयति – यत्र स्वादिष्विति पदसंज्ञा भवति, तत्र पदादेरिति निषेधो न प्रवर्तते। तस्मात् सादिति ग्रहणं सार्थकं भवति।



ननु सेच् शब्दात् ''विभाषा सुपो बहुच् पुरस्तात्तु'' (५।२।६८) इति सूत्रेणेषदसमाप्तौ सेचावित्यर्थे प्रातिपदिकात् पूर्वं बहुचि प्रत्ययो भवति न पदमस्ति। पदादादिरिति पञ्चमीतत्पुरुषसमासेऽपि षत्वनिषेधो न प्राप्नोति। एवं तर्हि – उत्तरपदत्वे च पदादिविधौ प्रत्ययलक्षणं भवतीति वक्ष्यते। तन्नियमार्थं भविष्यति। उत्तरपदस्य पदत्वे कर्तव्ये पदादिविधावेव लुमता शब्देन लुप्तस्य प्रत्ययस्य प्रत्ययलक्षणं भवतीति। एतादृशेन नियमेन परमवाचा परमवाचे इत्यादिषु पदान्तविधौ कर्त्तव्ये प्रत्ययलक्षणं न भविष्यति। तेन कुत्वादिविधीनां प्राप्तिर्न भविष्यतीति। दधिसेचौ दधिसेचः इत्यादिषु पदादिविधौ प्रत्ययलक्षणं भविष्यति। तेन षत्वनिषेधो भविष्यति।

ननु बहुसेचौ बहुसेचः इत्यत्र समासाभावान्नोत्तरपदम् नापि पूर्वपदम्। अतः सात्पदाद्योरिति निषेधो न प्राप्नोति। अत्रापि बहुच्प्रत्ययपूर्वके पदादिविधौ कर्तव्ये एव लुमता शब्देन लुप्तस्य प्रत्ययस्य प्रत्ययलक्षणं भवतीति वदिष्यामः। तत्र षत्वनिषेधो भविष्यति। बहुवाचा बहुवाचे इत्यत्र कुत्वं न भविष्यति।

**( म० भा० ) ''द्वन्द्वेऽन्त्यस्य''॥ ७॥**

**द्वन्द्वेऽन्त्यस्य लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम्। वाक्स्रक्त्वचम्। इहाभूवन्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति।**

**''सिचि जुसोऽप्रसङ्ग आकारप्रकरणात्''॥ ८॥**

**सिचि सिज्निमित्तस्य जुसोऽप्रसङ्गः। किं कारणम्? आकारप्रकरणात्। 'आतः' (३।४।११०) इत्येतन्नियमार्थं भविष्यति। आत एव सिज्लुगन्तान्नान्यस्मात् सिज्लुगन्तादिति।**

**अयं भावः** – द्वन्द्वसमासेऽनेकपदानां सम्भवेऽन्त्यस्यैव लुमताशब्देन प्रत्ययस्य लुप्तस्य प्रत्ययलक्षणं न भवतीतिवक्तव्यम्। तेन वाक्स्रक्त्वचम्। (वाक् च स्रक् च त्वक् चेत्येषां समाहारः इति वाक्स्रक्त्वचम्) इत्यत्रान्त्यस्यैव प्रत्ययलक्षणनिषेधो भवति। अतोऽन्त्यपदे कुत्वाभावः। कैयटमतेतूत्तरपदस्य मुख्यवृत्तिरन्तिमे पद एव भवति। पूर्वपदापेक्षया मध्यमपदस्योत्तरपदत्वं नास्ति। अत उत्तरपदत्वे चापदादिविधाविति वचनसत्त्वे तत्प्रत्याख्यानपक्षे चोत्तरपदत्वे पदादिवि-

धाविति वचनेन वा द्वन्द्वाऽन्त्यस्य पदस्य प्रत्ययलक्षणस्य निषेधः सेत्स्यति। द्वन्द्वेऽन्त्यस्येति वचनस्यावश्यकता नास्ति। पूर्वमध्यमपदयोस्तु प्रत्ययलक्षणेन सुपमादाय पदत्वे कुत्वं भवति।

ननु अभूवन् इत्यत्र भूधातोः लुङि अटि झिप्रत्यये च्लौ तस्य सिजादेशे "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" (२।४।७७) इति सिचो लुकि अत्र प्रत्ययलोपे प्रत्ययलक्षणमिति लुप्तं सिचमादाय 'सिजभ्यस्तविदिभ्यश्च' (३।४।१०९) इति झेर्जुस्भावः प्राप्नोति। अभूवन् इत्यत्र जुस्भावो न प्राप्नोति, यतो हि सिजन्तेभ्यो धातुभ्यः सिजभ्यस्तविदिभ्यश्चेति सूत्रेणैवादुः अद्युरित्यादिषु जुसादेशे सिद्धे 'आतः' (३।४।११०) इति व्यर्थम्, तदेव व्यर्थीभूय ज्ञापयति – यदि सिज्लुगन्तेभ्यो धातुभ्यः झेर्जुसादेशः स्यात् तर्हि आदन्तधातुभ्य एवेति नियमेन अभूवन्नित्यत्र जुसादेशो न प्राप्नोति। भूधातोराकारान्तत्वाभावात्।

**(म० भा०) इह – इति युस्मत्पुत्रो ददाति। इत्यस्मत्पुत्रोददाति इत्यत्र प्रत्ययलक्षणेन "षष्ठीचतुर्थीद्वितीयास्थयोर्वा नावौ" (८।१।२०) इति वान्नावादय आदेशाः प्राप्नुवन्ति। "युस्मदस्मदोः स्थग्रहणात्"॥ ९॥**

**स्थग्रहणं तत्र क्रियते, तच्छ्रूयमाणविभक्तिविशेषणं विज्ञास्यते। अस्त्यन्यत् स्थग्रहणस्य प्रयोजनम्। किम्? सविभक्तिकस्य वान्नावादयो यथा स्युरिति। नैतदस्तिप्रयोजनम्। 'पदस्य' (८।१।१६) इति वर्तते। विभक्त्यन्तं च पदम्, तत्रान्तरेणापि स्थग्रहणं सविभक्तिकस्यैव भविष्यति। भवेत्तद्धि यत्र विभक्त्यन्तं पदम्, यत्र तु खलु विभक्तौ पदं तत्र न सिद्ध्यति ग्रामो वां दीयते, ग्रामो नौ दीयते। जनपदो वां दीयते, जनपदो नौ दीयते। सर्वग्रहणमपि प्रकृतमनुवर्तते। तेन सविभक्तिकस्यैव भविष्यति।**

**अयं भावः** – इति युस्मत्पुत्रः (युवयोः पुत्रः इत्यर्थके) इत्यस्मत्पुत्रः (आवयोः पुत्रः अस्माकं पुत्रः इत्यर्थके) इत्यत्र "षष्ठीचतुर्थीद्वितीयास्थयोवां नावौ" (८।१।२०) बहुवचनस्य वस्नसौ (८।१।२१) तेमयावेकवचनस्य (८।१।२२) वांनौ, वस्नसौ, ते मे इत्येते आदेशा लुप्तासु विभक्तिषु प्रत्ययलक्षणेन प्राप्नुवन्ति। वांनावादय आदेशाः पदात् (८।१।१६) इत्यधिकारे युस्मदस्मदोः विहिताः तस्मात् वाक्यात् पूर्वमितिशब्दः प्रयुक्तः। इति युस्मत्पुत्रः इत्य-



स्मत्पुत्र इत्यत्र वांनावादय आदेशा न प्राप्नुवन्ति। युस्मदस्मदोः स्थग्रहणात्। यतो हि षष्ठीचतुर्थीद्वितीयास्थयोरित्यत्र स्थशब्दस्य ग्रहणं भगवान् पाणिनिः करोति। स च (स्थशब्दश्च) श्रूयमाणविभक्तेर्विशेषणं भवति। तेन प्रत्ययलक्षणेन विभक्तिमादायोक्तप्रयोगयोः वांनावादयः न प्राप्नुवन्ति। नन्वस्त्यन्यत् प्रयोजनं स्थग्रहणस्येति चेन्न, तत्र पदस्य (८।१।१६) इत्यधिकारोऽस्ति। विभक्त्यन्तं च पदं भवति। अतः स्थग्रहणं विनैव सविभक्तिकस्यादेशा भविष्यन्ति। भवतु नाम यत्र सविभक्त्यन्तं पदं तत्र सिद्धं भविष्यति। यत्र तु विभक्तौ पदं भवति तत्र न सिद्ध्यति। यथा वां दीयते। एतेषु प्रयोगेषु। युवाभ्याम् आवाभ्यामित्यत्र प्रकृतिभागस्य स्वादिष्विति पदत्वात् युस्मदस्मदोरेव 'वां नौ' इत्यादेशौ प्राप्नुतः। नैवं वक्तुं शक्यम्। यतो हि "अनुदात्तं सर्वमपादादौ" (८।१।१८) इत्यतः "षष्ठीचतुर्थीति सूत्रे सर्वशब्दस्यानुवृत्तिरायाति। तेन सविभक्तिकयोरेवादेशौ (वां नौ)" भविष्यतः।

**(म० भा०) "इह – चक्षुष्कामं याजयांचकारेति तिङ्ङतिङः" (८।१।२८) इति तस्य च निघातस्तस्माच्चानिघातः प्राप्नोति।**

**"आमि लिलोपात्तस्य चानिघातस्तस्माच्च निघातः"॥ १०॥**

**आमि लिलोपात्तस्य चाऽनिघातस्तस्माच्च निघातः सिद्धो भविष्यति।**

**"अङ्गाधिकार इटो विधिप्रतिषेधौ"॥ ११॥**

**अङ्गाधिकार इटो विधिप्रतिषेधौ न सिद्ध्यतः। जिगमिष संविवृत्स। अङ्गस्येतीटो विधिप्रतिषेधौ न प्राप्नुतः।**

**"क्रमेर्दीर्घत्वं च"॥ १२॥**

**किञ्च? इटश्च विधिप्रतिषेधौ। नेत्याह। आदेशेऽयं चः पठितः। क्रमेश्च दीर्घत्वम्। उत्क्राम संक्रामेति।**

**इह किंचिदङ्गाधिकारे लुमता लुप्ते प्रत्ययलक्षणेन भवति, किंचिच्चाऽन्यत्र न भवति। यदि पुनः "न लुमता तस्मिन्" इत्युच्येत। अथ नु लुमता तस्मिन्नित्यनुमाने किं सिद्धमेतद् भवति – "इटो विधिप्रतिषेधौ" क्रमेर्दीर्घत्वं च? बाढं सिद्धम्। नेटो विधिप्रतिषेधौ परस्मैपदेष्वित्युच्यते।**

**कथं तर्हि? सकारादाविति। तद् विशेषणं परस्मैपदग्रहणम्। न खल्वपि क्रमेर्दीर्घत्वं परस्मैपदेष्वित्युच्यते। कथं तर्हि? शितीति, तद्विशेषणं परस्मैपदग्रहणम्।**

**अयं भावः** – प्रत्ययलक्षणस्यान्यदपि दूषणमस्ति – यथा – ''चक्षुष्कामं याजयांचकार'' इति वाक्ये चक्षुष्काममित्यस्मादतिङन्तात् परस्य याजयामित्यस्य, प्रत्ययलक्षणेन तिङन्तं मत्वा तिङ्ङतिङः (८।१।२८) इति निघातो न प्राप्नोति। एवञ्च याजयामित्यस्यातिङन्तत्वाभावात् चकार इत्यस्य तिङ्ङतिङः (८।१।२८) इति निघातो न प्राप्नोति। याजयामित्यत्र यज्धातोः णिजन्तात् याजि इत्यस्माल्लिटि कास्प्रत्ययादाममन्त्रे लिटि (३।१।३२) इत्यामि आमः (२।४।८१) इति प्रबाध्य परत्वात् तिपि प्रत्यये कृते तस्य प्रत्ययलक्षणेन तिङन्तत्वं विधाय दूषणमुक्तम्। तच्चामि लिलोपादिति वार्तिकेन परिहरति। याजयामित्यत्र तिप्तस्झिसिपित्यस्य आमः (२।४।८१) इति बाधकमस्ति। तिबादीनामावश्यकप्राप्तिषु आमः इत्यस्यारम्भात्। तेनास्य याजयामित्यस्य तिङन्तत्वं न भवति। अतः तस्य निघातो न भवति। चकारेत्यस्यातिङन्तात् परस्य निघातो भवति नास्त्यत्र दूषणमितिभावः।

अङ्गाधिकारीयकार्येषु प्रत्ययलक्षणस्य न लुमताङ्गस्येति निषेधो भवतीति स्वीकारे जिगमिष संविवृत्स इत्यत्रेड्विधिः तत्प्रतिषेधश्च न प्राप्नुतः। तथाहि – गम्धातोः सनि द्वित्वाभ्यासादिकार्येषु कृतेषु सिपि सेर्हित्वे अतो हेः (६।४।१०५) इति हेर्लुकि तस्याङ्गाधिकारीयत्वात् न लुमताङ्गस्येति निषेधे प्रत्ययलक्षणस्याभावात् परस्मैपदपरकाभावेन 'गमेरिट्परस्मैपदेषु' (७।२।५) इति इड्विधिर्न प्राप्नोति, तर्हि 'जिगमिष' इति रूपं न सिद्ध्यति। एवं संविवृत्स इत्यत्र सम्पूर्वकादुकारेत्संज्ञकाद् वृत्' धातोः सनि द्वित्वेऽभ्यासादिकार्ये धातुत्वात् लोटि सिपि तस्य ह्यादेशे ''अतो हेर्लुकि'' (६।४।१०५) इति हेर्लुकि परस्मैपदस्याभावात् वलादित्वेन प्राप्तस्येटो ''न वृद्भ्यश्चतुर्भ्यः'' (७।२।५९) इति प्रतिषेधो न प्राप्नोति। प्रत्ययलक्षणेन परस्मैपदमानेतुं न शक्यम् न लुमताङ्गस्येति निषेधात्। अत्र ''वृद्भ्यः स्यसनोः'' (१।३।९२) इति परस्मैपदविधानात्। किं चेति। अर्थात् अन्यदप्यस्ति यत् सिद्धं न भवति? क्रमेर्दीर्घत्वं चेत्यत्र दीर्घरूपकार्यसमीपे



पठितश्चकारः कार्यमेव समुच्चिनुयादिति धिया गूढाशयानभिज्ञ उत्तरति। इटश्च विधिप्रतिषेधाविति। वस्तुतः कार्यस्य समुच्चेतव्यस्याभावात् सामर्थ्यात् प्रकृतिसमुच्चयो बोद्धव्यः। इममेवाशयं बोधयितुं भगवान् भाष्यकारो ब्रूते – नेत्याहेत्यादि। अर्थात् क्रमेर्दीघत्वं चेत्यत्र क्रमेश्च दीर्घत्वमिति पठनीयमिति भावः। उत्क्राम संक्राम। उत्पूर्वकात् सम्पूर्वकाच्चोकारेत्संज्ञकात् क्रमधातोः लोटि सिपि शपि सेर्ह्यादेशे ''अतो हेः'' (६।४।१०५) इति हेर्लुकि न लुमताङ्गस्येति निषेधात् प्रत्ययलोपे प्रत्ययलक्षणमित्यस्याप्रवर्तनात् परस्मैपदपरकत्वाभावेन ''क्रमः परस्मैपदेषु'' (७।३।७६) इति दीर्घो न प्राप्नोतीति दोषः। अत्र संक्षिप्तार्थः – संजिगमिषेत्यत्रेड्विधिर्न प्राप्नोति। संविवृत्सेत्यत्रेड्विधेः प्रतिषेधो न प्राप्नोति। उत्क्रामसंक्राम इत्यत्र दीर्घविधिः न प्राप्नोतीति।

इह किंचिदङ्गाधिकारे – अत्र कतिपयानि कार्याणि सन्ति यानि अङ्गाधिकारीयाणि यथानन्तरोक्तानि जिगमिष, संविवृत्स, उत्क्राम, संक्रामेत्यादीनि। कतिपयानि अङ्गाधिकारबहिर्भूतानि। तत्राङ्गाधिकारीयेषु प्रत्ययलक्षणेन तानि भवन्ति, न लुमताङ्गस्येति निषेधो न प्रवर्तते। यानि कानिचित् अङ्गाधिकाराद् बहिर्भूतानि ''प्रयोजनं त्रिनिकिल्लुकि स्वराः'' इति भाष्यवार्तिकोक्तानि। अत्र लुमता लुप्तस्य प्रत्ययस्य प्रत्ययलक्षणेन तन्निमित्तं कार्यं न भवति। न लुमताङ्गस्येति निषेधात्। यदि न लुमाताङ्गस्येत्यस्य स्थाने न लुमता तस्मिन्निति सूत्रं स्यात्। तत्राङ्गाधिकारीयाणि तद्बहिर्भूतानि वा कार्याणि स्युः। तेषु कार्येषु कर्त्तव्येषु लुमताशब्देन लुप्तं प्रत्ययमादाय तन्निमित्तकं कार्यं भवतीत्यर्थकेन नूतनसूत्रेण जिगमिष संविवृत्स उत्क्राम संक्रामेत्यादयः प्रयोगाः सिद्ध्येयुः? अवश्यमेव ते सिद्ध्यन्ति। तथाहि – जिगमिष संविवृत्स इत्येतयोः क्रमशः इड्विधिप्रतिषेधयोः विधानं परस्मैपदे परत इति नास्ति किन्तु परस्मैपदपरकसकारादेरार्धधातुकस्येडागमो भवतीत्यर्थकरणेनेड्विधिर्भविष्यति। परस्मैपदमिति सकारादेरार्धधातुकस्य विशेषणमस्ति। एवं न वृद्भ्यश्चतुर्भ्यः इति सूत्रेऽपि परस्मैपदमिति सकारादेरार्धधातुकस्य विशेषणमिति निमित्तत्वेनेट्प्रतिषेधः सिद्ध्यति। एवमुत्क्राम संक्रामेत्यत्रापि 'क्रमः परस्मैपदेषु' इत्यस्य परस्मैपदपरकशिति परतो दीर्घो भवतीत्यर्थकरणेनोक्तौ प्रयोगौ सिद्ध्यतः। उत्क्रामसंक्राम इत्यत्र शपि शित्त्वमस्त्येव।

(म० भा०) ''न लुमता तस्मिन्निति चेद् हनिणिङादेशास्तलोपे''॥ १३॥

**न लुमता तस्मिन्निति चेद्धनिणिङादेशास्तलोपे न सिद्ध्यन्ति। अवधि भवता दस्युः। अगायि भवता ग्रामः। अध्यगायि भवताऽनुवाकः। तलोपे कृते लुङीति हनिणिङादेशा न प्राप्नुवन्ति। नैष दोषः। न लुङीति हनि णिङादेशा उच्यन्ते। किं तर्हि? आर्धधातुक इति। तद्विशेषणं लुङ्ग्रहणम्। इह च – सर्वस्तोमः सर्वपृष्ठः – सर्वस्य सुपीत्याद्युदात्तत्वं न प्राप्नोति। तच्चापि वक्तव्यम्। न वक्तव्यम्। न लुमताङ्गस्येत्येव सिद्धम्। कथम्? न लुमता लुप्तेऽङ्गाधिकारः प्रतिनिर्दिश्यते। किं तर्हि? योऽसौ लुमता लुप्यते, तस्मिन् यदङ्गं तस्य यत् कार्यं तन्न भवति। एवमपि सर्वस्वरो न सिद्ध्यति। कर्तव्योऽत्र यत्नः॥ ६३॥**

**अयं भावः –** न लुमता तस्मिन्निति सूत्रकरणे अवधि भवता दस्युः। अगायि भवता ग्रामः। अध्यगायि भवताऽनुवाकः इत्येते प्रयोगाः न सिद्ध्यन्ति। तथाहि – हन्धातोः कर्मणि लुङि आत्मनेपदे तप्रत्यये च्लेः चिणादेशे अटि 'चिणो लुक्' (६।४।११४) 'लुङि च' (२।४।४३) इति हनो वधादेशो न प्राप्नोति। लुका लुप्तस्य प्रत्ययलक्षणेन तन्निमित्तकं कार्यं वधादेशो न प्राप्नोति न लुमता तस्मिन्निति निषेधात्। एवमिण्धातोः कर्मणि लुङि तप्रत्यये च्लेश्चिणादेशे अटि 'चिणो लुक्' (६।४।११४) इति तप्रत्ययस्य लुकि ''इणो गा लुङि'' (२।४।४५) इति गादेशो न प्राप्नोति। लुङ्परकत्वाभावात्। प्रत्ययलक्षणेन तमानेतुं न शक्यम्। न लुमता तस्मिन्निति प्रत्ययलक्षणस्य निषेधात्। अतोऽगायीति रूपं न सिद्ध्यति। अध्यगायि भवतानुवाकः इत्यत्रापि अधिपूर्वकाल्लुङि (कर्मणि) तप्रत्यये च्लेश्चिणादेशेऽटि चिणो लुकि विभाषा लुङ्लृङोः (२।४।५०) इति इङ्धातोः गादेशो न प्राप्नोति। प्रत्ययलक्षणेन तमानेतुं न शक्यम्। लुमता तस्मिन्निति तन्निषेधात्। नास्त्यत्र दोषः। यतो हि 'लुङि च' 'इणो गा लुङि' 'विभाषा लुङ्लृङोः' इति सूत्राण्यार्धधातुके इत्यधिकारे पठितानि। तत्र लुङ् परार्धधातुके परतो वधादेशो भवतीत्यर्थेन प्राधान्येनार्धधातुकस्येति निमित्तत्वे वधादेशो भविष्यति।



एवम् अन्ययोः द्वयोः सूत्रयोरपि आर्धधातुकस्यैव प्राधान्येन निमित्तत्वेन गादेशौ भविष्यतः।

नूतनसूत्रेऽयमपि दोषः – सर्वस्तोमः सर्वपृष्ठ इत्यत्र सर्वस्य सुपि (६।१।१९१) इत्याद्युदात्तत्वं न प्राप्नोति। प्रत्ययलक्षणस्य न लुमता तस्मिन्निति निषेधात्। तत् नूतनं सूत्रं वक्तव्यम्। न वक्तव्यम्। न लुमताङ्गस्येत्यनेनैव सर्वमिष्टं सिद्ध्यति। कथम्? न लुमताङ्गस्येति सूत्रेऽङ्गस्यार्थो भवति – यो लुमता शब्देन लुप्तः प्रत्ययः, तस्मिन् प्रत्यये यदङ्गं तस्य यत् कार्यं तन्न भवतीति। अर्थात् सर्वस्य सुपि (६।१।१९१) इत्यस्य यदा सुपि परे सर्वस्याद्युदात्तो भवतीत्यर्थः स्वीक्रियते तदा प्रत्ययलक्षणस्य न लुमताङ्गस्येत्यनेन निषेधो भवति। अस्मिन् पक्षे सर्वस्याद्युदात्तत्वं न प्राप्नोति। तदेवोक्तं महाभाष्ये ''एवमपि सर्वस्वरो न सिद्ध्यती''ति। अत्र यत्न एवमस्ति – ''सौवर्यः सप्तम्यस्तदन्तसप्तम्यः'' इति सिद्धान्तस्वीकारेऽत्र सर्वस्तोमः सर्वपृष्ठः इत्यत्र प्रत्ययलक्षणस्य प्रतिषेधो न भवतीति। अत्र सौवर्यः सप्तम्यस्तदन्तसप्तम्यः इति सिद्धान्तस्वीकारे सुबन्तस्याद्युदात्तत्वं भवति। न तु सुपि परे अङ्गस्येति। न लुमताङ्गस्येति सूत्रेऽङ्गपदेन 'अङ्गस्य' (६।४।१) इत्यधिकारे विहितेषु कार्येषु प्रत्ययलक्षणस्य न लुमताऽङ्गस्येति निषेधो भवतीति न गृह्यते, किन्तु यस्मादितिसूत्रेण प्रत्यये परे यदङ्गं तस्य कार्यं प्रति प्रत्ययलक्षणस्य निषेधो भवति। अर्थाल्लुमताशब्देन लुप्ते तस्मिन् प्रत्यये परे यदङ्गं तस्य यत् कार्यमङ्गाधिकारीयं तद्बहिर्भूतं वा तत्प्रत्ययलक्षणेन भवतीत्यर्थः सम्पद्यते। एतेन सर्वत्र लुमति प्रत्ययलक्षणस्य प्रतिषेधो भविष्यति। लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यानम्, अह्नो रविधौ, उत्तरपदत्वे चापदादिविधौ, द्वन्द्वेऽन्त्यस्येत्यादिकथनस्यावश्यकत्वं नास्तीति भावः॥ ६३॥

**॥ न लुमताङ्गस्य॥ १।१।६३**

*****

## ॥ अन्तादिवच्च ॥ ( ६ । १ । ८५ )

अत्र "काशिकावृत्तिः" –

एक इति वर्तते, पूर्वपरयोरिति च। एकः पूर्वपरयोरिति योऽयमेकादेशो विधीयते स पूर्वस्यान्तवद्भवति, परस्यादिवद्भवति यथा तस्यान्त आदिर्वा तदन्तर्भूतस्तद्ग्रहणेन गृह्यते तद्वदेकादेशोऽपि तद्ग्रहणेन गृह्यते इत्येषोऽतिदेशार्थः। ब्रह्मबन्धूरित्यत्र ब्रह्मबन्ध्विति प्रातिपदिकम्, ऊङित्य-प्रातिपदिकं, तयोः प्रादिपदिकाप्राति-पदिकयोर्य एकादेशः स प्रातिपदिक-स्यान्तवद्भवति। यथा शक्यते कर्त्तुं ङ्याप्प्रातिपदिकादिति स्वादिविधिः। वृक्षावित्यत्र सुबौकारः, असुबकारः तयोः सुबसुपोरेकादेशः सुपः आदिवद्भवति। यथा शक्यते वक्तुं सुप्तिङन्तं पदमिति। वर्णाश्रयविधावयमन्तादिवद्भावो नेष्यते, तथा च खट्वाभिरित्यत्रान्तवद्भावाभावादतोमिति न भवति। ह्वयतेर्जुहावेति सम्प्रसारणपूर्वत्वस्यादिवद्भावाभावादात "औणल" इति न भवति। अस्यै अश्वः, अस्या अश्व इति वृद्धिरेचीति वृद्धिरेङः पदान्तादतीत्यत्र विधावादिवद् न भवति। पूर्वपरसमुदाय एकादेशस्य स्थानी, स हि तेन निवर्त्यते, तन्नावय योरानुमानिकं स्थानित्वमिति तदाश्रयं कार्यं स्थानिवद्भावादप्राप्तमित्यन्तादिवद्भावो विधीयते। "इति काशिकावृत्तिः"॥

( म० भा० ) – किमर्थमिदमुच्यते?

अयं भावः – स्थानिवदादेशोऽनल्विधाविति सूत्रेण स्थानिवद्भावे सिद्धे अन्तादिवच्चेति सूत्रस्य किम्प्रयोजनमिति।

( म० भा० ) "अन्तादिवचनमामिश्रस्यादेशवचनात्"॥ १॥

अन्तादिवदित्युच्यत आमिश्रस्यादेशवचनात्। आमिश्रस्यायमादेश उच्यते। स नैव पूर्वग्रहणेन गृह्यते नापि परग्रहणेन। तद्यथा – क्षीरोदके



सम्पृक्ते आमिश्रत्वान्नैव क्षीरग्रहणेन गृह्यते नाप्युदकग्रहणेन। इष्यते च ग्रहणं स्यादिति, तच्चान्तरेण यत्नं न सिद्ध्यतीत्यन्तादिवचनम्। एवमर्थमिद-मुच्यते। अस्ति प्रयोजमेतत्? किं तर्हीति।

अयं भावः – वार्तिकेऽस्मिन् भगवान् महाभाष्यकारोऽस्य सूत्रस्य प्रयोजनं वदति। 'एकः पूर्वपरयोः' (६।१।८४) इत्यधिकारे पठितेषु 'आद्गुणः' (६। १।८७) इत्यादिषु विधिसूत्रेषु पूर्वपरसमुदायस्य स्थाने एकादेशस्य विधानं भवति। तत्र कृत एकादेशे पूर्वस्य परस्य च स्थानिनः पृथग्रूपेण भानं न जायते। यथा क्षीरोदके सम्मिलिते सति तयोः सम्मिलितयोः क्षीररूपेणोदकरूपेण वा पृथग् ग्रहणं न भवति। तथैवात्र पूर्वपररूपस्यावयवशो ग्रहणमशक्यम्। स्थानिवत्सूत्रे तु साक्षात् स्थानी यत्र निर्दिष्टो भवति तस्यैव ग्रहणं भवति। यथा – "इको यणचि" (६। १।७७) इत्यादौ। ननु स्थानिवत्सूत्रे आदेशपदमहिम्ना आनुमानिकस्यापि स्थानिन आदेशस्य च ग्रहणं भवति। यथा – 'एरुः' (३।४।८६) इत्यत्र 'पचतु' इति प्रयोगे इकारेणेकारान्तः स्थान्यनुमीयते उकारेणोकारान्त आदेशः। तस्य स्थानिवद्भावात् सुप्तिङन्तं पदम् (१।४।१४) इति तिङन्तत्वेन पदसंज्ञाभवति। तथैवात्राप्येकादेशे पूर्वस्य परस्य चेति अवयवशः स्थानित्वमानुमानिकं स्याददतिदेशसूत्रस्यावश्यकता नास्तीति चेन्न अल्विधौ एतस्यातिदेशसूत्रस्य प्रयोजनमस्ति। तेन 'क्षीरपेण' इत्यत्र (क्षीर प् एन) पकारोत्तरवर्तिनोऽकारस्येनस्येकारस्य च स्थाने जातस्यैकादेशस्य पूर्वान्तवद्भावेन "एकाजुत्तरपदे णः" (८।४।१२) इति सूत्रेणैकाजुत्तरपदत्वेन नकारस्य णत्वं भवति। एकाजित्यत्राल्विधेः सत्त्वात्। अतोऽल्विध्यर्थमिदमतिदेशसूत्रम्।

( म० भा० ) "तत्र यस्यान्तादिवत् तन्निर्देशः"॥ २॥

तत्र यस्यान्तादिवद्भाव इष्यते तन्निर्देशः कर्त्तव्यः। अस्यान्तवद्भवत्यस्यादिवद्भवतीति वक्तव्यम्।

"सिद्धन्तु पूर्वपराधिकारात्"॥ ३॥

सिद्धमेतत्। कथम्? "पूर्वपराधिकारात्"। पूर्वपरयोरितिवर्तते। पूर्वस्य कार्यं प्रत्यन्तवद्भवति। परस्य कार्यं प्रत्यादिवद्भवति। अथ यत्रोभय-

**माश्रीयते किं तत्र पूर्वस्यान्तवद्भवत्याहोस्वित् परस्यादिवद्भवति।''उभयत आश्रयणे नान्तादिवत्।'' किं वक्तव्यमेतत्? नहि। कथमनुच्यानं गंस्यते? लौकिकोऽयं दृष्टान्तः। तद्यथा – लोके यो द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति। यदा तु तमुभौ युगपत् प्रेषयतो नानादिक्षु च कार्ये भवतस्तत्र यद्यसावविरोधार्थी भवति तत उभयोर्न करोति। किं पुनः कारणमुभयोर्न करोति? यौगपद्यासम्भवात्। नास्ति यौगपद्येनसम्भवः।**

**अयं भावः** – सूत्रेऽन्तादिशब्दौ अवयववाचिनौ तयोः स्थानित्वेऽपि पूर्वपरवर्णघटितावयवकयोरवयविनोरनुमानं भवति। तेन प्रातिपदिकत्वसुबन्तत्व-प्रत्ययत्वादिकस्यानयनं पूर्वान्तवद्भावेन परादिवद्भावेन च सिद्ध्यति। परं यस्यान्तादिवद्भाव इष्यते तस्योदाहरणविशेषस्य निर्देशः कर्त्तव्यः। अस्यान्तवद्भवत्यस्यादिवद्भवतीति। तस्योत्तरं सिद्धन्त्विति वार्तिकेन। ''एकः पूर्वपरयोः'' (६।१।८४) इत्यस्यानुवर्तनं क्रियतेऽत्र। तेन पूर्वस्य कार्यं प्रत्यन्तवद्भवति। परस्य कार्यं प्रत्यादिवद् भवतीत्यर्थो लभ्यते। क्वचित् आदेशविधानात् प्राग्यौ पूर्वपरौ तौ गृह्येते, यथा – वृक्षौ इत्यत्र सुपमौकारं परं प्रत्यादिवद्भावादेकादेशस्य सुप्तिङन्तं पदमिति पदसंज्ञा भवति। अत्रैकादेशे कृते पूर्वपरयोर्भेदेन निर्देशो नास्ति। क्वचित्तु क्षीरपेणेत्यादौ कृते एकादेशे पूर्वः पान्तस्तदन्तवत्त्वादेकादेशस्यैकाजुत्तरपदस्य सत्वाण्णत्वं भवति। यत्र शास्त्रे युगपत् पूर्वपरयोराश्रयणं भवति। तत्र सन्देहो भवति पूर्वस्यान्तवद्भवति, परस्यादिवद्भावो वा? यथा – अतीयात् परीयादित्यादौ। 'एतेर्लिङि' (७।४।२४) इति सूत्रेणोपसर्गादुत्तरस्येण्धातोः ह्रस्वः प्राप्नोति। यतो हि धातूपसर्गयोरेकादेशे पूर्वान्तवत्त्वेनोपसर्गत्वं परादिवद्भावेन च धातुत्वमादाय ह्रस्वत्वेन भाव्यम्। तच्च नेष्टम्। 'उभयत आश्रयणे नान्तादिवत्' इति वचनेन पूर्वान्तवद्भावस्य परादिवद्भावस्य च युगपत्निषेधात्। अत्रान्तादिशब्दावयवविशेषवाचिनौ। यदि पूर्वं प्रति अवयवबुद्धिः एकेदेशे स्यात् तदा तस्मिन्नेव परं प्रति कथमादिवद्बुद्धिः स्यात्? एवं परं प्रत्यादिवद्बुद्धौ पूर्वं प्रत्यन्तवद्बुद्धिर्न स्यादेकादेशस्य द्वयोरपेक्षया परतन्त्रताया विरोधात्। पूर्वपरशब्दाभ्यां च मान्तादिशब्दाभ्यां च विरोधस्य पुरः प्रत्यक्षत्वात्। तर्हीदमुभयत इति वचनं कर्त्तव्यम्? न कर्त्तव्यम्। लौकिकदृष्टान्तेनैवोक्तवचनस्यार्थो



निर्गच्छति – तद्यथेति। तुल्यबलयोः स्वामिनोरविरोधी सेवकः युगपद् विभिन्नदिक्षु कार्यार्थं यदि तौ प्रेषयतस्तदा स उभयोः कार्यं न करोति। अत्र कारणमिदमेव यत् यौगपद्येन तस्यासम्भवात्। एवं प्रकृतेऽपि यौगपद्येन पूर्वान्तवत्परादिवद्भावयोर-सम्भवाद्। तस्माद्'उभयत आश्रयणे' इति न कर्त्तव्यम्।

**(म० भा०) ''अथान्तवत्त्वे कानि प्रयोजनानि?''**

**''अन्तवत्त्वे प्रयोजनं बह्वच्पूर्वपदाट्ठज्विधाने'' ॥ ४ ॥**

**अन्तवत्त्वे बह्वच्पूर्वपदाट्ठज्विधाने प्रयोजनम्। द्वादशान्यिकः। पूर्व-पदोत्तरपदयोरेकादेशः पूर्वपदस्यान्तवद्भवति। यथाशक्येत कर्त्तुं बह्वच्पूर्वाट्ठञ्भवतीति। क्व तर्हि स्यात्? यत्र कृतेऽप्येकादेशे बह्वच् पूर्वपदं भवति – त्रयोदशान्यिकः।**

**अयं भावः** – अन्तवत्त्वे बह्वच्पूर्वपदात् ठच्प्रत्ययस्य विधानं प्रयोजन-मस्तीति वार्तिकार्थः। तथाहि – द्वादशान्यिकः इत्यत्र द्वादशान्यानि कर्माणि अध्ययने वृत्तान्यस्येत्यर्थे तद्धितार्थे प्रत्यये विवक्षिते ''तद्धितार्थोत्तरपदसमाहारे च'' (२।१।५१) इति द्विगुसमासे समासत्वात् प्रातिपदिकत्वे सुपो लुकि द्वादश अन्येत्यस्थायां सवर्णदीर्घे सति द्वादश् इति पूर्वपदस्य बह्वच्कत्वाभावात् ''बह्वच् पूर्वपदाट्ठच्'' (४।४।६४) इति ठच्प्रत्ययस्य प्राप्तिर्नभवति किन्त्वेका-देशस्यान्तवद्भावेन बह्वच्कत्वेन ठच्प्रत्ययो भवति। यत्र तु कृतैकादेशेऽपि बह्वच्कता वर्तते तत्र ठच् भवत्येवेति। यथा – त्रयोदशान्यिकः चतुर्दशान्यिकः इति।

**(म० भा०) 'प्रत्ययैकादेशः पूर्वविधौ' ॥ ५ ॥**

**प्रत्ययैकादेशः पूर्वविधौ प्रयोजनम्। मधु पिबन्ति। शिदशितोरेका-देशः शितोऽन्तवद्भवति। यथा शक्येत कर्त्तुं शितीति पिबादेशः। क्व तर्हि स्यात्? यत्रैकादेशो न भवति – पिबति।**

**अयं भावः** – पाधातोः लटि प्रथमपुरुषस्य बहुवचने झिप्रत्यये तस्या-न्तादेशे सार्वधातुकत्वात् शपि पा अ अन्ति इति स्थिते पाघ्राध्मेति सूत्रापेक्षया ''अतो गुणे'' (६।१।९७) इत्यस्यान्तरङ्गत्वात् पररूपे कृति शिति परतः पिबादेशस्य विधीयमानत्वात् ''पाघ्राध्मास्थाम्ना ....... धौशीयसीदाः'' (७।३।

७८) इति पिबादेशो न प्राप्नोति। शिदशितोः स्थाने विहितस्यैकादेशस्य पूर्वान्तवद्भावेन पिबादेशो भवति। यत्रैकादेशो नास्ति तत्र शिति परत्वात् पिबादेशो भवत्येव। यथा – पिबति इत्यत्र।

**(म० भा०) ''वैभक्तस्य णत्वम्''॥ ६॥**

**''वैभक्तस्य णत्वं प्रयोजनम्। क्षीरपेण सुरापेण। उत्तरपदविभक्त्योरेकादेशे उत्तरपदस्यान्तवद्भवति।'' यथा शक्येत कर्तुमेकाजुत्तरपदे णो भवतीति। क्व तर्हि स्यात्? यत्रैकादेशो न भवति – क्षीरपाणां सुरापाणाम्।**

**अयं भावः** – विभक्तौ भवो वैभक्तः तस्य वैभक्तस्य। विभक्तिसम्बन्धिन एकादेशस्यान्तवत्त्वे णत्वविधानं प्रयोजनमिति वार्तिकतात्पर्यार्थः। क्षीरपेण सुरापेण। इत्यत्र क्षीरं पिबति सुरां पिबति इत्यर्थे ''आतोऽनुपसर्गे कः'' (३।२।३) इति कप्रत्यये आकारस्य लोपे क्षीरपः सुरापः। अत्रोभयत्र टाविभक्तौ तस्येनादेशे ''आद्गुणः'' इत्यकारेकारयोः स्थाने गुणैकादेशे श्रीप् एन इति स्थिते ''एकाजुत्तरपदे णः'' (८।४।१२) इति णत्वं न प्राप्नोति उत्तरपदस्यैकाच्त्वाभावात्। उत्तरपदविभक्त्योः स्थाने जायमानस्यैकादेशस्य पूर्वान्तवद्भावे णत्वं भवति। यत्रैकादेशो न भवति तत्रान्तवद्भावस्य प्रयोजनं नास्ति। तत्र णत्वं भवत्येव। यथा – क्षीरपाणां सुरापाणामित्यत्र।

**(म० भा०) ''अदस ईत्त्वोत्त्वे''॥ ७॥**

**''अदस ईत्त्वोत्त्वे प्रयोजनम्। अमी अत्र अमी आसते। अमू अत्र अमू आसाते। अदस्विभक्त्योरेकादेशोऽदसोऽन्तवद्भवति। यथा शक्येत कर्तुमदसोऽसेर्दादुदोमः'' एत ईद् बहुवचने (८।२।८०-८१) इति। क्व तर्हि स्यात्? यत्रैकादेशो न भवति – अमीभिः अमूभ्याम्।**

**अयं भावः** – अदस्शब्दात् जसि 'त्यदादीनामः' (७।२।१०२) इत्यत्त्वे ''अतो गुणे'' (६।१।९७) इति पररूपे ''जशः शी'' (७।१।१७) ''आद्गुणः'' (६।१।८७) इति गुणे अदे इति स्थितौ ''एत ईत् बहुवचने'' (८।२।८१) इति ईत्वं न प्राप्नोति अदस्विभक्त्योरेकादेशेऽदस्शब्दस्याभावात्।



एकादेशस्य पूर्वान्तवद्भावेऽदसो दात्परस्येकारे दकारस्य मकारे च कृते अमीति रूपं जायते। एवममी आसते इत्यत्रापि अमी अत्र इत्यत्रेवेत्वं मत्वं च ज्ञेयम्।

अमी अत्र अमू आसाते। अत्रादस्शब्दात् प्रथमाया द्विवचने औ अदसः सकारस्यात्वे पररूपे वृद्धौ अदौ इति स्थितौ ''अदसोऽसेर्दादुदोमः'' (८।२।८०) इति अदस्विभक्त्योरेकादेशे अदसोऽभावेनोत्वं मत्वं च न प्राप्नोति। अदसोऽन्तवद्भावे उत्वं मत्वं च भवतः। यत्रैकादेशो नास्ति तत्र तु मत्वोत्वे मत्वेत्वे च भवत एव। यथा – अमूभ्याम् अमीभ्य इत्यत्र।

**(म० भा०) स्वरितत्वे प्रयोजनम्। कार्या हार्या। तिदतिदोरेकादेशस्तितोऽन्तवद् भवति। यथा शक्येत कर्तुं ''तित्स्वरितम्'' (६।१।१८५) इति। क्व तर्हि स्यात्? यत्रैकादेशो न भवति कार्यः हार्यः।**

**''स्वरितत्वं विप्रतिषेधात्''॥ ८॥**

**स्वरितत्वं क्रियतामेकादेश इति किमत्र कर्त्तव्यम्? परत्वात् स्वरितत्वं भविष्यति विप्रतिषेधेन। (म० भा०) नैष युक्तो विप्रतिषेधः। नित्य एकादेशः। कृतेऽपि स्वरितत्वे प्राप्नोत्यकृतेऽपि। अनित्य एकादेशः। अन्यथा स्वरस्य कृते स्वरितत्वे प्राप्नोत्यन्यथा स्वरस्याकृते स्वरितत्वे प्राप्नोति, ''स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो'' भवति। अन्तरङ्गस्तर्ह्येकादेशः। कान्तरङ्गता? वर्णावाश्रित्यैकादेशः पदस्य स्वरितत्त्वम्। स्वरितत्वमप्यन्तरङ्गम्। कथम्? उक्तमेतत् ''पदग्रहणं परिमाणार्थ''मिति। उभयोरन्तरङ्गयोः परत्वात् स्वरितत्वम्, स्वरितत्वे कृते आन्तर्यतः स्वरितानुदात्तयोरेकादेशः स्वरितो भविष्यति।**

**अयं भावः** – पूर्वान्तवत्त्वे कार्या हार्या इत्यत्र स्वरितत्वं प्रयोजनमुक्तं महाभाष्ये। तथाहि – ङ्वित्संज्ञकात् ञित्संज्ञकाच्च करणार्थकात् कृधातोः ''ऋहलोर्ण्यत्'' (३।१।१२४) इति कर्मण्यर्थे ण्यति प्रत्यये णित्त्वात् ''अचो ञ्णिति'' (७।२।११५) इति वृद्धौ रपरत्वे च तित्स्वरितम् (६।१।१८५) इति स्वरितत्वे कृते स्त्रीत्वविवक्षायां टापि ''अकः सवर्णे दीर्घः'' (६।१।१०१) इति सवर्णदीर्घे कृतेऽत्र स्वरितटाप्प्रत्ययोः स्थाने कृतस्यैकादेशस्य स्वरित-

तत्वमिष्यते। तच्च स्वरितत्वं न प्राप्नोति, तस्यैकादेशेनापहारात्। अतोऽकारस्य पूर्वान्तवत्त्वेन स्वरितत्वं भवति। यत्रैकादेशो नास्ति तत्र तु भवत्येव 'तित्स्वरितम्' इति स्वरितत्वम्। यथा कार्यः हार्यः इति। अत्र स्वार्थाभिधायीति पक्षमनुसृत्य लब्धस्वरितस्वरः कार्यशब्दस्ततो टाप् प्रत्ययं लभते इति भावः। इतः परं "स्वरितत्वं विप्रतिषेधादिति विचारः" कार्य आ इति स्थिते विभज्यान्वाख्यानपक्षमादाय क्रियते। तथाहि – स्वरितत्वं क्रियतामेकादेशो वेति। तत्रैकादेशापेक्षया स्वरितविधायकस्य सूत्रस्य परत्वात् पूर्वं प्रवृत्तिः।'विप्रतिषेधे परं कार्यम्' (१।४।२) इत्यनेन परत्वस्यैव प्रबलत्वबोधनात्। अत्र विचारः कर्त्तव्यो यत् परत्वादपि नित्यस्य बलवत्त्वं भवति। परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः इति परिभाषया बोधनात्। तदेवोक्तं भाष्ये "नैष युक्तो विप्रतिषेधः।" नित्य एकादेशः कथम्? स्वरिते कृते प्राप्नोति स्वरितरहितेऽपि एकादेशः प्राप्नोति। 'कृताकृतप्रसङ्गी विधिर्नित्य' इति परिभाषया बोधनात्। नन्वनित्योऽप्येकादेशः। कथमिति चेदुच्यते – अन्यथा स्वरस्य कृते स्वरितत्वे प्राप्नोत्यन्यथा स्वरस्याकृते प्राप्नोति। "स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति" इति परिभाषया बोधनात्। अन्तरङ्गस्तर्ह्येकादेशः। कान्तरङ्गता? वर्णावाश्रित्यैकादेशः प्राप्नोति, पदमासृत्य स्वरितस्वरः। स्वरितत्वमप्यन्तरङ्गम्। कथम्? निमित्तं नास्ति पदं स्वरितस्य। 'अनुदात्तादेश्च' (४।३।१४०) इति सूत्रस्थमहाभाष्ये – "पदग्रहणं परिमाणार्थम्"॥ ४॥

पदग्रहणं क्रियते परिमाणार्थम्। पदावधेर्यथा स्यात् वाक्यस्य माभूदिति। उभयोरन्तरङ्गयोः परत्वात् 'तित्स्वरितम्' इति स्वरिते कृते स्वरितानुदात्तयोः सवर्णदीर्घे सति स्वरितत्वमेवान्तर्यतो भवति। यतो हि स्वरितेऽनुदात्तस्य विद्यमानत्वात्।

**(म० भा०) "लिङ्गविशिष्टग्रहणाद्वा"॥ ९॥**

**अथवा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येवमत्र स्वरितत्त्वं भविष्यति।**

**अयं भावः –** तित्स्वरितमिति सूत्रे तिदित्यस्य प्रत्ययत्वेन प्रत्ययग्रहणे-तदन्ता ग्राह्या इति वचनात् (तित्पदेन ण्यत्प्रत्ययस्यापि ग्रहणेन) तदन्तविधौ सति कार्यशब्दो ण्यत्प्रत्ययान्तः कृदन्तत्वात् प्रातिपदिकसंज्ञको भवति। अतः तित्स्वरितमित्यत्र प्रातिपदिकस्य कार्यशब्दस्य ग्रहणे कार्या शब्दस्य प्रातिपदिकग्रहणे



लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषया ग्रहणं भवति। अतः कृते एकादेशेऽपि स्वरितत्वं सम्पत्स्यते।

**(म० भा०) "पूर्वपदान्तोदात्तत्वं च प्रयोजनम्। गुडोदकं मथितोदकम्। पूर्वपदोत्तरपदयोरेकादेशः पूर्वपदस्यान्तवद्भवति। यथा शक्येत कर्त्तुमु'दकेऽकेवले" (६।२।९६) पूर्वपदस्यान्त उदात्तो भवतीति। क्व तर्हि स्यात्? यत्रैकादेशो नास्ति – उदस्विदुदकम्।"**

**अयं भावः –** पूर्वान्तवद्भावस्य पूर्वपदस्यान्तोदात्तत्वमपि प्रयोजनमस्तीति वार्तिकस्य तात्पर्यार्थः। यथा – गुडोदकम् मथितोदकम् इत्यत्र गुडेन मिश्रं गुडमिश्रम्। गुडमिश्रं च तदुदकमिति गुडोदकम्। तृतीयातत्पुरुषगर्भसमानाधिकरणतत्पुरुषसमासः। अत्र शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् (सि. कौ.सू. ७३९) इत्युत्तरपदलोपः। एवं मथितेन मिश्रमिति मथितमिश्रम्, तस्योदकेन समासः। पूर्ववन्मिश्रशब्दस्य लोपः। अत्र मथितं तक्रमित्युच्यते। अत्र प्रयोगद्वये "आद्गुण" (६।१।८७) इत्येकादेशे तस्य पूर्वान्तवद्भावे "उदके केवले" (६।२।९६) इति गुडशब्दे उकारोत्तरवर्तिनोऽकारस्योदात्तत्वं भवति। मथितशब्दे तकारोत्तरवर्तिनोऽकारस्योदात्तत्वं च भवति। यत्रैकादेशो भवति तत्र तूदात्तत्वं भवत्येव। यथा – उदश्विदुदकमित्यत्र।

**(म० भा०) "पूर्वपदान्तोदात्तत्वं च"॥ १०॥**

**पूर्वपदान्तोदात्तत्वं च विप्रतिषेधात्। पूर्वपदान्तोदात्तत्वं क्रियतामेकादेश इति किमत्र कर्त्तव्यम्? परत्वात् पूर्वपदान्तोदात्तत्वम्। पूर्वपदान्तोदात्तत्वस्यावकाशः – उदश्विदुदकम्। एकादेशस्यावकाशः – दण्डाग्रम् क्षुपाग्रम्। इहोभयं प्राप्नोति – मथितोदकम् गुडोदकम्। पूर्वपदान्तोदात्तत्वं भवति विप्रतिषेधेन। स चावश्यं विप्रतिषेधः आश्रयितव्यः।**

**अयं भावः –** पूर्ववार्तिकेन पूर्वपदान्तोदात्तापेक्षया पूर्वमेकादेशे कृते तत्पूर्वान्तवद्भावेन पश्चादन्तोदात्तत्वं साधितम्। अत्र दशमे वार्तिकेन 'विप्रतिषेधे परं कार्यमिति सूत्रेणैकादेशापेक्षया' "उदके केवले" इत्यस्य परत्वात् प्रथममुदात्तत्वं स्यात्। तथाहि – अन्यत्रान्यत्र लब्धावकाशयोरेकत्र प्राप्तिरूपस्य विप्रतिषेधे

विषयस्योदाहरणे प्रस्तौति भगवान् भाष्यकारः – अन्तोदात्तत्वस्योदाहरणम् उदश्विदुदकम्। एकादेशस्यावकाशः – दण्डाग्रम् क्षुपाग्रम्। अत्रोभयं प्राप्नोति- गुडोदकम् मथितोदकम्। पूर्वपदान्तो भवति विप्रतिषेधेन। स च विप्रतिषेधः अवश्यमेवाश्रयणीयः।

**(म० भा०) "एकादेशे हि स्वरिताप्रसिद्धिः"॥ ११॥**

**एकादेशे हि स्वरितस्याप्रसिद्धिः स्यात्। यो हि मन्यतेऽस्त्वत्रैकादेश एकादेशे कृते पूर्वपदान्तोदात्तत्वं भविष्यतीति स्वरितत्वं तस्य न सिद्ध्यति 'स्वरितो वानुदात्ते पदादौ' (८।२।६) इति। गुडोदकम् मथितोदकम्।**

**अयं भावः** – नवमे वार्तिके गुडोदकम् मथितोदकमित्यत्र पूर्वं 'आद्गुणः' इति गुणे कृते पूर्वान्तवद्भावेन 'उदके केवले' इति पूर्वपदस्यान्तोदात्तत्वं विहितम्। यदि पूर्वपदान्तोदात्तत्वमेकादेशे कृते भवति तर्हि स्वरितत्वं न प्राप्नोति। तन्नास्ति सम्यक्। तथाहि – गुडोदकम् मथितोदकमित्यत्र पूर्वपदस्यान्तोदात्तत्वे कृते "अनुदात्तं पदमेकवर्जम्" इति उदकशब्दस्य निघाते तत उदात्तानुदात्तयोरेकादेशे कृते "पदादावनुदात्ते परत उदात्तेन सहैकादेशो वा स्वरित इत्यर्थकेन" 'स्वरितो वानुदात्ते पदादौ' (८।२।६) इत्यनेन सूत्रेणोदात्तत्वं भवति। पक्षे स्वरितत्वमपि भवति।

**(म० भा०) "कृदन्तप्रकृतिस्वरत्वं च"॥ १२॥**

**कृदन्तप्रकृतिस्वरत्वञ्च विप्रतिषेधात्। कृदन्तप्रकृतिस्वरत्वं क्रियतामेकादेश इति किमत्र कर्त्तव्यम्? परत्वात् कृदन्तप्रकृतिस्वरत्वं भवति विप्रतिषेधेन। कृदन्तप्रकृतिस्वरस्यावकाशः – प्रकारकः प्रकरणम्। एकादेशस्यावकाशः – दण्डाग्रम् क्षुपाग्रम्। इहोभयं प्राप्नोति – प्राटिता प्राशिता। कृदन्तप्रकृतिस्वरत्वं भवति विप्रतिषेधेन। स चावश्यं विप्रतिषेधः आश्रयितव्यः।**

**अयं भावः** – पूर्वान्तवद्भावस्य कृदन्तप्रकृतिस्वरत्वमपि प्रयोजनम्। यथा – प्राटिता प्राशिता। गत्यर्थकादट्धातोरुकारेत्संज्ञकाद् व्यास्त्यर्थकादश्



धातोश्च तृचि प्रत्यये आर्धधातुकस्य तस्येडागमे प्रपूर्वकत्वात् सवर्णदीर्घे एकादेशस्य पूर्वान्तवद्भावे "गतिकारकोपपदात् कृत्" (६।२।१३९) इति कृदन्तस्योत्तर-पदस्य प्रकृतिस्वरत्वं भवति। यत्रैकादेशो नास्ति तत्र कृदन्तप्रकृतिस्वरो भवति – यथा – प्रकारकः प्रकरणमित्यत्र। कृदन्तप्रकृतिस्वरात् पूर्वमत्र (प्रकारकः प्रकणम्) लिति (६।१।१९३) इति ककाराकारौ उदात्तौ भवतः। प्राटिता प्राशिता इत्यत्र 'चितः' (६।१।६३) इति प्रकृतिप्रत्ययसमुदायस्यान्तोदात्तो भवति। ततः कृदन्त प्रकृतिस्वरो भवतीति।

(म० भा०) "कृदन्त प्रकृतिस्वरत्वं च"॥ १२॥

कृदन्तप्रकृतिस्वरत्वं च पूर्वान्तवद्भावे प्रयोजनमिति वार्तिकार्थः। तत् कृदन्तप्रकृतिस्वरत्वं च विप्रतिषेधे परं कार्यं 'बलवद्भवतीति नियमात् एकादेशा-पेक्षया' पूर्वं भवति। अत्रोभयस्य प्राप्तिरस्ति। अत्र किं कर्त्तव्यम्? कृदन्तप्रकृतिस्वरः क्रियतामाहोस्विदेकादेशः परत्वात् कृदन्तप्रकृतिस्वरत्वमेव कर्त्तव्यम् विप्रतिषेधात्। अन्यत्रान्यत्र लब्धकाशयोरेकत्रप्राप्तिः विप्रतिषेधो भवति। यथा – कृदन्तप्रकृति-स्वरस्यावकाशः – प्रकारकः प्रकरणम्। एकादेशस्यावकाशः – दण्डाग्रम् क्षुपाग्रम्। अत्रोभयोः प्राप्तिः – प्राटिता प्राशिता। परत्वात् कृदन्तप्रकृतिस्वरत्वं भवति विप्रतिषेधेन। स विप्रतिषेधोऽवश्यमेवाश्रयणीयः।

**(म० भा०) "एकादेशे ह्यप्रसिद्धिरुत्तरपदस्यापरत्वात्"॥ १३॥**

**यो हि मन्यतेऽस्त्वत्रैकादेश एकादेशे कृते कृदन्तप्रकृतिस्वरत्वं भविष्यतीति कृदन्तप्रकृतिस्वरत्वं तस्य न सिद्ध्यति किं कारणम्? उत्तर-पदस्यापरत्वात्। नहीदानीमेकादेशे कृते उत्तरपदं परं भवति। ननु चान्तादि-वद्भावेन परम्। उभयत आश्रये नान्तादिवत्।**

**अयं भावः** – यस्य मते प्राटिता प्राशिता इत्यत्रास्त्वेकादेशः। एकादेशे कृते कृदन्तप्रकृतिस्वरत्वं भविष्यतीति। तस्य मते कृदन्तप्रकृतिस्वरो न सिद्ध्यति। कृदन्तप्रकृतिस्वरविधायके "गतिकारकोपपदात् कृत्" (६।२।१३९) इति सूत्रे पूर्वोत्तरपदयोराश्रयणात्। यदि परादिवद्भावेनोत्तरपदत्वमानीयते तदा प्र इत्यत्रै-कादेशेनाकारस्यापहारात् गतित्वं नास्ति। यदि च पूर्वान्तवद्भावेन गतित्वमानीयते

तदोत्तरपदत्वं नास्ति तस्य तिरोधानात्। ननु एकदेशविकृतमनन्यवदिति न्यायेनोत्तर-पदत्वं स्यात्। तदपि न, अर्द्धाधिकविकारत्वेन तन्न्यायविषयाभावात्। 'ट्' 'श्' मात्रेणाट्धातोरश्धातोश्च प्रत्यभिज्ञानाभावात् च। एकादेशस्य परादिवद्भावो न कर्तुं शक्यते। उभयत आश्रणेनान्तादिवदिति प्रतिषेधात्।

**( म० भा० ) ''उत्तरपदवृद्धिश्चैकादेशात्''॥ १४॥**

**उत्तरपदवृद्धिश्चैकादेशाद् भवति विप्रतिषेधेन। उत्तरपदवृद्धेरव-काशः – पूर्वत्रैगर्तः अपरत्रैगर्तः। एकादेशस्यावकाशः – दण्डाग्रम् क्षुपा-ग्रम्। इहोभयं प्राप्नोति पूर्वेषुकामशमः अपरेषुकामशमः। उत्तरपदवृद्धि-र्भवति पूर्वविप्रतिषेधेन।**

**अयं भावः** – वर्णनिमित्तकत्वादेकादेशस्यान्तरङ्गत्वेन पूर्वोत्तरपदनिमि-त्तिकाया वृद्धेरपेक्षया पूर्वं प्रवर्तनीयमतो विप्रतिषेधस्यायुक्तत्वमिति निरसितुं नेन्द्रस्येति निषेधेनात्रान्तरङ्गपरिभाषाया अप्रवृत्तिबोधनायोपक्रमते भगवान् भाष्यकारः – पूर्वेषुकामशमः अपरेषुकामशमः इत्यत्रैकादेशात् पूर्वमुत्तरपदवृद्धिः परत्वात् विप्रतिषेधेन भवति। उत्तरपदवृद्धेरवकाशः – पूर्वत्रैगर्तकः अपरत्रैगर्तकः। एकादे-शस्यावकाशः – दण्डाग्रम् क्षुपाग्रम्। अत्रोभयं प्राप्नोति – पूर्वेषुकामशमः अपरेषुकामशमः। उत्तरपदवृद्धिः भवति विप्रतिषेधेन। तथाहि – पूर्वासु इषुकाम-शमीषु भवः इत्यर्थे दिक्संख्ये संज्ञायाम् (२।१।५०) इति समासे प्रातिपदिकत्वात् सुपो लुकि पुंवद्भावे अणि ''प्राचां ग्रामनगराणाम्'' (७।२।१४) इत्युत्तरपदवृद्धौ पुनर्वृद्धिरेचीति वृद्धौ भत्वादीकारलोपे स्वादिकार्ये पूर्वेषुकामः इति सिद्ध्यति। एवमपरेषुकामशमो ज्ञेयः।

**( म० भा० ) ''एकादेशप्रसङ्गस्त्वन्तरङ्गबलीयस्त्वात्''॥ १५॥**

**एकादेशस्तु प्राप्नोति। किं कारणम्? अन्तरङ्गस्य बलीयस्त्वात्। अन्तरङ्गं बलीयो भवति। तत्र को दोषः।**

**अयं भावः** – पूर्वेषुकामशमः अपरेषुकामशमः इत्यत्रान्तरङ्गमेकादेश-शास्त्रं तस्य वर्णनिमित्तकत्वात् तदपेक्षया ''प्राचां ग्रामनगराणाम्'' (७।३।१२) इत्युत्तरपदवृद्धिविधायकस्य बहिरङ्गत्वेनैकादेशशास्त्रस्य पूर्वं प्रवृत्तिः स्यात्,



तत्र दोषो विद्यते। तथा हि – सोमश्च इन्द्रश्चेति द्वन्द्वसमासे सोमेन्द्रौ इति रूपं भवति। सोमेन्द्रः देवते अस्येत्यर्थे ''सास्य देवता'' इत्यर्थेऽणि आदिवृद्धौ 'सौमेन्द्रः' इति रूपं भवति। अत्र सोम इन्द्र अ इत्यवस्थायां यदि 'देवताद्वन्द्वे च' (७।३।२१) इति वृद्धेः पूर्वमन्तरङ्गत्वादेकादेशो भवेत् तर्हि इन्द्रशब्दे द्वावचौ तत्रैक एकादेशेनापहृतः स्यादपरो ''यस्येति च'' इत्यपहृतः स्यात्। तदा देवता द्वन्द्वे चेत्यस्य प्राप्तिरेव नास्ति इदानीमिन्द्रशब्दस्यानच्कत्वात्। अतो ''नेन्द्रस्य परस्य'' (७।३।२२) इति सूत्रं निरर्थकमेव। तदेव व्यर्थीभूय विज्ञापयति – अन्तरङ्गमप्येकादेशसूत्रं वृद्धेः पूर्वं न प्रवर्तते। एतदेवाग्रिमे वार्तिके व्याख्यास्यते।

**( म० भा० ) ''तत्र वृद्धिविधानम्''॥ १६॥**

**तत्र वृद्धिर्विधेया। नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति पूर्वोत्तरपद-योस्तावत् कार्यं भवति नैकादेशः इति यदयं 'नेन्द्रस्य परस्य' (७।३।२२) इति प्रतिषेधं शास्ति। कथं कृत्वा ज्ञापकम् इन्द्रे द्वावचौ तत्रैको 'यस्येति च' (६।४।१४८) लोपेन ह्रियतेऽपर एकादेशेन। अनच्क इन्द्रः सम्पन्नः। तत्र को वृद्धेः प्रसङ्गः। पश्यति त्वाचार्यः पूर्वोत्तरपदयोस्ता-वत्कार्यं भवति नैकादेश इति ततो नेन्द्रस्य परस्येति प्रतिषेधं शास्ति।**

**अयं भावः** – अन्तरङ्गे एकादेशे कृते इन्द्रशब्दस्यानच्कत्वेन वृद्धिर्न प्राप्नोतीतिदोषः। तत्र पूर्वं वृद्धेर्विधानं कर्तव्यम्। तर्ह्यन्तरङ्गं कार्यमकृत्वा वृद्धेर्विधाने किंप्रमाणमिति चेदुच्यते – नेन्द्रस्य परस्येति वृद्धेर्निषेधेनाचार्यो विज्ञापयति – पूर्वपदोत्तरपदयोस्तावत् कार्यं भवति नैकादेशः इति। यतो हि सोम इन्द्र अ इत्यवस्थायामेकस्याकारस्यापहारः एकादेशेनापरस्याकारस्य यस्येति चेति सूत्रेण इन्द्रशब्दे द्वावचौ द्वयोपहारो जातः। तस्माद् वृद्धिरेव न प्राप्नोति, प्रतिषेधस्तस्य व्यर्थ एव। तदेव व्यर्थीभूय विज्ञापयति पूर्वोक्तं वचनम्। तस्मादेकादेशात् पूर्वं वृद्धिः प्राप्नोति तस्याः प्रतिषेधः सार्थकः।

**( म० भा० ) ''अथादिवत्त्वे कानि प्रयोजनानि''?**

**''आदिवत्त्वे प्रयोजनं प्रगृह्यसंज्ञायाम्''॥ १७॥**

**आदिवत्त्वे प्रगृह्यसंज्ञायां प्रयोजनमिति। अग्नी इति वायू इति। द्विवचनाद्विवचनयोरेकादेशो द्विवचनस्यादिवद्भवति। यथा इ क्येत कर्तु-**

**मीदूदेद्द्विवचनं प्रगृह्यम् ( १ । १ । ११ ) इति। क्व तर्हि स्यात्? यत्रैकादेशो न भवति – त्रपुणी इति जतुनी इति।**

**अयं भावः –** परादिवद्भावे कानि प्रयोजनानीति प्रश्नः। परादित्वे प्रगृह्यसंज्ञायां प्रयोजनमिति वार्तिककृत उत्तरम्। यथा – अग्नी इति वायू इति। अत्र अग्नि औ वायु औ इत्यवस्थायां "प्रथमयोः पूर्वसवर्णः" (६।१।१०२) इति पूर्वसवर्णैकादेशे कृते तत्रैकादेशेन द्विवचनस्याभावात् प्रगृह्यसंज्ञा न प्राप्नोति "ईदूदेद्द्विवचनम्" (१।१।११) इति। परादिवद्भावेन सर्वणदीर्घं प्रबाध्य प्रगृह्यसंज्ञा भवति द्विवचनपरकत्वात्। यत्रैकादेशो नास्ति तत्र प्रगृह्यसंज्ञा भवत्येव ईदूदेदिति प्रगृह्यसंज्ञा। ततः प्रकृतिभावः। त्रपुणी इति जतुनी इति। (त्रपुशब्दात् जतुशब्दाच्च औविभक्तौ नपुंसकाच्चेति श्यादेशे "इकोऽचि विभक्तौ" इति नुमि यथाप्राप्ते णत्वे त्रपुणी इति जतुनी इति।)

**( म० भा० ) "सुप्तिङाब्विधिषु प्रयोजनम्"॥ १८॥**

**सुप्तिङाब्विधिषु प्रयोजनम्। सुप् – वृक्षे तिष्ठति, प्लक्षे तिष्ठति। सुबसुपोरेकादेशः सुप आदिवद्भवति। यथा शक्येत कर्त्तुं सुबन्तं पदमिति। क्व तर्हि स्यात्? यत्रैकादेशो न भवति। वृक्षस्तिष्ठति प्लक्षस्तिष्ठति। सुप्।**

**तिङ – पचे यज इति। तिङतिङोरेकादेशस्तिङ आदिवद्भवति। यथा शक्येत कर्त्तुं तिङन्तं पदमिति। क्व तर्हि स्यात्? यत्रैकादेशो न भवति – पचति यजति। तिङ्।**

**आप् – खट्वा माला। आबनापोरेकादेश आप आदिवद्भवति। यथा शक्येत कर्त्तुमाबन्तात् सोर्लोपो भवतीति। क्व तर्हि स्यात्? यत्रैकादेशो न – "कुञ्चा उष्णिहा देवविशा।"**

**अयं भावः –** परस्यादिवद्भावे सुब्विधौ तिङ्विधौ आब्विधौ च प्रयोजनम्। तत्र सुब्विधौ – वृक्षे तिष्ठति प्लक्षे तिष्ठति। अत्र वृक्षशब्दात् प्लक्षशब्दाच्च सप्तम्येकवचने ङौ वृक्ष इ प्लक्ष इ इति स्थिते गुणे कृते एकादेशेन सुपोऽपहारात् सुप्तिङन्तं पदमिति पदसंज्ञा न प्राप्नोति। एकादेशस्यादिवद्भावे तु सुबन्तत्वात् पदसंज्ञा भवति। यथा – वृक्षस्तिष्ठति प्लक्षस्तिष्ठति। अत्र वृक्षशब्दात् प्लक्षशब्दाच्च सौ सकारस्य रुत्वे विसर्गे सत्वे च सुबन्तत्वेन पदसंज्ञा भवति। सुप्।



तिङ् – पचे यज इति। पच्धातोर्लटि तस्योत्तमपुरुषस्यैकवचने इडादेशे शपि पच इ यज इ इति स्थिते तिङतिङोरेकादेशे कृते एकादेशेन तिङोऽपहारात् तिङन्तमिति पदसंज्ञा न प्राप्नोति। एकादेशस्यादिवद्भावेन पदसंज्ञा सिद्ध्यति। यत्रैकादेशो न भवति तत्र सुप्तिङन्तं पदमिति संज्ञा भवत्येव। यथा – पचति यजति इत्यत्र। तिङ्। आप् – खट्वा माला। अत्र खट्वशब्दात् मालशब्दाच्च टापि अत्राबनापोः सवर्णैकादेशे कृते एकादेशेनापोऽपहारेणाबन्तात् सोर्लोपो न प्राप्नोति। आपः आदिवद्भावेन हल्ङ्यादिना सुलोपो भवति। यत्रैकादेशो न भवति तत्र सोर्लोपो भवत्येव। यथा – कुञ्चा उष्णिहा देवविशा। अत्र कुञ्च् उष्णिह् देवविश् इति हलन्तेभ्यः टाब्विहितः।

**( म० भा० ) "आङ्ग्रहणे पदविधौ"॥ १९॥**

**आङ्ग्रहणे पदविधौ प्रयोजनम्। अद्याहते कदाहते। आङनाङो-रेकादेश आङ आदिवद्भवति। यथा शक्येत कर्त्तुं 'माङो यमहनः" ( १। ३। २८ ) इत्यात्मनेपदं भवतीति। क्व तर्हि स्यात्? यत्रैकादेशो न – आहते।**

**अयं भावः –** वाक्यसंस्कारपक्षमादायादिवद्भावे आङ्ग्रहणे पदविधौ प्रयोजनमस्तीति वार्तिकतात्पर्यार्थः। यथा – अद्याहते कदाहते इति। अद्य आ हन् लट् इत्यवस्थायां सवर्णदीर्घे कृते "आङो यमहनः" (१।३।२८) इत्या-त्मनेपदं न प्राप्नोति। एकादेशेनाङोऽभावात्। एकादेशस्यादिवद्भावे आत्मनेपदं भवति। एवं कदा आ हन् इत्यत्रापि एकादेशे कृते तस्यादिवद्भावात् आत्मनेपदं भवति।

**( म० भा० ) "आटश्च वृद्धिविधौ"॥ २०॥**

**आटश्च वृद्धिविधौ प्रयोजनम्। अद्यैहिष्ट कदैहिष्ट। आटोऽद्य-शब्दस्य चैकादेश आट आदिवद्भवति। यथा शक्येत कर्त्तुमाटश्चाचि वृद्धिः भवतीति। क्व तर्हि स्यात्? यत्रैकादेशो न ऐहिष्ट ऐक्षिष्ट।**

**अयं भावः –** अत्रापि वाक्यसंस्कारपक्षमादायादिवद्भावे 'आटश्च' (६। १।९०) इति वृद्धेर्विधानं प्रयोजनं वार्तिके उक्तम्। तथाहि – अद्यैहिष्ट कदैहिष्ट।

इत्यत्र चेष्टार्थकात् ईह्धातोः लुङि आडागमे तप्रत्यये च्लौ तस्य सिचि इडागमे षत्वे ष्टुत्वे अद्य आईह् इषट इति स्थितेऽन्तरङ्गत्वात् वृद्धेरपेक्षया अद्य आ इत्यनयोः सवर्णदीर्घे कृते सवर्णदीर्घेणाटो विनाशात् आटश्चेतिवृद्धिर्न प्राप्नोति। एकादेशस्यादिवद्भावे आटश्चेतिवृद्धिर्भवति। अत्र वाक्यसंस्कारश्च ''परस्परसंसृष्टार्थकपदसमुदायात्मकवाक्यस्य संस्कारः।'' तेनाद्यपदस्य ईहिष्ट पदस्य च सम्बन्धः पूर्वं भवति। पदसंस्कारपक्षे च पूर्वम् ऐहिष्ट पदस्य सिद्धिं विधाय पश्चादद्यपदस्य सम्बन्धो भवति। पदसंस्कारश्च – संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसम्बन्धो भवति। पक्षेऽस्मिन् आदिवद्भावस्यावश्यकता नास्ति।

**( म० भा० ) ''कृदन्तप्रातिपदिकत्वे च''॥ २१ ॥**

**कृदन्तप्रातिपदिकत्वे च प्रयोजनम्। धारयः पारयः। कृदकृतोरेकादेशः कृत आदिवद्भवति। यथा शक्येत कर्त्तुं कृदन्तं प्रातिपदिकमिति। क्व तर्हि स्यात्? यत्रैकादेशो न – हारकः कारकः।**

**अयं भावः –** परादिवद्भावे कृदन्तप्रातिपदिकत्वे प्रयोजनम्। यथा – धारयति पारयति। अत्रावध्वंसनार्थकात् ञित्संज्ञकाद्धृधातोः णिचि वृद्धौ रपरत्वे धारि इत्यस्मात् ( धारयतीति धारयः) कर्त्रर्थे ''अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च'' (३।१।१३८) इति शप्रत्यये शित्त्वात् सार्वधातुकत्वेन शपि अनुबन्धलोपे धारि अ अ इति स्थिते गुणेऽयादेशे ''अतो गुणे'' (६।१।९७) इति कृदकृतोः पररूपेऽत्रैकादेशेन कृतोऽपहारात् 'कृत्तद्धितसमासाश्च' (१।२।४६) इति प्रातिपदिकसंज्ञा न प्राप्नोति, कृतः आदिवद्भावे प्रातिपदिकसंज्ञा भवति। एवं पारयति इति पारयः इत्यत्रापि कृदकृतोः स्थाने एकादेशे प्रातिपदिकसंज्ञा न प्राप्नोति। परादिवद्भावे कृते भवति। यत्रैकादेशो न भवति तत्र प्रातिपदिकत्वं भवत्येव। यथा – कारकः हारकः इत्यत्र।

**( म० भा० ) ''नाभ्यासादीनां ह्रस्वत्वे''॥ २२ ॥**

**अभ्यासादीनां ह्रस्वत्वे नान्तादिवद्भवतीति वक्तव्यम्। के पुनरभ्यासादयः? अभ्यासोहाम्बार्थनदीनपुंसकोपसर्जनह्रस्वत्वानि। अभ्यासह्रस्वत्वम् – उपेयाज उपोवाप। ऊहेर्ह्रस्वत्वम् – उपोह्यते प्रोह्यते परोह्यते। अम्बार्थनदीनपुंसकोपसर्जनह्रस्वत्वानि – अम्बात्र अक्कात्र। कुमारीदम् किशोरीदम्। आराशस्त्रीदम्। धानाशष्कुलीदम्। निष्कौशाम्बीदम्। निर्वाराणसीदम्। अभ्यासोहाम्बार्थनदीनपुंसकोपसर्जनग्रहणेन ग्रहणाद्ध्रस्वत्वं प्राप्नोति।**



**अयं भावः –** अभ्यासादीनां ह्रस्वत्वं प्राप्नोति तस्मादन्तादिवद्भावस्य निषेधः कर्त्तव्यः। केऽभ्यासादयः? उच्यन्ते। अभ्यासोहाम्बार्थनदीनपुंसकोपसर्जनानि। एतेषु ह्रस्वत्वं प्राप्नोति। अभ्यासस्य ह्रस्वत्वम् – उपेयाज उपोवाप। उपपूर्वकात् इण् धातोर्लिटि प्रथमपुरुषस्यैकवचने लिटि णलि द्वित्वे लिट्यभ्यासस्येति सम्प्रसारणे पूर्वरूपे उत्तरपदस्य वृद्धौ उप इयाज इति स्थिते 'आद्गुणः' (६।१।८७) इति गुणे तस्यादिवद्भावे 'ह्रस्वः' (७।४।५९) इत्येकादेशस्य ह्रस्वत्वं प्राप्नोति। तस्माद् आदिवद्भावस्य प्रतिषेधो वक्तव्यः। एवमुपोवाप इत्यत्रापि एकादेशस्योकारस्यादिवद्भावे ह्रस्वः प्राप्नोति। तस्य प्रतिषेधो वक्तव्यः। ऊहेर्ह्रस्वत्वम् – उपपूर्वकादूह्धातोः कर्मणि लटि तस्यात्मनेपदस्य प्रथमपुरुषस्यैकवचने तप्रत्यये यकि उपसर्गधात्वोरकारोकारयोः स्थाने ''आद्गुणः'' इति गुणे तस्यादिवद्भावे ''उपसर्गाद्ध्रस्व ऊहतेः'' (७।४।२३) इति ह्रस्वः प्राप्नोत्येकादेशस्य। अत आदिवद्भावस्य प्रतिषेधः कर्तव्यः। एवं प्रोह्यते परोह्यतेऽत्रापि पूर्ववद् व्याख्यानं बोद्धव्यम्। स प्रतिषेधो न वक्तव्यः। यतो ह्यन्तरङ्गलक्षणं ह्रस्वत्वम्। बहिरङ्गलक्षणा विधयः।

यद्यपि ''उपसर्गाद्ध्रस्व ऊहतेः'' इति विधीयमानस्य ह्रस्वत्वस्योपसर्गोहत्योराश्रयणात् अन्तरङ्गत्वं नास्ति किन्तु बहिरङ्गत्वमेवास्ति, तथाप्यत्रोपायान्तरेण ह्रस्वत्वं वारणीयम्। 'केऽणः' (७।४।१३) इत्यतोऽणोऽनुवर्तनात् उपेयाजेत्यादिषु ह्रस्वत्वं न भवति उपसर्गादिति सूत्रेणेति। अम्बात्र। अम्बा अत्र इति स्थितौ ''अम्बार्थनद्योर्ह्रस्वः'' (७।३।१०७) इति सम्बोधनविवक्षायां ह्रस्वे कृते ततः सवर्णदीर्घे पुनस्तस्यान्तवद्भावाद् ह्रस्वत्वं प्राप्नोति। तस्मादन्तवद्भावस्य प्रतिषेधः कर्त्तव्यः। एवमक्कात्र।

नदी – कुमारीदम् किशोरीदम्। इत्यत्र कुमारीदमत्र सम्बोधने ह्रस्वे कृते सवर्णदीर्घे कृते पूर्वान्तवद्भावेन नदीत्वमादायाम्बार्थनद्योर्ह्रस्व इति ह्रस्वत्वं प्राप्नोति। पूर्वान्तवद्भावस्य निषेधे ह्रस्वो न भवति।एवं किशोरीदम् इत्यत्रापि बोध्यम्।

आराशस्त्रीदम् धानाशष्कुलीदम्। आरा च शस्त्री चेति द्वन्द्वसमासे आरा शस्त्री अत्र 'जातिरप्राणिनाम्' (२।४।६) इत्येकवद्भावे 'स नपुंसकम्' (२।४।१७) इति नपुंसकत्वे ''ह्रस्वो नपुंसके प्रातिपदिकस्य'' (१।३।४७) इति ह्रस्वे 'आराशस्त्रि' इति भवति। इदं पदमत्र सम्बध्यते। ततः सवर्णदीर्घे तस्य पूर्वान्तवद्भावे ह्रस्वत्वं प्राप्नोति। पूर्वान्तवद्भावस्य निषेधे ह्रस्वो न भवति। एवं धानाशष्कुलि इदमपि पूर्ववद्बोध्यम्। निष्कौशाम्बीदम् निर्वाराणसीदम्। निर्गतः कौशाम्ब्याः इति विग्रहे ''निरादयः क्रान्ताद्यर्थे पञ्चम्याः'' इति वार्तिकेन समासे प्रथमानिर्दिष्टत्वेन निर् इत्यस्योपसर्जनसंज्ञायां पूर्वनिपाते सुपो लुकि ''एकविभक्ति चापूर्वनिपाते'' ''गोस्त्रियोरुपसर्जनस्य'' (१।२।४८) इति ह्रस्वे रेफस्य विसर्गे ''इदुदुपधस्य चाप्रत्ययस्य'' विसर्गस्य षत्वे स्वादिकार्ये निष्कौशाम्बिरिति। अत्र इदम्पदेन कौशाम्बीपदस्य सम्बन्धे दीर्घे तस्य पूर्वान्तवद्भावे पुनः ह्रस्वप्राप्तिः भवति। पूर्वान्तवद्भावस्य निषेधे तु पुनः ह्रस्वत्वप्राप्तिः न भवति। एवं निर्गतो वाराणस्या निर्वाराणसीदम् इत्यत्रापि पूर्ववत् प्रक्रिया आपत्तिश्च बोद्धव्ये।

**(म० भा०) ''न वा बहिरङ्गलक्षणत्वात्''॥ २३॥**

**न वैतद्वक्तव्यम्। किं कारणम्? बहिरङ्गलक्षणत्वात्। अन्तरङ्गं ह्रस्वत्वम्। बहिरङ्गा एते विधयः। असिद्धं बहिरङ्गमन्तरङ्गे।**

**अयं भावः** – यद्यपि ह्रस्वत्वस्य पूर्वोक्तेषूदाहरणेषु विद्यतेऽन्तरङ्गत्वम् ऋते उपसर्गाद्ध्रस्व इति सूत्रम्। अत्र उपसर्गोहत्योरपेक्षणात् सिद्ध्यति बहिरङ्गत्वमस्य तथापि ह्रस्वत्वप्राप्तिरूपस्य दूषणस्याणनुवृत्त्या परिहारो विहितः। अग्रिमेण वार्तिकेन भगवान् भाष्यकारो वर्णाश्रयत्वेनान्तादिवद्भावस्याभावं वक्ष्यति। अतोऽत्र नोच्यते तत्।

**(म० भा०) ''वर्णाश्रयविधौ च''॥ २४॥**

**वर्णाश्रयविधौ च नान्तादिवद्भवतीति वक्तव्यम्।**

**किं प्रयोजनम्?**

**प्रयोजनं खट्वाभिर्जुहावास्या अश्व इति॥ २५॥**



**इह खट्वाभिः अतो भिस ऐस्भवतीत्यैस्भावः प्राप्नोति। नैष दोषः। तपरकरणसामर्थ्यान्न भविष्यति। अस्त्यन्यत् तपरकरणे प्रयोजनम्। किम्? कीलालपाभिः शुभंयाभिः। जुहाव। ''आत औ णलः'' (७।१।३४) इत्यौत्वं प्राप्नोति। अस्या अश्व इति। ''एङः दान्तादति'' (६।१।१०९) इति पूर्वत्वं प्राप्नोति।**

**अयं भावः** – वर्णाश्रयविधौ च नान्तादिवद्भावो भवति। अर्थात् अन्तावयवमात्रनिबन्धनकार्येषु अन्तादिवद्भावो न भवतीत्यर्थः। कुत्रभवति चेदुच्यते – सूत्रेऽन्तादिशब्दौ एकादेशस्य स्थानिपरौ। अधिकृतपूर्वपरयोरिति विशेषणमन्तादिशब्दयोः। अत्र विशेषणविशेष्ययोर्यथासंख्यमन्वयः। अत्र पूर्वपरशब्दौ तद्घटितसमुदायपराविति। तेनायमर्थो। निर्गलति – पूर्वस्य परस्य च समुदायस्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिता ये व्यवहाराः प्रातिपदिकत्वसुबन्तत्वप्रत्ययत्वादयो व्यवहारास्ते कृतैकादेशस्य भवन्तीत्यर्थः प्रतिपादितः शब्दरत्ने शेखरग्रन्थेचेति। तस्मादन्तादिवद्भावोऽवयववाचकान्तादिशब्दाभ्यामाक्षिप्तसमुदायनिमित्तककार्यमात्रे भवतीत्यर्थः सम्पद्यते। एतदेव निरूपितन्नवाऽताद्रूप्यातिदेशादिति सूत्रेऽस्मिन्नेवान्तिमवार्तिकस्थोद्योते।

प्रयोजनम् – खट्वाभिः जुहाव अस्यै अश्वः। खट्वशब्दाट्टापि सवर्णदीर्घे तस्यान्तवद्भावाद् ''अतो भिस ऐस्'' (७।१।९) इत्यैसादेशः प्राप्नोति। ऐसादेशस्य वर्णाश्रयत्वात् पूर्वस्यान्तवद्भावो न भवति। तपरकरणादैसादेशो न भवतीति वक्तुं न शक्यते। कीलालपाभिरित्यत्र तपरकरणस्य चारितार्थ्यात्। जुहाव। अत्र स्पर्धार्थकात् शब्दार्थकाच्च ञकारेत्संज्ञकात् ह्वे धातोः लिटि तिपि णलि ''आदेच उपदेशेऽशिति'' (६।१।४५) इत्यात्वे ''अभ्यस्तस्य च'' (६।१।३३) इति वकारस्य सम्प्रसारणे ''सम्प्रसारणाच्च'' (६।१।१०८) इति पूर्वरूपेऽत्राकारस्यादिवद्भावे ''आत औ णलः'' (७।१।३४) इत्यौत्वादेशो णलः प्राप्नोति। वर्णाश्रयत्वादैस्भावो न भवति।

अस्यै अश्वः। इदम्शब्दाच्चतुर्थ्येकवचने ङेविभक्तौ त्यदादीनामः इत्यत्वे टापि सर्वनाम्नः स्याड्ढ्रस्वश्च इति स्याडागमे सर्वनाम्नो ह्रस्वे च 'वृद्धिरेचि' इति वृद्धौ हलि लोपः (७।२।११३) इतीद्भागस्य लोपे ''एचोऽयवायावः'' (६।

१।७८) इत्यैकारस्यायादेशे "लोपः शाकल्यस्य" इति यलोपे अस्या अश्व इति रूपं भवति।

अत्र "एङः पदान्तादति" (६।१।१०९) इत्यपि वर्णाश्रयत्वान्न प्रवर्तते।

**(म० भा०) "न वा तादरूप्यातिदेशात्"॥ २६॥**

**न वा वक्तव्यम्। किं कारणम्? अतादरूप्यातिदेशात्। नेह तादरूप्यमतिदिश्यते। रूपाश्रया वा एते विधयो तादरूप्यान्न भविष्यन्ति।**

**अयं भावः** – तस्य रूपं तद्रूपं तद्रूपस्य भावः तादरूप्यम्। तत्पदेन विधिसूत्रेषु वर्णमात्रनिमित्तं कार्यं यत्र भवति तत्रान्तादिवद्भावो न भवति। यथा अम्बार्थनद्योर्ह्रस्वः उपसर्गाद्ध्रस्वः = 'ऊहते:' 'गोस्त्रियोरुपसर्जनस्य' 'अतो भिस ऐस्' 'आत औ णलः' 'एङः पदान्तादति' एतेषु विधिषु कुत्रचिद्वर्णविधानं कुत्रचित् वर्णोद्देश्यकं विधानं वर्तते। अत एते विधयो वर्णमात्राश्रयाः सन्ति। तदेव वार्तिके तादरूप्यस्यान्तादिवद्भावो न जायते। उद्योताभिमतं च मयाप्रदर्शितपूर्वम्। अतो पिष्टपेषणवन्न पुनरुच्यते। अस्मिन्नर्थे ज्ञापकम् 'षत्वतुकोरसिद्धः' (६।१।८६) इति सूत्रे तुकि कर्त्तव्ये एकादेशस्यासिद्धत्वकथनम्। अधि इ य इति स्थिते सवर्णदीर्घे कृते तस्य पूर्वान्तवद्भावे ह्रस्वलाभात् तुगागमः स्यादेव। पुनः तस्य वचनं व्यर्थम्। तदेव व्यर्थीभूय विज्ञापयति वर्णाश्रयविधौ न भवत्यन्तादिवद्भाव इति।

**॥ अन्तादिवच्च॥ ६।१।८५॥**

*****

## ॥ असिद्धवदत्राभात्॥ ६।४।२२॥

अत्र **"काशिकावृत्तिः"** –

**असिद्धवदित्ययमधिकारो यदित ऊर्ध्वमनुक्रमिष्याम आ अध्यायपरिसमाप्तेस्तत् असिद्धवद्वेदितव्यम्। आभादिति विषयनिर्देशः। आभसंशब्दनात् यदुच्यते तत्र कर्त्तव्ये। अत्रेति समानाश्रयत्वप्रतिपत्त्यर्थम्। तच्चेदत्र यत्र भवति तदाभाद् शास्त्रीयं विधीयते तदाश्रयमेव भवति। व्याश्रयं तु नासिद्धवद्भवतीत्यर्थः। असिद्धवचनमुत्सर्गलक्षणभावार्थमादेशलक्षणप्रतिषेधार्थं च। एधि शाधीत्यत्र एत्वशाभावयोः कृतयोर्झल्लक्षणं धित्वं न प्राप्नोति, असिद्धत्वाद् भवति। आगहि जहीत्यत्रानुनासिकलोपे जभावे च, अतो हेरिति लुक् प्राप्नोति, असिद्धत्वान्न भवति। आभादिति किम्? अभाजि रागः। अत उपधाया इति वृद्धौ कर्त्तव्यायां नलोपो नासिद्धो भवति। अत्र ग्रहणं किम्? पपुषः पश्य। चिचुषः पश्य। लुलुवुषः पश्य। वसुसंप्रसारणमालोपे यणादेशे उवङादेशे च कर्त्तव्ये नासिद्धं भवति। आलोपादीनि वसौ, वस्वन्तस्य विभक्तौ सम्प्रसारणमिति समानाश्रयत्वं नास्ति। असिद्धं बहिरङ्गमन्तरङ्ग इति एतदप्यत्र न भवति। किं कारणम्? एषा हि परिभाषा आभाच्छास्त्रीया। तस्यां प्रवर्त्तमानायां वसुसंप्रसारणादीनामाभाच्छास्त्रीयाणामेवासिद्धत्वादन्तरङ्गबहिरङ्गयोर्युगपत् समुपस्थानं नास्तीति परिभाषा न प्रवर्त्तते। वुग्युटावुवङ्यणोः सिद्धौ भवत इति वक्तव्यम्। वुग् उवङादेशे बभूव। बभूवतुः बभुवुः। युट् यणादेशे – उपदिदीये। उपदिदीयाते। उपदिदीयिरे। आभादित्ययमभिविधावाङ्। तेन भाधिकारेऽप्यसिद्धवद्भवति॥** इति काशिकावृत्तिः॥

**"असिद्धवदत्राभात्"॥ ६।४।२२॥**

**म० भा०** – असिद्धवचनं किमर्थम्?

**अयं भावः** – व्याकरणशास्त्रस्य कार्यार्थत्वात् कार्यस्य प्राधान्यात् तस्यासिद्धत्वे आगहि जहि। गतः गतवान् इत्यत्रानुनासिकलोपे जभावे च कृते स्थानिनोऽभावात् अनुनासिकलोपजादेशयोरसिद्धत्वेऽपि तयोरानयनं न शक्यम्। 'अतो हेरि'ति हेर्लुक् प्राप्नोति। "अतो लोप" इत्यकारस्यापि लोपः प्राप्नोत्येव। एवं शाधि एधि इत्यत्रापि शादेश एत्वे च कृते झल्लक्षणं धित्वं न प्राप्नोति। देवदत्तहन्तृहतन्यायात्। अतः कार्यासिद्धत्वं पक्षं मत्वा महाभाष्ये प्रश्न उपपद्यते।

**( म० भा० ) असिद्धवचन उक्तम्॥ १॥**

**किमुक्तम्? तत्र तावदुक्तं "षत्वतुकोरसिद्धवचनमादेशलक्षण-प्रतिषेधार्थमुत्सर्गलक्षणभावार्थं चे'ति।**

**अयं भावः** – "षत्वतुकोरसिद्धः" (६। १। ८६) इति सूत्रस्थे महाभाष्ये उपर्युक्तं प्रथमं वार्तिकमस्ति। वार्तिकस्यायमभिप्रायो वर्तते – षत्वे तुकि च कर्त्तव्ये एकादेशस्यासिद्धत्वे प्रयोजनम् – कोऽसिञ्चत् योऽसिञ्चत् इत्या-देशलक्षण प्रतिषेधस्योदाहरणम्। तथाहि – को असिञ्चत् इत्यत्र "एङः पदान्ता-दति" (६।१।१०९) इत्यकारस्य पूर्वरूपे कृते कोऽसिञ्चदित्यवस्थायामिणः परत्वाद् "आदेशप्रत्यययोः" (८।३।५९) इति षत्वं प्राप्नोति। एकादेशस्या-सिद्धत्वे इणः परत्वाभावात् षत्वं न भवति। एवं योऽसिञ्चत्। उत्सर्गलक्षणभावार्थ-स्योदाहरणम् – अधीत्य प्रेत्य इति। अत्राधि इय इत्यत्र सवर्णदीर्घे कृते 'ह्रस्वस्य पिति कृति तुक्' (६।१।७१) इति ह्रस्वाभावात् तुक् न प्राप्नोति। एकादेशस्या-सिद्धत्वात् ह्रस्वस्य तुक् भवति।

**तत्रैव "तत्रोत्सर्गलक्षणाप्रसिद्धिरुत्सर्गाभावात्"॥ २॥**

अयं भावः – द्वितीयवार्तिके कार्यासिद्धत्वपक्षे दूषणमुपक्रमते भगवान् भाष्यकारः "अधीत्य प्रेत्य" इत्यत्र ह्रस्वयोः स्थाने दीर्घे कृते पुनः दीर्घस्यासिद्धत्वे कृतेऽपि ह्रस्वत्वं नास्ति। कथं तुग्भावः? तृतीये वार्तिके ह्रस्वाभावे कारणम् प्रस्तूयते। "असिद्धवचनासिद्धमिति चेन्नान्यस्यासिद्धवचनादन्यस्य भावः।" तत्र भाष्यकृत् – "न ह्यन्यासिद्धवचनादन्यस्य प्रादुर्भावो भवति। नहि देवदत्तस्य हन्तरि हते देवदत्तस्य प्रादुर्भावो भवतीति।" तस्मात् कार्यासिद्धत्वपक्षे अधीत्य



प्रेत्य इत्यत्र स्थानिवद्वचनं कर्त्तव्यम् कोऽसिञ्चदित्यत्रासिद्धत्वञ्चेति। तथाहि चतुर्थे वार्तिके उक्त – स्थानिवद्वचनानर्थक्यं शास्त्रासिद्धत्वादिति। पञ्चमे वार्तिके सिद्धान्तपक्षो व्यवस्थापितः। चतुर्थवार्तिके अधीत्य प्रेत्येत्यत्र स्थानिवद्भाव उक्तः। कोऽसिञ्चदित्यत्रासिद्धत्वमुक्तम्। कथन्नात्रापि स्थानिवत्त्वन्नोक्तम्? सत्यम्। कोऽसिञ्चदित्यत्र यदि स्थानिवद्भावः स्यात् तदा स्थानिवत्त्वे स्वाश्रयमपि कार्यं स्यात् अर्थादादेशकार्यमपि स्यात्। तच्च नेष्टम्। कोऽसिञ्चदित्यत्र स्थानिवद्भावे को असिञ्चत् इति स्थिते इणः परत्वाभावेन षत्वस्याप्राप्तेः। पूर्वरूपैकादेशेऽपि स्वाश्रयं षत्वरूपं कार्यं प्राप्नोति। अतोऽत्रासिद्धत्वमुक्तं वार्तिके। कार्यासिद्धत्वपक्षे बहुत्र दूषणानीति पञ्चमे वार्तिके – एतदेव हृदि निधाय "स्थानिवद्वचनानर्थक्यं शास्त्रासिद्धत्वात्" इति। शास्त्रासिद्धत्वपक्षे नास्ति किञ्चिदपि दूषणम्। तथाहि – अधीत्य प्रेत्य इत्यत्र अधि इय प्र इय इति स्थिते परत्वादेकादेशशास्त्रं पूर्वं तुगपेक्षया प्राप्नोति। षत्वतुकोरसिद्धः इति सवर्णदीर्घविधायकस्य शास्त्रस्यासिद्ध-त्वेन पूर्वं ह्रस्वावस्थायामेव तुकि कृते पश्चात् सवर्णदीर्घे अधीत्य इति रूपं भवति। एवं प्र इय इत्यत्रापि तुकि कर्त्तव्ये एकादेशविधायकस्य आद्गुणः (६।१।८७) इति शास्त्रस्यासिद्धत्वेन पूर्वं तुगागमे तत एकादेशे कृते प्रेत्य इति भवति। किमुक्तम्? तत्र तावदुक्तमित्यादिकस्य "षत्वतुकोरसिद्धः" इति सूत्रस्थस्य कार्यासिद्धत्व-शास्त्रासिद्धत्वपक्षावधिकृत्य कृतविश्लेषणस्य महाभाष्यस्य व्याख्यानं जातम्।

**( म० भा० ) "इहाप्यसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्ग-लक्षणभावार्थं च। आदेशलक्षणप्रतिषेधार्थं तावत् – आगहि जहि। गतः गतवानिति। अनुनासिकलोपे जभावे च कृते" ऽतोलोपः (६।४।४८) 'अतो हेः' (६।४।१०५) इति च प्राप्नोति। असिद्धत्वान्न भवति। उत्सर्गलक्षणभावार्थं च। एधि शाधीति। अस्तिशास्त्योरेत्वशाभावयोः कृतयोर्झल्लक्षणं धित्वं न प्राप्नोति। असिद्धत्वाद्भवति।**

**अयं भावः** – यथा "षत्वतुकोरसिद्धः" इति सूत्रे एकादेशस्य षत्वे तुकि च कर्त्तव्येऽसिद्धवचनम् उक्तम्। अधीत्य प्रेत्येत्यत्रादेशलक्षणप्रतिषेधार्थम् कोऽसिञ्चत् योऽसिञ्चदित्यत्रोत्सर्गलक्षणभावार्थं च। तथैव प्रकृतसूत्रेऽपि आगहि जहीत्यत्रादेशलक्षणप्रतिषेधार्थं गतः गतवानित्यत्रोत्सर्गलक्षणभावार्थं चोक्तम्।

तथाहि – आदेशलक्षणप्रतिषेधार्थं तावत् – आङ्पूर्वकाद्गम्धातोः लोटि लकारे मध्यमपुरुषस्यैकवचने सिपि सार्वधातुकत्वात् शपि तस्य 'बहुलं छन्दसि' (२।४।७३) इति लुकि सेर्हित्वे ''ङित्वादनुदात्तोपदेशझलि क्ङिति'' (६।४।३७) इति मकारस्य लोपे 'अतो हेः' (६।४।१०५) इति हेर्लुक् प्राप्नोति। आभीये हिलोपे कर्त्तव्येऽनुनासिकलोपविधायकस्यासिद्धत्वेन हेर्लोपो न भवति। एवं जहि इत्यत्रापि हन्धातोः लोटि तस्य सिपि शपि तस्य लुकि ''हन्तेर्जः'' (६।४।३६) इति जादेशेऽत्रापि जादेशस्यासिद्धत्वात् हेर्लुग्न भवति। एवं गतः गतवानित्यत्र गम्धातो क्तप्रत्यये क्तवतुप्रत्यये चानुनासिकलोपस्यासिद्धत्वात् ''अतो लोपः'' (६।४।४८) इत्यल्लोपो न भवति।

उत्सर्गलक्षणभावार्थं चासिद्धवद्वचनम्। यथा – एधि शाधि इत्यत्रास् धातोः लोटि मध्यमपुरुषस्यैकवचने सिपि शपि तस्य लुकि 'घ्वसोरेद्धावभ्यास-लोपश्च' (६।४।११९) इत्यसः सकारस्यैत्वेऽल्लोपे च ''धित्वे'' एधि इति रूपं भवति। ननु सकारस्यैत्वे कृते लक्ष्ये झल्त्वाभावात् ''हुझल्भ्यो हेर्धिः'' (६।४।१०१) इति झल्लक्षणम् धित्वं न प्राप्नोति। एत्वविधायकस्यासिद्धत्वात् झल्लक्षणं धित्वं भवति। अत्रोत्सर्गशब्दस्य वार्तिके पठितस्य यद्यपि सामान्यविधायके शास्त्रे रूढत्वं तथाप्यत्र साधर्म्यात् स्थानिपरकत्वं तस्य।

**(म०भा०) ''अथात्रग्रहणं किमर्थम्''॥ अत्रग्रहणं विषयार्थम्॥ २॥**

**विषयः प्रतिनिर्दिश्यते। अत्रैतस्मिन्नाभाच्छास्त्रे आभाच्छास्त्रमसिद्धं यथा स्यात्। इह माभूत् – अभाजि रागः उपबर्हणमिति।**

**अयं भावः** – अत्रेति पदस्य प्रयोजनं पृच्छति – अथात्र ग्रहणं किमर्थमिति। तत्र प्रश्नस्यायमाशयः यथा ''अङ्गस्येत्यादयोऽधिकारा अवध्युपादानं विनापि व्याख्यानेन विशिष्टावधयो विज्ञायन्ते, तथैवासिद्धवदधिकारोऽप्याभाद्'' विज्ञायते। अतोऽत्रेतिपदं न पठनीयं यतो ह्याभाद्ग्रहणेनैव विषयावधारणं भविष्यतीति प्रश्नस्याशयः। वार्तिककारस्याभिमतमस्ति विषयावधारणार्थमत्रेति–पदमिति।

एतस्मिन्नित्यत्रेति पदद्वयं समानार्थकमेव। अतोऽत्रेति पदस्य व्याख्यान-मेतस्मिन्निति। तस्य व्याख्यानमाभाच्छास्त्र इति। तेनाभाच्छास्त्र आभाच्छास्त्रम-



सिद्धवद्भवति समानाश्रये कर्त्तव्ये इत्यर्थो निष्पद्यते। समानाश्रयत्वं च व्याख्याना-ल्लभ्यते। तथाहि – कैयटः – ''विशिष्टो यो विषयः समानलक्षणस्तन्निर्दे-शार्थमि''ति। अत्र समानशब्द एकत्वार्थकः। लक्षणशब्दश्च निमित्तार्थकः। तेन समानमेकलक्षणनिमित्तं यस्य समानलक्षणः, तत्प्रतिपत्त्यर्थमित्यर्थः। अत्रेति पदस्य लक्ष्ये (कार्यविधायके सूत्रे) एकवाक्यत्वञ्चेत्थम् – ''अनुदात्तोपदेशवनतितनो-त्यादीनामनुनासिकलोपः झलि क्ङिति'' (६।४।३७) इति लोपो भवति स चासिद्धवद्भवति, अत्रैव झलि क्ङितिनिमित्तके आभीये कर्त्तव्ये इति। तेन समानाश्रयमसिद्धं व्याश्रयं तु सिद्धमितिवार्तिककाराणामभिमतम्। भाष्यकृतस्तूक्त-मर्थं परस्ताद् स्थापयिष्यन्ति। अत्रेति पदमहिम्नाऽभीये शास्त्रे कर्त्तव्ये आभीयं शास्त्रमसिद्धवद्भवतीत्यर्थे अभाजि रागः उपबर्हणमित्येतेषु प्रयोगेषु वृद्धौ कर्त्तव्यायां गुणे च कर्त्तव्ये आभीयशास्त्रस्यासिद्धत्वं न भवति। वृद्ध्यादीनामाभीयत्वाभावात्। तथाहि – अभाजि इत्यत्र ओकारेत्संज्ञकात् आमर्दनार्थकाद् भञ्जधातोः कर्मणि लुङि अडागमे भावकर्मणोरित्यात्मनेपदे प्रथमपुरुषस्यैकत्वविवक्षायामेकवचने तप्रत्यये च्लौ तस्य चिणि ''भञ्जेश्चिणि'' (६।४।३३) इति नकारस्य लोपे ''अत उपधायाः'' (७।२।११६) इति वृद्धौ ''चिणो लुक्'' (६।४।१०४) इति तप्रत्ययस्य लोपे अभाजि इति रूपं भवति। अभज इत इति स्थितौ नलोपानन्तरम्'त उपधायाः'' (७।२।११६) इत्यस्याभीयत्वाभावेन नलोपस्या-सिद्धत्वं न भवति। तेन वृद्धौ सत्यामिष्टं रूपं भवति। रागः इत्यत्र रज्यतेऽनेनेत्यर्थे रागार्थकाद् रञ्जधातोः करणे घञि ''घञि च भावकरणयोः'' (६।४।२७) इति नकारस्य लोपे वृद्धिविधायकस्याभीयत्वाभावात् नलोपस्यासिद्धत्वाभावात् अत उपधायाः (७।२।११६) इति वृद्धौ रागः इति भवति। उपबर्हणम् उपबर्हयति इत्यर्थे बृह धातोः णिजन्तात् ण्वुलि अकादेशे णिलोपे ''अनिदितां हल उपधायाः क्ङिति'' (६।४।२४) इति सूत्रस्थितेन बृंहेरच्यनिटि इति वार्तिकेन नलोपे ''पुगन्तलघूपधस्य च'' (७।३।८६) इति गुणे स्वादिकार्ये उपबर्हणमिति रूपं भवति। अत्र गुणविधायकस्याभीयत्वाभावेन नलोपस्यासिद्धत्वं न भवति तेन गुणे सतीष्टं रूपं भवति।

**( म० भा० ) कानि पुनरस्य योगस्य प्रयोजनानि? ''प्रयोजनं शैत्वं धित्वे''॥ ३॥**

**शाभाव एत्वं च धित्वे प्रयोजनम्। एधि शाधीति। अस्तिशास्त्योरेत्वशाभावयोः कृतयोर्झल्लक्षणं धित्वं न प्राप्नोति। असिद्धत्वाद्भवति।**

**शाभावस्तावन्न प्रयोजयति। एवं वक्ष्यामि शास् हौ शाहाविति। यत्वभूतः सकारस्तत्र साद्धित्वं ''धि च'' (८। २। २५) इति सकारस्य लोपः अथवा आ हाविति वक्ष्यामि। एवमपि सकारस्य प्राप्नोति। उपधाया इति वर्तते उपधाया आत्वे कृते साद्धित्वं ''धि चे''ति सकारलोपः। अथवा न हाविति वक्ष्यामि। तत्रैत्वे प्रतिषिद्धे साद्धित्वं ''धिचे''ति सकारलोपः। एत्वमपि लोपापवादो विज्ञास्यते न च सकारलोपः प्राप्नोति।**

**अयं भावः** – असिद्धवदत्राभादिति सूत्रस्य कानि प्रयोजनानि? तदुत्तरति वार्तिककारः – प्रयोजनं शैत्वं धित्वम् इति। अत्र शा च एत्वं च तयोः समाहारः शैत्वम्। समाहारद्वन्द्वसमासः। अर्थात् शाभाव एत्वं चास्य सूत्रस्य प्रयोजनम्। यथा शाधि एधीति। उकारेत्संज्ञकादनुशिष्टावित्यर्थकात् शास्धातोः लोटि लकारे मध्यमपुरुषस्यैकत्वविवक्षायामेकवचने सिपि शपि तस्य लुकि सेर्हित्वे 'शा हौ' (६। ४। ३५) इत्यस्य धित्वापेक्षया नित्यत्वात् पूर्वं शासः शादेशे कृते ''धि च'' (६। ४। १०१) इति झल्लक्षणं धित्वं न प्राप्नोति। शाहावित्यस्याभीयत्वेन धित्वे कर्त्तव्येऽसिद्धत्वात् धित्वं भवति। एधि इत्यत्र भुव्यर्थकादस्धातोः लोटि लकारे मध्यमपुरुषस्यैकवचने सिपि शपि तस्य लुकि सेर्हित्वे ''घ्वसोरेद्धावभ्यासलोपश्च'' (६। ४। ११९) इति परत्वात् नित्यत्वाच्चालोऽन्त्यस्येति सहायेन सकारस्येत्वेऽल्लोपेऽत्राप्येत्वविधायकस्यासिद्धवद्भावे धित्वं झल्लक्षणं भवति। इदानीमसिद्धवद्भावस्योदाहरणद्वये प्रयोजनमन्यथासाधयति भगवान् भाष्यकारः – ''शाभावस्तावन्न प्रयोजयति'' इति। ''शास् हौ'' इति सूत्रं वक्ष्यामि। शासः सकारस्य रुत्वं भोभगोअघोअपूर्वस्य योऽशि (८। ३। १७) इति रोर्यत्वे ''लोपः शाकल्यस्य'' (८। ३। १९) इति यलोपे शाहावितिनिर्देश उपपद्यते। सकारान्त आदेशे झल्लक्षणं ''हुझल्भ्यो हेर्धिः'' (६। ४। १०१) इति धित्वं भविष्यति। ''धि च'' (८। २। २५) इति सकारस्य लोपो भविष्यति। नास्त्येतस्य शाधीत्युदाहरणस्यासिद्धवद्भावः प्रयोजनम्। अथवा आहाविति सूत्रं करिष्यामि। ननु अलोऽन्त्यस्येति सहकारेण ''घ्वसोरेद्धाविति सकारस्यात्वं प्राप्नोति तत्र, अनिदितां हल उपधाया क्ङिति'' सूत्राद् उपधाया इत्यनुवर्तते तेनोपधाभूतस्याकारस्यैवात्वं भविष्यति। झल्लक्षणं धित्वं भविष्यति। सकारस्य लोपो 'धि च' इति भविष्यति। असिद्धवद्भावस्यावश्यकता नास्ति। अथवा न हाविति वदिष्यामि। तत्र ''शास इदङ्हलोः'' (६। ४। ३४) इत्यस्येत्वविधानस्य प्रतिषेधे कृते सुतरां 'शास् हि' इति विद्यमानत्वात् झल्लक्षणं धित्वं भविष्यति। धि चेति सकारस्य लोपो भविष्यति।



'एधि' अत्रापि ''श्नसोरल्लोपः'' (६।४।१११) घ्वसोरेद्धावित्यपवादः। तत्र ह्रस्वाकारस्थानिकं कार्यं लोपरूपं कार्यं श्नसोरल्लोपः इत्यस्य वर्तते घ्वसोरेद्धावित्यपि ह्रस्वाकारस्थानिकेनैत्वविधानरूपेण कार्येण भवितव्यम्। उत्सर्गसमानादेशा भवन्तीति न्यायात्। अतोऽकारस्यैत्वं भविष्यति। न च सकारस्थानिकमेत्वमिति। धि चेति सकारलोपो भविष्यति। तस्मादुदाहरणद्वये नास्ति स्थानिवद्भावस्य प्रयोजनम्।

**( म० भा० ) ''हिलोप उत्त्वे''॥ ४॥**

**हिलोप उत्त्वे प्रयोजनम्। कुर्वित्यत्र हिलोपे कृते सार्वधातुकपर उकार इत्युत्त्वं न प्राप्नोति। असिद्धत्वाद् भवति। एतदपि नास्ति प्रयोजनम्। वक्ष्यति तत्र सार्वधातुकग्रहणस्य प्रयोजनं सार्वधातुके भूतपूर्वमात्रेऽपि यथास्यादुत्त्वम्।**

**अयं भावः** – कुरु इत्यत्रोत्वविधानमसिद्धवद्भावस्य प्रयोजनमुक्तम्। तथाहि – ड्वित्संज्ञकादिञ्त्संज्ञकाच्च कृधातोः लोटि मध्यमपुरुषस्यैकवचने सिपि ''तनादिकृञ्भ्य उः'' इत्युप्रत्यये सेर्हित्वे कृ उ हि इत्यवस्थायाम् ''सार्वधातुकार्धधातुकयोः'' (७।३।८४) इति गुणे प्राप्ते ''उतश्च प्रत्ययादसंयोगपूर्वकात्'' (६।४।१०६) इति हेर्लुकि प्राप्ते परत्वाद् गुणे रपरत्वे 'अत उत् सार्वधातुके' (६।४।१०१) इत्युत्वं प्रबाध्य नित्यत्वात् उतश्चेति हेर्लुकि ततः सार्वधातुकत्वाभावादुत्वं न प्राप्नोति। हेर्लुकोऽसिद्धत्वादुत्वं भवति।

कुरु इत्युदाहरणेऽपि नास्ति प्रयोजनमसिद्धवद्भावस्य। यतो हि "अत उत्सार्वधातुके" (६।४।१०१) इति सूत्रस्थमहाभाष्यान्ते सार्वधातु ग्रहणस्य प्रयोजनं सार्वधातुके भूतपूर्वमात्रेऽपि यथास्यादुत्वमित्युक्तम्। अतोऽसिद्धवद्भावस्य कुरु इत्यत्र नास्ति प्रयोजनम्।

**( म० भा० ) तास्तिलोपेण्यणादेशा अडाडविधौ॥ ५॥**

**तलोपोऽस्तिलोप इणश्च यणादेशोऽडाड्विधौ प्रयोजनम्। अकारि ऐहीति। तलोपे कृते लुङीत्यडाटौ न प्राप्नुतः। असिद्धत्वाद्भवतः। अस्ति लोप इणश्च यणादेशः प्रयोजनम्। आयन् आसन्निति। इणस्त्योर्यणलोपयोः कृतयोरनादित्वादड् न प्राप्नोति। असिद्धत्वाद् भवति।**

**अस्तिलोपस्तावन्न प्रयोजयति। आचार्यप्रवृत्तिर्ज्ञापयति लोपादाड बलीयानिति यदयं श्नसोरल्लोपः ( ६।४।१११ ) इति तपरकरणं करोति। इण्यणादेशश्चापि न प्रयोजयति। यणादेशे योगविभागः करिष्यते। इणो यण् भवति। तत एरनेकाचः। एश्चानेकाच इणो यण् भवति। ततोऽसंयोग-पूर्वस्य यण् भवति। एरनेकाच इत्येव। सर्वेषामेव परिहारः। उपदेश इति वर्तते। तत्रोपदेशावस्थायामेवाडाटौ भवतः। आर्धधातुक इति वर्तते। अथवा लुङ्लङ्लृङ्क्ष्वडिति द्विलकारको निर्देशः – लुङादिषु लकारादिष्विति। सर्वथा ऐज्यत औप्यतेति न सिद्ध्यति। वक्ष्यत्येतदजादीनामटा सिद्धमिति।**

**अयं भावः –** तलोप अस्तिलोप इणश्च यणादेशोऽडाड्विधौ प्रयोजनम-सिद्धवद्भावस्य वर्तते। अकारि ऐहि। आसन् आयन्नित्युदाहरणानि। अकारि – कृधातोर्लुङि भावकर्मणोरित्यात्मनेपदे तप्रत्यये सार्वधातुकत्वात् प्राप्तं शपं प्रबाध्य च्लौ तस्य चिणि ऋकारस्य वृद्धौ रपरत्वे "चिणो लुक्" (६।४।१०४) इति 'त' प्रत्ययस्य लुकि सत्यत्र लुङ्लङ्लृङ्क्ष्वडुदात्तः (६।४।७१) इति लुङो लुप्तत्वाद् अडागमो न प्राप्नोति। चिणो लुगित्यस्यासिद्धत्वात् भवत्यडागमः।

ऐहि – वितर्कार्थकत्वात् ईहधातोः कर्मणि लुङि तस्यात्मनेपदस्य तप्रत्यये शपं प्रबाध्य च्लौ तस्य चिणि तप्रत्ययस्य चिणो लुगिति लुकि सत्यत्रा-"डजादीनाम्" (६।४।७२) इति सूत्रेणाडागमो न प्राप्नोति लुङ्परकत्वाभावात्।



चिणो लुगित्यस्यासिद्धवद्भावात् भवत्याडागमः। तत 'आटश्च' इति वृद्धौ सत्या 'ऐहि' इति रूपं सिद्ध्यति।

आसन् – भुव्यर्थकादस्धातोः लङि लकारे तस्य झिप्रत्यये शपि तस्य लुकि 'झोऽन्त' इति झोऽन्तादेशे श्नसोरल्लोपः (६।४।१११) इत्यकारस्य लोपे इतश्चेतीकारलोपे संयोगान्तलोपे सन् इति स्थितौ अजादित्वाभावात्। 'आडजादी-नाम्' (६।४।७२) इत्याडागमो न प्राप्नोति। अल्लोपस्यासिद्धत्वात् प्राप्ताजादित्वात् भवत्याडागमः।

आयन् – गत्यर्थकाण्णकारेत्संज्ञकात् इधातोः लङि तस्य झिप्रत्यये शपि अदिप्रभृतिभ्य इति शपो लुकि झोऽन्तादेश इकारलोपे संयोगान्तलोपे च इणो यण् (६।४।८१) इति यणि यन् इति स्थितौ अजादित्वाभावात् "आडजा-दीनामित्याडागमो न प्राप्नोति।" यणोऽसिद्धत्वात् आडागमो भवति।

आसन् – इत्यत्राल्लोपस्य सिद्धवद्भावस्य प्रयोजनं नास्ति। यतो ह्याचार्यः श्नसोरल्लोपः इत्यत्र अदिति तपरकरणं करोति, स विज्ञापयति लोपादाड्बलीयान् इति। तेन वार्णादाङ्गं बलीयः इति परिभाषया श्नसोरल्लोपः इति सूत्रमाटश्चेति वार्णमपि प्रबाध्याटः प्राग् न प्रवर्तत इति। यदि प्रागल्लोपः स्यात् तदाऽनजादित्वा-दाडागमो न स्यात्। तल्लोपनिवृत्तये तपरकरणमाचार्यो न कुर्यादिति। कृते तु तपरकरणे पूर्वमाटिकृते तपरकरणम् सार्थकम् भवति। एवञ्चेणः स्थाने यणपि नास्ति प्रयोजनम-सिद्धवद्भावस्य। कथमिति चेद्, उच्यते – 'एरनेकाचोऽसंयोगपूर्वस्य' (६।४।८२) इत्यत्र यणादेशे योगविभागः क्रियते। इणो यण् भवति। तत एरनेकाचः। एश्चानेकाच इणो यण् भवति। ततोऽसंयोगपूर्वस्य यण् भवति। एरनेकाच इत्येव। अत्रैश्चानेकाच इणो यण् भवति। आटमन्तरेणानेकाजिण् धातुर्न सम्पद्यत इति। अतः पूर्वमाडनुमीयत इति। तेनायन् इत्यत्र नित्योऽपि यण् आटः पूर्वं न प्रवर्तते। अन्योऽपि हेतुरल्लोपयणादेशाभ्याम्पूर्वमडाटौ प्रवर्तेताम् इति। यथा – "स्यसिच् .................... चिण्वदिट्च" (६।४।६२) इति सूत्रात् "लुङ्लङ्-लृङ्क्ष्वडुदात्तः" 'आडजादीनाम्' (६।४।७१, ७२) इति सूत्रयोरुपदेश-पदानुवर्तनं करिष्यते। तेन लुडाद्युपदेश एवाडाटौ भवतः। आसन् आयन् एतादृशाः प्रयोगाः सिद्ध्यन्ति। अथवा – आर्धधातुकग्रहणानुवृत्तिसामर्थ्यात् अकृतेषु लादेशेषु लब्धार्धधातुकसंज्ञायां लावस्थायामडाटौ भवतः। अथवा 'लुङ्लङ्लृङ्-

क्ष्वडुदात्त:' इत्यत्र द्विलकारको निर्देश: करिष्यते – लुङादिषु लकारादिषु इति। अस्मिन् पक्षेऽपि अकृतेषु लादेशेषु लावस्थायामेवाडाटौ भविष्यत:। अत आसन् आयन् इत्यत्रासिद्धवद्भावस्यावश्यकता नास्ति।

ननु त्रिष्वपि परिहारेषु यज्यादीनां लावस्थायां सम्प्रसारणाभावादनजादि-त्वादोटोऽभावात् अट् प्राप्नोति। तेन ऐज्यत औप्यतेति च न सिद्ध्यत:। तथाहि – यज्धातो: कर्मणि लङि आत्मनेपदस्य प्रथमपुरुषस्यैकवचने तप्रत्यये तस्य ङित्त्वात् वचिस्वपियजादीनां किति (६। १। १५) इति सम्प्रसारणे पूर्वरूपे चात्राजादित्वेनाडागमे वृद्धौ ऐज्यत इति रूपं भवति। एवं वप्धातो: लङि तप्रत्यये यकि सम्प्रसारणे पूर्वरूपे आडागमे वृद्धौ औप्यत इति भवति। यद्यत्र लावस्थायाम् लस्य कित्त्वाभावेन सम्प्रसारणं न स्यात्। सम्प्रसारणाभावेऽजादित्वाभावादाडागमो न स्यात्। अत उक्तं रूपद्वयं न भवति। भविष्यति रूपद्वयम्। 'न माङ्योगे' (६। ४। ७४) इति वक्ष्यति "अजादीनामटासिद्धम् वृद्ध्यर्थं चेदट:" इति। अर्थात् अजादित्वाभावादटासिद्धम् वृद्ध्यर्थमटश्चेति कर्त्तव्यमिति।

**( म० भा ) "अनुनासिकलोपो हिलोपाल्लोपयोर्जभावश्च"॥ ६॥**

**अनुनासिकलोपो हिलोपाल्लोपयोर्जभावश्च प्रयोजनम्। आगहि जहि। गत: गतवानिति। अनुनासिकलोपे कृते जभावे चातोहेरतो लोप इति च लोप: प्राप्नोति। असिद्धत्वान्न भवति।**

**अयं भाव: –** हिलोपाल्लोपयो: कर्त्तव्ययोरनुनासिकलोपो जभावश्चासिद्ध-त्वे प्रयोजनम्। तथाहि – आगहि जहि इत्यत्राङ्पूर्वकाद्गम्धातो: हन्धातोश्च लोटि लकारे मध्यमपुरुषस्यैकवचने सिपि शपि तस्य लुकि सेर्ह्यादेशे आगम् हि, हन् हि इत्यत्र गम्धातोर्मकारस्य लोपे हन्धातो: "हन्तेर्ज:" (६। ४। ३६) इति जादेशे कृत उभयत्रादन्तत्वेन "अतो हे:" (६। ४। २२) इति हेर्लुक् प्राप्नोति। तत्र, आगहि इत्यत्र कृतस्यानुनासिकलोपस्य जहि इत्यत्र कृतस्य जभावस्यासिद्धवदत्राभात् (६। ४। २२) इत्यसिद्धत्वात् न प्राप्नोति हेर्लुक्। एवं गत: गतवान् इत्यत्रापि अनुनासिकलोपे तस्यासिद्धत्वेनातो लोपो न प्राप्नोति।

**( म० भा० ) अनुनासिकलोपस्तावन्न प्रयोजयति। अल्लोप उपदेश इति वर्तते। यद्युपदेश इति वर्तते धिनुत: कृणुत: अत्र न प्राप्नोति। नैष**



**दोष:। नोपदेशग्रहणेन प्रकृतिरभिसम्बध्यते। किं तर्हि? आर्धधातुकमभि-सम्बध्यते आर्धधातुकोपदेशे यदकारान्तमिति। जभावश्चापि न प्रयोजयति। हिलोपे योगविभाग: करिष्यते। 'अतो हे:' तत उतश्च। उतश्च हेर्लुग् भवतीति। तत: प्रत्ययादित्युभयो: शेष:।**

**अयं भाव: –** गत: गतवान् इत्यत्रानुनासिकलोपस्यासिद्धत्वे प्रयोजनं नास्ति। यतो हि "अतो लोप:" (६। ४। ४८) इत्यत्र "स्यसिच्सीयुजिति" (६। ४। ६२) सूत्रादुपदेश इतिपदमनुवर्तते। तेन प्रकृति: सम्बध्यते यस्यार्थो भवति – उपदेशे विद्यमानाद् अकारान्ताद्धातोरार्धधातुके परतोऽल्लोपो भवतीति। अस्मिन्नर्थे गत: गतवानित्यत्रोपदेशावस्थायामकारान्तत्वं नास्ति। अतोऽत्रासिद्धत्वस्य प्रयोजनं नास्ति। तथाप्यस्मिन्नर्थे धिनुत: कृणुत: इत्यत्राल्लोपो न प्राप्नोति। यतो हि धिनुत: कृणुत: इत्यत्रोपदेशावस्थायामकारान्तत्वं नास्ति। अतोऽल्लोपस्यात्र प्राप्तिर्नास्ति। तस्मादार्धधातुकेन सहोपदेशस्य सम्बन्ध: करिष्यते। अर्थादार्धधातुकोपदेशकाले यदकारान्तमङ्गं तस्यार्धधातुके परतो लोपो भवतीति सूत्रार्थ:। अतो "धिन्विकृण्व्योर च" (३। १। ८०) इत्युप्रत्ययसन्नियोगेन वकारस्थानेऽकारस्य विधानादकारान्तत्वं धिनुत: कृणुत: इत्यत्रार्धधातुकोपदेशकाले भवतीति सिद्ध्यत्यल्लोप:। तस्य पर-निमित्तकत्वेन "अच: परस्मिन् पूर्वविधा"विति स्थानिवत्त्वेन अकारस्य व्यवधाने-नेगुपधत्वाभावात् "पुगन्तलघूपधस्य च" (७। ३। ८६) इति गुणो न भवति धिनुत: कृणुत इत्यत्र। आगहि – अत्रार्धधातुकत्वाभावेऽतोलोप इत्यस्य प्राप्तिर्नास्ति।

जभावश्चाप्यसिद्धत्वं न प्रयोजयति। यतो हि तदसिद्धत्वकार्यमन्यथा सिद्ध्यति। तथाहि – अष्टाध्याय्यां सूत्रक्रमश्चेत्थम् – अतो हे: (६। ४। १०५) उतश्च प्रत्ययादसंयोगपूर्वाद् (६। ४। १०६) एतयोर्योगविभागश्चेत्थम् – अतो हे:। तत उतश्च। तत: प्रत्ययात्। प्रत्ययादित्युभयोर्विशेषणम्। अर्थात् प्रत्य-यादिति पदं लुग्विधायके अतो हेरित्यत्रापि सम्बध्यते। तेनायमर्थो निर्गलति – अदन्तात् प्रत्ययाद् हेर्लुग्भवतीति। जहि इत्यत्राकारान्तप्रत्यस्याभावात् अतो हेरित्यस्य प्राप्तिर्नास्ति। अतोऽसिद्धत्वस्येदं प्रयोजनं न भवितुमर्हति। तत उतश्चेति विभागस्यार्थ: सिद्धान्तकौमुद्यादिषु यथार्थ: उक्त: स एव स्वीकरणीय:।

**( म० भा० ) "अथ किमर्थमनुनासिकलोपो हिलोपाल्लोपयोर्ज-भावश्चेत्युच्यते नानुनासिकलोपजभावाल्लोपहिलोपयोरित्येवोच्येत। संख्या-**

**तानुदेशो माभूदिति। अनुनासिकलोपो हिलोपे प्रयोजयति। मण्डूकिताभिरागहि। रोहिदश्व इहागहि। मरुद्भिरग्न आगहि।''**

**अयं भावः** – षष्ठे वार्तिके – अनुनासिकलोपो हिलोपाल्लोपयोर्जभावश्चेत्युच्यते। तत्र ईदृशेन पाठेन भाष्यम् – अनुनासिकलोपजभावाल्लोपहिलोपयोरिति। तत्र यथासंख्यमनुदेशः समानाम् (२।३।१०) इति परिभाषाशास्त्रेणाल्लोपेऽनुनासिकलोपोऽसिद्धत्वे प्रयोजनम्। हिलोपे जभावश्चासिद्धत्वे प्रयोजनमित्यर्थः संख्यातानुदेशे सम्भवेत्। स च नेष्टः। यतो हि हिलोपेऽनुनासिकलोपोऽसिद्धत्वे प्रयोजनमस्ति। यथा – मण्डूकिताभिरागहि। रोहिदश्व इहागहि। मरुद्भिरग्न आगहि। एतान्युदाहरणानि क्रमशः (यजुर्वेदस्य ११।७२) (मैत्रायणी संहि० २७।७) (ऋ० सं० १।१८) प्राप्नुवन्ति। उदाहरणत्रये आगहि इति प्रयोगे हिलोपेऽनुनासिकलोपोऽसिद्धत्वे प्रयोजनमस्ति। तथाहि – आङ्पूर्वकाद्गम्धातोः लोटि लकारे मध्यमपुरुषस्यैकवचने सिपि तस्य हित्वे शपि तस्य ''बहुलं छन्दसि'' (२।४।७३) इति लुकि। अनुदात्तोपदेशेत्यादिना मकारलोपे अतो हेरिति हेर्लोपे प्राप्तेऽनुनासिकलोपस्याभीयत्वेनासिद्धत्वात् हिलोपो निवार्यते। अत एव वार्तिके यथासंख्यमिति वारयितुम् अनुनासिकलोपो जभावश्चेत्यसमस्तनिर्देशः कृतोऽस्ति।

**(म० भा०) ''सम्प्रसारणमवर्णलोपे''॥ ७॥**

**संप्रसारणमवर्णलोपे प्रयोजनम्। मघोनः पश्य। मघोने मघोने। सम्प्रसारणे कृते यस्येति लोपः प्राप्नोति। असिद्धत्वान्न भवति। नैतदस्ति प्रयोजनम्। वक्ष्यत्येतन्मघवन्शब्दोऽव्युत्पन्नं इति प्रातिपदिकमिति।**

**अयं भावः** – अवर्णलोपे कर्त्तव्ये सम्प्रसारणस्यासिद्धत्वं प्रयोजनम्। तथाहि – मघमस्यास्तीत्यर्थे ''च्छन्दसीवनिपौ'' इति वनिपि प्रत्यये सति मघवन् शब्दो निष्पद्यते। मघवन्शब्दात् शसि विभक्तौ भत्वे ''श्वयुवमघोनामतद्धिते'' (६।४।१३३) इति वकारस्य सम्प्रसारणे ''मघ उ अन् अस्'' इति स्थितौ यस्येति च (६।४।१४८) इति मघ इत्यस्य घकारोत्तरवर्तिनोऽकारस्य लोपः प्राप्नोति। सम्प्रसारणस्याभीयत्वेन यस्येतिचेत्याभीयेकर्त्तव्ये तस्यासिद्धत्वात् अल्लोपो न भवति। ननु नास्त्येदमुदाहरणमसिद्धत्वस्य, तस्यान्यथासिद्धत्वात्। कथमिति चेदुच्यते – सम्प्रसारणस्य विभक्तिसापेक्षत्वेनाल्लोपस्यान्तरङ्गत्वाद् ''असिद्धं



बहिरङ्गमन्तरङ्गे'' इति परिभाषया बहिरङ्गस्य सम्प्रसारणस्यासिद्धत्वं स्यादिति तन्न। एषा हि परिभाषा 'वाह् अठ्' (६।४।१३२) इति सूत्रज्ञापितत्वादाभाच्छास्त्रीया, तस्यां प्रवर्तमानाकारलोपसम्प्रसारणयोरसिद्धत्वादन्तरङ्गबहिरङ्गयोः युगपदनुपस्थानान्नासिद्धत्वं सम्प्रसारणस्य। भस्येत्यधिकाराद् यस्येति चेति लोपस्याचोरानन्तर्याश्रयत्वेन नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिरिति परिभाषया तन्निषेधाद्वा बहिरङ्गपरिभाषाया अत्र प्रवर्त्तनं भवति। सम्प्रसारणस्य विभक्तिनिमित्तकत्वेनाल्लोपस्य च तद्धितानिमित्तकत्वेन व्याश्रयत्वादसिद्धत्वं न स्यादिति भगवान् भाष्यकारो मघवन् शब्दोऽव्युत्पन्नं प्रातिपदिकमिति स्वीकृत्य सिद्धत्वस्य प्रयोजनं निराकरोति। एवं च तद्धिते विधीयमानोऽकारलोपो न भवतीति।

**(म० भा०) ''रेभाव आल्लोपे''॥ ८॥**

**रेभाव आल्लोपे प्रयोजनम्। किंस्विद्गर्भं प्रथमं दध्र आपः। रेभावे कृते ''आतो लोप इटि च'' (६।४।६४) इत्याकारलोपो न प्राप्नोति। असिद्धत्वाद् भवति। एतदपि नास्ति प्रयोजनम्। छान्दसोरेभावो लिट् चच्छन्दसि सार्वधातुकमपि भवति।**

**अयं भावः** – आल्लोपे कर्त्तव्ये रेभावस्यासिद्धत्वं प्रयोजनम्। तथाहि – किंस्विद्गर्भं दध्र आपः इति वैदिक उदाहरणे दध्रे इति प्रयोगे रेभावस्यासिद्धत्वे प्रयोजनं विद्यते। धारणपोषणार्थकधाधातोः लिटि लकारे प्रथमपुरुषस्य बहुवचने 'झ' प्रत्यये तस्य लिटस्तझयोरेशिरेच् (३।४।८१) इति इरेजादेशं प्रबाध्य ''दूरयोरे'' (६।४।७६) इति रेभावेकृते द्वित्वे अभ्यासकार्ये दधारे इति स्थिते ''आतो लोप इटि चे'' ति लोपो न प्राप्नोति दीर्घाकारस्य आभीयत्वेन रेभावस्यासिद्धत्वं भवति। तेनाकारस्य लोपो भवति।

एतदपि नास्त्यसिद्धत्वस्य प्रयोजनम्। यतो हि रेभावश्छान्दसः। ''लिट् च'' (६।४।११५) इतिच्छन्दसि लिट् सार्वधातुकमपि भवति। तत्र ''सार्वधातुकमपित्'' इति पिद्भिन्नस्य लिटः सार्वधातुकस्य ङिद्वद्भवति। तस्मात् ''श्नाभ्यस्तयोरातः'' (६।४।११२) इति सूत्रेणाकारलोपो भवति। नास्त्येतदुदाहरणमसिद्धत्वस्य प्रयोजनम्।

**( म० भा० ) यदि तर्ह्ययं योगो नारभ्यते –**

**उत्तु कथमोर्विनिवृत्तौ – इह कुर्वः कुर्मः कुर्यादित्युकारलोपे सार्वधातुकपर उकार इत्युत्त्वं न प्राप्नोति। णेरपि चेटि कथं विनिवृत्तिः – इह चकारयतेः करिष्यते णेरनिटि ( ६। ४। ५१ ) इति णिलोपो न प्राप्नोति। अब्रुवतस्तव योगमिम् स्याल्लुक्क चिणोऽनुकथं न तरस्य॥ इह च अकारितराम् अहारितरामिति चिण उत्तरस्य तरस्य लुक्कथं न स्यात्। च भगवान्कृतवांस्तु तदर्थं तेन भवेदिटि णेर्विनिवृत्तिः। इह स्यसिच्सीयुट्-तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ( ६।४।६२ ) किं च? णिलोपश्च।**

**म्वोरपि ये च तथाप्यनुवृत्तौ – इहापि कुर्वः कुर्मः कुर्यादिति म्वो ये चेत्येतदप्यनुवर्तिष्यते। चिण्लुकि च क्ङित एव हि लुक् स्यात् – चिण्लुक्यपि प्रकृतं क्ङिद्ग्रहणमनुवर्त्तते। क्व प्रकृतम्? ''गमहनजनखन-घसां लोपः क्ङित्यनङि'' ( ६। ४। ९८ ) इति। तद्वै सप्तमीनिर्दिष्टं षष्ठीनि-र्दिष्टं न चेहार्थः। चिण इत्येषा पञ्चमी क्ङितीति सप्तम्याः षष्ठीं प्रकल्पयि-ष्यति 'तस्मादित्युत्तरस्य' ( १। १। ६७ ) इति।**

**अयं भावः –** असिद्धत्वे यानि प्रयोजनानि वार्तिकेषूक्तानि तानि भगवता निराकृतानि। श्लोकवार्तिककारोऽपि श्लोकद्वयोः प्रथमश्लोकेन प्रश्नान् उत्थाप्य द्वितीयेन श्लोकेन समादधति। तत्र प्रथमश्लोकस्य प्रथमपादस्यायं भावः – सूत्रप्रत्या-ख्यानपक्षे कुर्वः कुर्मः कुर्यादित्यत्र ''नित्यं करोतेः'' 'ये च' (६। ४। १०८, १०९) इत्युकारलोपे सति सार्वधातुकपर उकार अकारस्योत्त्वं स्यादित्यर्थकेन ''अत उत् सार्वधातुके'' (६।४।११०) इति सूत्रेणोत्त्वं न प्राप्नोति। यदि सार्व-धातुके परे इत्यर्थः क्रियते तर्हि कुरुतः इत्यत्रोत्त्वं न स्यात् विकरणस्य व्यवधानात्। यद्यप्यत्र परत्वाद् गुणे कृते तत उलोपे अनादिष्टादचः पूर्वस्य विधौ कर्त्तव्ये तल्लोपस्याचः परस्मिन् पूर्वविधौ इति स्थानिवद्भावे सार्वधातुकपर उकार इत्यर्थेऽपि न दोषस्तथापि भाष्यकारैः स्थानिवद्भावो नाश्रितः द्वितीयश्लोके समाधानं करिष्यते।

इदानीं प्रथमश्लोकस्य द्वितीयपादस्याभिप्रायश्चेत्थम् – कारिष्यते इत्यत्र ण्यन्तात् कारि इत्स्मात् कर्मणि लृटि लकारे प्रथमपुरुषस्यैकवचने 'त' प्रत्यये



सार्वधातुकत्वात् शपं प्रबाध्य स्यप्रत्यये स्यसिच्सीयुडित्यादिना चिण्वदिटि कृते 'णेरनिटि' (६।४।५१) इति णिलोपो न प्राप्नोति।

प्रथमश्लोकस्य तृतीयचतुर्थपादयोर्भावश्चेत्थम् –

भाष्यकारस्य मते प्रत्याख्यातेऽसिद्धवदिति सूत्रेऽकारितराम् अहारितराम् इत्यत्र कृहृधातुभ्यां कर्मणि लुङि लकारे आत्मनेपदे तप्रत्यये च्लौ तस्य ''चिण् भावकर्मणोः'' इचि चिणादेशे वृद्धौ अडागमे द्वयोरेकस्य निर्धारणार्थो ''द्विवचन-विभज्योपपदे तरबीयसुनौ'' (५।३।५७) इति तरपि ''किमेत्तिङव्ययघादा-म्बद्रव्यप्रकर्षे'' (५।४।११) इति क्रियागुणप्रकर्षे आमुप्रत्यये (मकारपरित्राणार्थ उकारानुबन्धः।) ततः चिणो लुक् (६।४।१०४) इति तलोपे पुनः तरामित्यस्यापि चिण उत्तरवर्तित्वेन लोपः कथन्नेति भावः। द्वितीयश्लोके प्रयोजनं निराकरोति। तथाहि – स्यसिच्सीयुट्तासिष्विति सूत्रे चिण्वदिट् चेति चकारबलेन णेर्लोपो भविष्यति। तेन कारिष्यते इत्यत्र नास्ति णिलोपाप्राप्तिदोषः।

कुर्वः कुर्मः कुर्यादित्यत्रोत्त्वविधानाय पूर्वोक्ताद्भिन्नोऽर्थः करिष्यते।'अत उत् सार्वधातुके' (६।४।११०) इत्यत्र लोपश्चास्यान्तरस्यां म्वोः (६।४।१०७) इति सूत्राद् म्वोः इत्यस्य 'ये च' (६।४।१०९) इति सूत्राद् ये इत्यस्य चानुवृत्तिं विधायाङ्गाधिकारत्वेन अङ्गस्येति स्थानषष्ठ्या निमित्त इत्यध्याहारेणाङ्ग-निमित्ते मकारवकारयकारादिषु परम् उत्त्वं स्यादित्यर्थकरणेनोत्त्वं भविष्यति। चिणो लुक् इत्यत्रापि ''गमहनजनखनघसां लोपः क्ङित्यनङि'' (६।४।९८) इति सूत्राद् क्ङिद्ग्रहणमनुवर्तिष्यते। ननु किङति पदं सप्तम्यन्तमत्रावश्यकमस्ति षष्ठ्यन्त-स्य पदस्येति चेत्, सत्यम्। चिण इत्यत्र पञ्चमीविभक्तिं विलोक्य 'तस्मादित्युत्तरस्य' (१।१।६७) इति परिभाषोपतिष्ठते। अत्रैषाऽव्यवहितांशमुत्तरांशं चोपस्थाप्य क्ङितीति सप्तम्याः षष्ठीं प्रकल्पयिष्यते। तेन तरामित्यस्य क्ङित्त्वाभावात् तस्य लोपो न प्राप्नोति।

अन्ते श्लोकद्वयस्य सङ्ग्रहः –

''उत्तु कृञः कथमोर्विनिवृत्तौ, णेरपि चेटि कथं विनिवृत्तिः।
अब्रुवतस्तव योगमिमं स्याल्लुक्क चिणोऽनु कथं न तरस्य॥
चं भगवान् कृतवांस्तु तदर्थं तेन भवेदिटि णेर्विनिवृत्तिः।
म्वोरपि ये च तथाप्यनुवृत्तौ चिण् लुकि च क्ङित एव हि लुक्स्यात्॥'' इति।

**( म० भा० ) आरभ्यमाणेऽप्येतस्मिन् योगे –**

**सिद्धं वसुसम्प्रसारणमज्विधौ ॥ ९ ॥**

**वसोः सम्प्रसारणमज्विधौ सिद्धं वक्तव्यम्। किं प्रयोजनम्। पपुषः पश्य। तस्थुषः पश्य। निन्युषः पश्य। चिच्युषः पश्य। लुलुवुषः पश्य। पुपुवुषः पश्येति। वसोः सम्प्रसारणे कृतेऽचीत्याकारलोपादीनि यथा स्युरिति।**

**किं पुनः कारणं न सिद्ध्यन्ति?**

**''बहिरङ्गलक्षणत्वात् सिद्धत्वाच्च''॥ १० ॥**

**बहिरङ्गलक्षणं चैव हि वसुसम्प्रसारणमसिद्धत्वं च।**

**अयं भावः –** वसोः सम्प्रसारणे कृतेऽज्विधौ कर्त्तव्ये सम्प्रसारणं सिद्धं वक्तव्यम्। तेन पपुषः पश्य तस्थुषःपश्य। निन्युषः पश्य। चिच्युषः पश्य। लुलुवुषः पश्य। पुपुवुषः पश्येति प्रयोगाः सिद्ध्यन्ति। सम्प्रसारणस्याभीयस्याज्विधिषु कर्त्तव्येषु तस्यासिद्धत्वे न सिद्ध्यन्ति। तथाहि – पपुषः पश्येत्यत्र पानार्थकात् पाधातोः लिटि तस्य 'क्वसुश्च' (३।२।१०६) इति छन्दसि लिटः क्वसुरित्यादेशे पाधातोः द्वित्वेऽभ्यासकार्ये (प पावस्) प्रातिपदिकत्वात् शसि। 'वसोः सम्प्रसारणम्' (६।४।१३१) इति सम्प्रसारणे तस्य सिद्धत्वे ''आतो लोप इटि च'' (६।४।६४) इति पाधातोराकास्य लोपे पूर्वरूपे षत्वे विभक्तिकार्ये पपुषः पश्येति रूपं भवति। एवं तस्थुषः पश्येत्यत्रापि गतिनिवृत्तार्थकाद् स्थाधातोः लिटि क्वसौ द्वित्वे ह्रस्वत्वे हलादिशेषे खयः शेषत्वे तस्था वस् इत्यत्र शसि सम्प्रसारणे तस्य सिद्धत्वात् आकारलोपे पूर्वरूपे षत्वे विभक्तिकार्ये तस्थुष इति रूपसिद्धिर्भवति। निन्युषः पश्येत्यत्र प्रापणार्थकाद् ञकारेत्संज्ञकाद् णीधातोः णस्य नत्वे लिटि तस्य क्वसौ द्वित्वेऽभ्यासकार्ये प्रातिपदिकत्वे शसि सम्प्रसारणे ''एरनेकाचोऽसंयोग-पूर्वस्य'' (६।४।८२) इति यणि पूर्वरूपे षत्वे विभक्तिकार्ये निन्युषः पश्येति रूपं भवति। अत्र सम्प्रसारणस्य सिद्धत्वेऽज्परकत्वे यण् भवति। सम्प्रसारणस्यासिद्धत्वे यण् न स्यात्। एवं चिच्युषः पश्येत्यत्रापि चयनार्थकात् ञकारेत्संज्ञकात् लिटि तस्य क्वसौ द्वित्वेऽभ्यासकार्ये शसि सम्प्रसारणे तस्य सिद्धत्वात् 'एरनेकाचः' इति यण् भवति। अन्यथा यण् न स्यात्।



लुलुवुषः पश्येत्यत्र छेदनार्थकाद् ञकारेत्संज्ञकाद् लूधातोः लिटि तस्य क्वसौ द्वित्वेऽभ्यासकार्ये शसि सम्प्रसारणे तस्य सिद्धत्वात् ''अचिश्नुधातुभ्रुवां य्वोरियङुवङौ'' (६।४।७७) इत्युवङादेशे पूर्वरूपे षत्वे विभक्तिकार्ये लुलुवुषः इति रूपं भवति। एवं पुपुवुषः पश्येत्यत्रापि पवनार्थकात् ञकारेत्संज्ञकात् पूधातो-र्लिटि क्वसौ द्वित्वादिकार्ये शसि सम्प्रसारणे तस्य सिद्धत्वेऽचिश्नुधातुभ्रुवामिति सूत्रेणोवङादेशे पूर्वरूपे षत्वे वर्णसम्मेलने विभक्तिकार्ये पुपुवुषः पश्येति प्रयोगो भवति। किं कारणमस्ति येनैतानि रूपाणि न सिद्ध्यन्ति? वार्तिकारो वदति। बहिरङ्गलक्षणत्वादसिद्धत्वाच्चेति। अर्थाद्वसावाकारलोपादीनि वस्वन्तनिमित्तकानि सम्प्रसारणं च तद्बहिर्भूतं विभक्तिनिमित्तकमपेक्षते। अतः सम्प्रसारणमसिद्धं बहिरङ्गमन्तरङ्गे इति परिभाषयाकारलोपादिषु कर्त्तव्येष्वसिद्धं स्यात्।

एवं च सम्प्रसारणस्याभीयत्वेन तत्कृतेषु आभीयेषु आकारलोपादिषु कर्त्तव्येषु तस्यासिद्धत्वं भवति। अतः पपुषः पश्येत्यादीनि रूपाणि न सिद्ध्यन्ति।

**( म० भा० ) ''यलोपाल्लोपयोः पशुषो न वाजान् चाखायिता चाखायितुम्''॥ ११ ॥**

**आत्वं यलोपाल्लोपयोः सिद्धं वक्तव्यम्। किं प्रयोजनम्? पशुषो न वाजान्। पशुष इत्यात्त्वस्यासिद्धत्वादातो धातोः ( ६।४।१४० ) इत्या-कारलोपो न प्राप्नोति। चाख्यायिता चाख्यायितुमित्यात्त्वस्यासिद्धत्वाद्य ''स्यहलः'' ( ६।४।४९ ) इति यलोपः प्राप्नोति।**

**अयं भावः –** यलोपे आल्लोपे च कर्त्तव्ये आत्वं सिद्धं वक्तव्यम्। आल्लोपे यथा – पशुषो न वाजान् इति। तथाहि पशुं सनोतीत्यर्थे ''जनसनखनक्रम-गमो विट्'' (३।२।६७) इति विटि तस्य सर्वापहारिलोपे ''विड्वनोरनु-नासिकस्यात्'' (६।४।४१) इतिनकारस्यात्वे सवर्णदीर्घे उपपदसमासे तस्य प्रातिपदिकत्वे सुपो लुकि विभक्तिकार्ये कृते पशुषः इति प्रथमाया एकवचने रूपम्। द्वितीयायाः बहुवचने शसि पशुष आ अस् इति स्थते भसंज्ञायाम् ''आतो धातोः'' (६।४।१४०) इत्याकारलोपो न प्राप्नोति अनुनासिकस्थानिकस्यात्त्व-स्यासिद्धत्वात्। अत आत्त्वस्य सिद्धत्वं वक्तव्यम्। ततः सवर्णदीर्घे वर्णसम्मेलने सकारस्य रुत्वे विसर्गे च पशुषः इति रूपं भवति।

चाखायिता चाखायितुमित्यत्र विदारणार्थकात् खन्धातोः यङि द्वित्वा-पेक्षया परत्वात् विड्वनोरनुनासिकस्यादित्यात्वे ततो द्वित्वे तृचि प्रत्यये कृते चाखा-यितेति रूपं भवति। अत्र "यस्य हलः" (६।४।४९) इत्याभीये यलोपे कर्त्तव्ये कृतस्यात्त्वस्याभीयस्यासिद्धत्वात् यलोपः प्राप्नोति, यस्य हल्परकत्वात्। अत आत्त्वस्य सिद्धत्वे वक्तव्ये यलोपो न भवति। एवं चाखायितुमित्यत्रापि कृतस्यात्त्वस्यासिद्धत्वाद् यस्य हलः इति यलोपः प्राप्नोति। अत्राप्यात्त्वस्य सिद्धत्वं वक्तव्यमिति।

**(म० भा०) "समानाश्रयवचनात्सिद्धम्"॥ १२॥**

**समानाश्रयमसिद्धं भवति, व्याश्रयं चैतत्। इह तावत् पपुषः पश्य तस्थुषः पश्य। निन्युषः पश्य चिच्युषः पश्य। लुलुवुषः पश्य पुपुवुषः पश्येति वसावाकारलोपादीनि वस्वन्तस्य, विभक्तौ सम्प्रसारणम्। पशुष इति विट्यात्वं तिङन्तस्य, विभक्तावाकारलोपः। चाखायिता चाखायितुमिति यङ्यात्त्वं यङन्तस्य, चार्धधातुके लोप इति। किं वक्तव्यमेतत्? नहि। कथमनुच्यमानं गंस्यते? अत्र ग्रहणसामर्थ्यात्। ननु चान्यदत्र ग्रहणस्य प्रयोजनमुक्तम्। किमुक्तम्? अत्र ग्रहणं विषयार्थमिति। अधिकारादप्येतत् सिद्धम्।**

**अयं भावः –** कृतकार्यस्याभीयस्य यस्मिन्नाभीये कर्त्तव्ये च तुल्यनि-मित्तकत्वं भवति तत्रैव कृतकार्यस्याभीयस्यासिद्धत्वं भवति। यत्रोभयोः व्याश्रयत्वं = विभिन्नाश्रयत्वं भवति, तत्रासिद्धत्वं न भवति। यथा – पपुषः पश्य तस्थुषः पश्य निन्युषः पश्य चिच्युषः पश्य लुलुवुषः पश्य पुपुवुषः पश्येत्यत्राकारलोप-यणियङुवङानि वस्वन्तनिमित्तकानि सन्ति। सम्प्रसारणं विभक्तिनिमित्तकमस्ति। अतोऽत्रासिद्धत्वं न भवति। तेन सम्प्रसारणस्य सिद्धत्वं न वक्तव्यम्। एवं च पशुष इत्यत्रात्वं विट्यन्तनिमित्तं विभक्तिनिमित्तकश्चाकारलोपः। चाखायिता चाखायितुमिति आत्त्वं यङन्तनिमित्तकं, यलोपश्चार्धधातुकनिमित्तकम्। तेनोभयो-र्व्याश्रयत्वात् न भवत्यसिद्धत्वम्। अतोऽत्रापि सिद्धत्वकथनस्यावश्यकता नास्ति। ननु व्याश्रयत्वं वक्तव्यम्? न वक्तव्यम्। कथं वचनं विना तत् प्राप्नोति? सूत्रेऽत्रेति पदग्रहणसामर्थ्यात् व्याश्रयत्वस्य लाभो भविष्यति। नन्वत्रपदस्यान्यत् प्रयोजन-मुक्तम्। किम्? अत्रग्रहणं विषयार्थम् इति। असिद्धवदित्यस्याधिकारादाभीयस्या-



सिद्धत्वे सिद्धे आभाद्ग्रहणमाभीये कर्त्तव्ये इत्यर्थरूपविषयलाभार्थमितिहेतोरत्र-ग्रहणं समानाश्रयत्वप्रतिपत्त्यर्थं सम्पद्यत इति तात्पर्यम्।

**(म० भा०) इह पपुषः चिच्युषः लुलवुषः द्वौ हेतू व्यपदिष्टौ बहिरङ्गलक्षणत्वं चासिद्धत्वं चेति। तत्र भवेदसिद्धत्वं प्रत्युक्तम् बहिरङ्ग-लक्षणं तु नैव प्रत्युक्तम्। नैष दोषः। बहिरङ्गमन्तरङ्गमिति च प्रतिद्वन्द्वि-भाविनावेतावर्थौ। कथम्? सत्यन्तरङ्गे बहिरङ्गं सति च बहिरङ्गेऽन्तरङ्गम्। न चान्तरङ्गबहिरङ्गयोः युगपत् समवस्थानमस्ति। नानभिनिर्वृत्ते बहिरङ्गेऽन्त-रङ्गं प्राप्नोति। तत्र निमित्तमेव बहिरङ्गमन्तरङ्गस्य।**

**अयं भावः –** पपुषः चिच्युषः लुलुवुषः इत्यत्रासिद्धत्वे द्वे कारणे प्रदत्ते। बहिरङ्गलक्षणत्वं चासिद्धत्वं चेति। तत्रासिद्धत्वमसिद्धवदत्राभादिति सूत्रेण भवति। तच्च प्रत्युक्तं = परिहृतं व्याश्रयत्वात्। अर्थात् उभयोराभीययोर्विभिन्ननिमित्त-कयोरसिद्धत्वं न भवति। किन्तु बहिरङ्गलक्षणमसिद्धत्वं न परिहृतम्। बहिरङ्ग-लक्षणेऽपि प्रतिद्वन्द्विभाविनावेतावर्थौ। सापेक्षौ बहिरङ्गान्तरङ्गशब्दौ सत्यन्तरङ्गे बहिरङ्गम्, सति बहिरङ्गे चान्तरङ्गम्। परस्परापेक्षया युगपत्प्राप्तौ तयोरवस्थानं भवति। यथा स्योन इत्यत्र यण् गुणयोर्युगपत् प्राप्तिरस्ति। तेनात्र भाष्यकृता असिद्धं बहिरङ्गेति परिभाषोपस्थापिता। पपुषः इत्यत्र तु सम्प्रसारणाल्लोपादीनां युगपत् प्राप्तिर्नास्ति। सम्प्रसारणप्राप्तिकाले आल्लोपादीनां निमित्ताभावादसिद्धमिति परिभा-षायाः प्रसङ्गो नास्ति। सम्प्रसारणाल्लोपादीनां निमित्तनिमित्तिभावात्। ननु यौगपद्ये-नान्तरङ्गबहिरङ्गयोः प्रवृत्तिस्वीकारे पचावेदमित्यत्राद्गुण इति गुणे कृत एव "एत ऐ" (३।४।९३) इति प्राप्नोति यौगपद्यं द्वयोर्नास्ति। अतोऽन्यथा व्याख्या-यतेऽसिद्धं बहिरङ्गमितिपरिभाषा। परिभाषेयं 'वाह ऊठ्' (६।४।१३२) इति सूत्रेण ज्ञापितेत्याभाच्छास्त्रीया। संज्ञापरिभाषाणां कार्यकालत्वाद् वसुसम्प्रसारण-देशत्वादाभाच्छास्त्रीया। आभाच्छास्त्रीयेष्वालोपादिषु कर्त्तव्येषु असिद्धमिति न प्रवर्तते। तदप्रवृत्तौ चाल्लोपादीनि भवन्तीति तात्पर्यम्।

**(म० भा०) "ह्रस्वयलोपाल्लोपाश्चायादेशे ल्यपि"॥ १३॥**

**ह्रस्वयलोपाल्लोपाश्चायादेशे ल्यपि सिद्धा वक्तव्याः। प्रशमय्य गतः प्रतमय्य गतः। प्रबेभिदय्य गतः प्रचेच्छिदय्य गतः। प्रस्तनय्यगतः प्रगदय्य-**

**गतः। ह्रस्वयलोपाल्लोपानामसिद्धत्वा''ल्यपि लघुपूर्वात्'' (६।४।५६) इत्ययादेशो न प्राप्नोति। अत्राप्येष परिहारः समानाश्रयवचनात्सिद्धमिति। कथम्? णावेते विधयो णेर्ल्यप्ययादेशः।**

**अयं भावः –** ल्यपि परतोऽयादेशे कर्त्तव्ये ह्रस्वयलोपाल्लोपाः सिद्धाः वक्तव्याः इति वार्तिकार्थः। अन्यथा ह्रस्वादीनां कृतकार्याणामाभीयानां ''ल्यपि लघुपूर्वात्'' (६।४।५६) इति कर्त्तव्ये असिद्धत्वापत्तिः स्यात्। तथाहि – प्रशमय्यगतः प्रतमय्यगतः। इत्यत्रोपशमार्थकादुकारेत्संज्ञकात् शम्धातोर्णिचि एवमुकारेत्संज्ञकात् काङ्क्षकाच्च तम्धातोर्णिचि उपधावृद्धौ 'मितां ह्रस्वः' (६।४।९२) इति ह्रस्वे गतिश्चेति (१।४।६०) गतिसंज्ञायां ''कुगतिप्रादयः'' (२।२।१४) इति गतिसमासे ''समानकर्त्तृकयोः पूर्वकाले क्त्वा'' इति क्त्वा-प्रत्यये तस्य ''समासेऽनञ्पूर्वो क्त्वो ल्यप्'' इति ल्यबादेशे प्रशम् इय प्रतम् इय इति स्थिते ''ल्यपि लघुपूर्वात्'' (६।४।५६) इति णेरयादशे कर्त्तव्ये ह्रस्वस्या-सिद्धत्वात् अयादेशो न प्राप्नोति। तस्य सिद्धे वक्तव्येऽयादेशो भवति। इरित्संज्ञकाद् विदारणार्थकाद् प्रपूर्वकाद् भिद्धातोर्यङि प्रादिसमासे द्वित्वे अभ्याससंज्ञायां ''गुणो यङ्लुकोः'' (७।४।८२) इत्यभ्यासगुणे जश्त्वे बेभिद्येत्यस्माद् णिचि क्त्वा-प्रत्यये तस्य ल्यबादेशे ''यस्य हलः'' (६।४।४९) हलः इति पञ्चम्यन्तपदं विलोक्य तस्मादित्युत्तरस्येति परिभाषाव्यवहितांशे उत्तरांशेन सहोपतिष्ठते। उत्तरांशं प्रबाध्य ''आदेः परस्ये''ति परिभाषया तस्यादेः यकारस्य लोपे जाते ततः ''अतो लोपः'' (६।४।४८) इत्यकारलोपे ''ल्यपि लघुपूर्वात्'' (६।४।५६) इति णेरयादेशे कर्त्तव्ये यकाराकारलोपस्यासिद्धत्वात् यकाराकारयो र्व्यवधानादयादेशो न भवति। यतो ह्ययादेशविधायकस्य सूत्रस्यापि तस्मादित्युत्तरस्येति परिभाषया लघुपूर्वात् इति पञ्चम्यन्त पदमनुसृत्योपस्थित्या ''लघुपूर्वावर्णादव्यवहितस्योत्तरस्य णेरयादेशः स्यादित्यर्थः सम्पद्यते।'' तेन यकाराकारयोर्व्यवधानं तयोरसिद्धत्वे न भवति। तयोः सिद्धत्वं वक्तव्यमिति प्रबेभिदय्येति रूपं भवति। एवमिरित्संज्ञकाद् विदारणार्थकाद् प्रपूर्वकाद् छिद्धातोः यङि प्रादिसमासे द्वित्वेऽभ्यासादिकार्ये तुकि चुत्वे क्त्वाप्रत्यये ल्यपि यकाराकारयोः पूर्ववल्लोपे तयोर्णेरयादेशे कर्त्तव्येऽ-सिद्धत्वेनायादेशो न प्राप्नोति। अतः तयोरसिद्धत्वं वक्तव्यम्। अतः प्रचेच्छिदय्येति



रूपं सिद्ध्यति। चुरादिगणेऽदन्ताधिकारे स्तनगदीदेवशब्दे पठितौ। तत्र स्तनगद्धा-तुभ्यां णिचि 'तस्यार्धधातुकत्वेन अतो लोपः' (६।४।४८) इत्यकारलोपे क्त्वाप्रत्यये प्रेतिसंयोगे प्रादिसमासे ल्यबादेशे 'ल्यपि लघुपूर्वात्' (६।४।५६) इत्याभीये णेरयादेशे कर्त्तव्ये कृतस्याल्लोपस्याभीयस्यासिद्धत्वात् णेरयादेशो न प्राप्नोति। अतो ह्रस्वयलोपाल्लोपाः सिद्धाः वक्तव्याः। तेन प्रस्तनय्यगतः प्रगदय्य गतः इत्यत्राल्लोपस्यासिद्धत्वाभावात् णेरयादेशो भवति।

अत्राप्येष परिहारः – समानाश्रयत्वं यदि द्वयोराभीययोर्भवति तदाऽसि-द्धत्वं भवति कृतस्याभीयस्य। व्याश्रयत्वे तु सिद्धत्वमेव भवति। णौ प्रत्यये परतो ह्रस्वयलोपाल्लोपा एते विधयो भवन्ति, णेरयादेशस्तु ल्यपि परत इति। एतदेव व्याश्रयत्वम्।

**(म० भा०) ''वुग्युटावुवङ्यणोः''** ॥ १४॥

**वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ। बभूवतुः बभूवुः। वुकोऽ-सिद्धत्वादुवङादेशः प्राप्नोति। उपदिदीये उपदिदीयाते। युटोऽसिद्धत्वाद् यणादेशः प्राप्नोति।**

**वुकस्तावन्न वक्तव्यम्। वुकं न वक्ष्यामि। एवं वक्ष्यामि भुवो लुङ्-लिटोरूदुपधाया इति। अत्रोवङादेशे कृते योपधा तस्या ऊत्त्वं भविष्यति। एवमपि कुतो नु खल्वेतदुवङादेशे कृते योपधा तस्या ऊत्त्वं भविष्यति, न पुनः साम्प्रतिकी योपधा तस्याः स्याद्भकारस्येति। नैष दोषः। ओरिति वर्तते। तेनोवर्णस्य भविष्यति।**

**अयं भावः –** बभूवतुः बभूवुरित्यत्र भूधातोर्लिटि तसि तस्यातुसादेशेऽत्र ''भुवो वुग्लुङ्लिटोः'' (६।४।८८) इति वुकि प्राप्ते अचि श्नुधातुभ्रुवां य्वोरि-यङुवङौ (६।४।७७) इति उवङि प्राप्ते द्वयोर्मध्ये कतरेण भाव्यमिति विचार-दशायां परत्वादपवादत्वाच्च वुकि कृते तस्याभीयत्वेनोवाङिकर्त्तव्येऽसिद्धत्वादुवङ् प्राप्नोति। तस्यानिष्टत्वात्। अत एव वार्तिके ''वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ'' इत्युक्तम्। तेन वुकि सिद्धेऽन्त्ये उकारस्याभावादुवङादेशो न प्राप्नोति। एवमुपदिदीये उपदिदीयाते इत्यत्रापि उपपूर्वकात् ङकारेत्संज्ञकात् क्षयार्थकाद् दीधातोः लिटि तस्यात्मनेपदस्य प्रथमपुरुषस्यैकवचने तप्रत्यये तस्यैशादेशे द्वित्वेऽभ्यासकार्ये

''दीङो युडचि'' (६।४।६३) इति युडागमे तस्याभीयत्वेन ''एरनेकाचोऽसंयोगपूर्वस्य'' (६।४।८२) इत्याभीये यणिकर्त्तव्येऽसिद्धत्वात् उक्तौ प्रयोगौ न सिद्ध्यतः। अत उवङ्यणोः कर्त्तव्ययोर्वुग्युटौ सिद्धौ वक्तव्याविति। वुकः सिद्धत्वकथने नास्ति प्रयोजनम्। यतो हि वुग्विधानं न करिष्यते। ''भुवो वुग्लुङ्लिटोः'' (६।४।८८) इति सूत्रे वुकमपठित्वा ''ऊदुपधाया गोहः'' (६।४।८९) इति सूत्रस्य योगविभागं कृत्वा ऊदुपधाया इत्यस्यापकर्षणं करिष्यते। तेन भुवो लुङ्लिटोरूदुपधाया इति सूत्रस्वरूपं भविष्यति। भू' इत्यस्योवङादेशे ह्रस्वोकारस्य वकारोपधाभूतस्योत्त्वे कृते ततो द्वित्वादिकार्ये बभूवतुः बभूवुरिति प्रयोगौ वुकं विनैव सिद्ध्यतः। ननु उवङादेशे कृते वकारस्योपधाया उत्त्वं विधीयते न पुनः योपधा साम्प्रतिकी अर्थादुवङादेशाद् योपधा पूर्ववर्तिनी दीर्घोकारस्य भकारोपधा तस्या ऊत्त्वं कथं न स्यात्? एष दोषो नास्ति। ''ओः सुपि'' (६।४।८३) इति सूत्रादोरिति वर्तते। तेनोवर्णस्यैवोत्त्वं भविष्यति न तु भकारस्य।

**(म० भा०) ''भवेत् सिद्धं बभूवतुः बभूवुः, इदं तु न सिद्ध्यति बभूव बभूविथेति। किं कारणम्? गुणवृद्ध्योः कृतयोरुवर्णाभावात्। नात्र गुणवृद्धी प्राप्नुतः। किं कारणम्? 'क्ङिति च' (१।१।५) इति प्रतिषेधात्। कथं कित्त्वम्? ''इन्धिभवतीभ्यां च'' (१।२।६) इति। तद्वै वयं कित्त्वं प्रत्याचक्ष्महे वुका। इह तु कित्त्वेन वुक् प्रत्याख्यायते। किं पुनरत्र न्याय्यम्। सत्यपि हि कित्त्वे स्यातामेवात्र गुणवृद्धी। किं कारणम्? इग्लक्षणयोः गुणवृद्ध्योः स प्रतिषेधो न चैषेग्लक्षणा वृद्धिः।''**

**अयं भावः–** भुवो लुङ्लिटोरूदुपधाया इति न्यासे नात्र ''ओः सुपि'' इत्यत्र ओरित्यस्यानुवर्तनेन च बभूवतुः बभूवुरित्यत्र लिटकित्त्वेन गुणाभावात् उवङि कृते वकारोपधायां ह्रस्वोकारः प्राप्नोति तस्योत्त्वं भविष्यति, किन्तु बभूव बभूविथेत्यत्र कित्त्वाभावात् गुणे सति अवादेशे च सति उवर्णाभावात् ऊत्त्वं न स्यादिति चेन्न, ''इन्धिभवतीभ्यां च'' (१।२।६) इति पित्यपि कित्त्वे ''क्ङिति च'' (१।१।५) इति गुणवृद्ध्योर्निषेधे तत्रोवर्णस्यैवोत्त्वं भविष्यति। ननु ''इन्धिभवतीभ्यां चेति सूत्रे वुका ङित्त्वं प्रत्याख्यातम्।'' कथम्? इत्थम् – पितः कित्त्वविधानस्यावश्यकता नास्ति। वुको गुणापेक्षया नित्यत्वात्। गुणे कृते



वुकः प्राप्तिरकृतेऽपि गुणे वुकः प्राप्तिः। कृताकृतप्रसङ्गी विधिर्नित्यो भवतीति परिभाषाबलात्। गुणश्च वुकि कृते न प्रवर्तते। वुकि सतीगन्तत्वाभावात्। ननु तत्र कित्त्वं वुका प्रत्याख्यातमत्र तु कित्त्वे न वुक् प्रत्याख्यायते। किं पुनरत्र न्याय्यम्? वुक्वचनमेव न्याय्यम्। यतो हि सत्यपि कित्त्वे गुणवृद्धी प्राप्नुतः। अत्र कारणमस्ति। क्ङिति चेति निषेध इग्लक्षणगुणवृद्धेः। अत्र ''अचोऽञ्णिति'' (७।२।११५) इत्येषा वृद्धिरिग्लक्षणा नास्ति। अत्रेक इत्यस्योपस्थानाभावात्।

**(म० भा०) ''एवं तर्हि नार्थो वुका नापि कित्त्वेन। स्तामत्र गुणवृद्धी कृतयोरवावोश्च कृतयोर्योपधा तस्या ऊत्त्वं भविष्यति। कथम्? ओरित्यत्रावर्णमपि प्रतिनिर्दिश्यते। इहापि तर्हि प्राप्नोति – कीलालपः पश्य, शुभंयः पश्येति। लोपोऽत्रबाधको भविष्यति। इह तर्हि प्राप्नोति – कीलालपौ कीलालपा इति। एवं तर्हि व्योरिति वर्तते तेनोवर्णं विशेषयिष्यामः – ओव्योरिति। इहेदानीमोरित्यनुवर्तते। व्योरिति निवृत्तम्।''**

**अयं भावः–** गुणवृद्ध्योरभावार्थं नास्ति प्रयोजनं वुकः कित्त्वस्य च। भवेतामत्र गुणवृद्धी। गुणवृद्ध्योः कृतयोरवावोश्च कृतयोर्योपधा तस्या ऊत्त्वं भविष्यति। ननु बभूव बभूविथेत्यत्र गुणवृद्ध्योः कृतयोरुवर्णस्याभावात् कथमूत्त्वं स्यात्? ओरित्यत्राकारोकारयोराद्गुणे कृते ङसिङसोश्चेति पूर्वरूपैकादेशे कृते अवर्णस्यापि निर्देशो वर्तते। तस्मादत्राकारस्याप्यूत्त्वं भविष्यति। ननु कीलालं पातीति कीलालपः तान् कीलालपः पश्य, एवं शुभं यातीति शुभंयाः, तान् शुभंयः पश्येत्यत्रापि ''ओः सुपीति'' सूत्रेणाकारस्य यण् प्राप्नोति। तत्र। आतो धातोः (६।४।१४०) इत्यनेन परत्वादाकारलोपो भवति। ननु ''ओः सुपीत्यत्राकारोकारयोनिर्देशेन कीलालपौ कीलालपा इत्यत्रापि दीर्घाकारस्य यण् प्राप्नोति यतो हि यचि भमित्यत्रासर्वनामस्थाने इत्यनुवर्तनाद् भसंज्ञाया अभावादाकारलोपस्याप्रसङ्गात्। तन्न, ''अचिश्नुधातुभ्रुवां य्वोरियङुवङौ'' (६।४।७७) इत्यत्र यदेव व्योरिति प्रकृतं तदेव वर्णक्रमव्यत्ययेन व्योरिति ''ओः सुपि'' (६।४।८३) इत्यत्रानुवर्तिष्यते। तत्राकारोकारसमुदायनिर्देशेऽपि व्योरित्यनेन आदित्यस्य विशेषणादुकारस्यैव यण् भविष्यति नत्ववर्णस्येति। अतः कीलालपौ कीलालपा इत्यत्र नास्ति यणापत्तिः। भुवो लुङ्लिटोरूदुपधाया इत्यत्रौरित्यनुवर्तते व्योरिति निवर्तते।

**( म० भा० ) "युटश्चापि न वक्तव्यम्। युड्वचनसामर्थ्यान्न भविष्यति। अस्त्यन्यद् युड्वचने प्रयोजनम्। किम्? द्वयोर्यकारयोः श्रवणं यथा स्यात्। न व्यञ्जनपरस्यैकस्यानेकस्य वा यकारस्य श्रवणं प्रति विशेषोऽस्ति।"**

**अयं भावः–** युटोऽपि सिद्धत्वं न वक्तव्यम्। युड्वचनसामर्थ्यादसिद्धत्वं न भविष्यति। ननु यकारद्वयश्रवणार्थं युटः प्रयोजनमस्ति। तथाहि दिदीये इत्यत्र युटोऽसिद्धत्वेन यणि दिद् य् य् ए इति स्थिते वर्णसम्मेलने यकारद्वयस्य श्रवणार्थं युड्वचनमस्ति। ननु युटं विनापि यणि "यणो मयो द्वे वाच्ये" इति वचनाद्यः परस्य यकारस्य द्वित्वे ततोऽनचि चेति द्वित्वे ततो "हलो यमां यमि लोपः" इति विकल्पेन यकारलोपे यकारद्वयस्य श्रवणं भविष्यति तदर्थं युटोऽचारितार्थ्यं भवति। तत्सामर्थ्यात् यण् न भविष्यति। अतो युटोऽपि सिद्धत्वं न वक्तव्यम्। यकारद्वयस्य श्रवणे युटः चारितार्थ्यं नास्ति। यतो हि व्यञ्जनात् परस्यानेकस्यैकस्य वा यकारस्य श्रवणे वैशिष्ट्यं नास्ति।

**( म० भा० ) "किं पुनः प्राग्भादसिद्धत्वमाहोस्वित् सह तेन। कुतः पुनरयं सन्देहः? आङायं निर्देशः क्रियते, आङ् च पुनः सन्देहं जनयति। तद्यथा – आपाटलिपुत्राद् वृष्टो देव इति सन्देहः प्राग्भात् सह तेनेति। कश्चात्र विशेषः?"**

**अयं भावः –** यथा – आ पाटलिपुत्रादित्यत्र "आङ् मर्यादावचने" इत्यनेन आङः इत्यस्य मर्यादायामभिविधौ चार्थे कर्मप्रवचनीयसंज्ञायां "पञ्चम्य-पाङ्परिभि" (२।३।१०) इति कर्मप्रवचनीययोगे पाटलिपुत्रशब्दात् पञ्चमी-विभक्तौ "आङ् मर्यादाभिविध्योः" (२।१।१३) इति विकल्पेनाव्ययीभाव-समासे आ पाटलिपुत्रम् इति रूपं भवति। पक्षे आ पाटलिपुत्रात् इति रूपं च भवति। यदि मर्यादार्थे आङः समासो भवति पाटलिपुत्रशब्देन, तदा आपाटलि-पुत्रात् वृष्टो देवः इति प्रयोगः क्रियते। अस्य तात्पर्यं भवति प्राक् पाटलिपुत्राद् वृष्टो देवः इति। अभिविधावित्यर्थे प्राक्पाटलिपुत्रात् सह तेनेति। एवमादित्यत्रापि कर्मप्रवचनीयसंज्ञकस्याङो निर्देशो जनयति सन्देहं यत् प्राक् भाधिकाराददसिद्धत्वं भवत्यथवा प्राग्भाधिकारादसिद्धं भवति भेन सहेति। भाधिकारमभिव्याप्येत्यर्थः।



**( म० भा० ) "प्राग्भादिति चेच्छुनामघोनाभूगुणेषूपसंख्या-नम्"॥ १५॥**

**प्राग्भादिति चेच्छुनामघोनाभूगुणेषूपसंख्यानम् कर्त्तव्यम्। शुनः पश्य शुना शुने। सम्प्रसारणे कृते "ऽल्लोपोऽनः" (६।४।१३४) इति प्राप्नोति। यस्य पुनः सह तेनासिद्धत्वमसिद्धत्वात् तस्य "न संयोगाद्वमन्तात्" (६।४।१३७) इति प्रतिषेधो भविष्यति।**

**अयं भावः –** यदि प्राग्भादित्यधिकारात् पूर्वत्राभीयस्य कृते आभीये कर्त्तव्येऽसिद्धत्वं भवतीति पक्षः स्वीक्रियते तर्हि शुनः पश्येत्यत्र श्वन् अस् इति स्थिते भत्वे "श्वयुवमघोनामतद्धिते" (६।४।१३३) इति सम्प्रसारणे कृते वार्णादाङ्गं बलीयः इति परिभाषया वार्णकार्यं "सम्प्रसारणाच्च" इति पूर्वरूपैकादेशं प्रबाध्याङ्गकार्यस्य "अल्लोपोऽनः" (६।४।१३४) इत्यस्य प्रबलत्वेनाकारस्य लोपे शुनः पश्य। शुना शुन इत्यादिरूपाणि न सिद्ध्यन्ति अतोऽत्रासिद्धत्वं वक्तव्यम्। यस्य सह तेनार्थात् भाधिकारमभिव्याप्येति पक्षोऽस्ति, तन्मते "न संयोगाद्व-मन्तात्" (६।४।१३७) इत्यनेनाल्लोपस्य प्रतिषेधो भविष्यति। पक्षेऽस्मिन्न-सिद्धत्वस्यावश्यकता नास्ति।

'भस्य' (६।४।१२९) इति सूत्रमुद्दिश्य "असिद्धवदत्राभादिति सूत्रे" पक्षद्वयमुपस्थापितम्। तत्र प्रथमपक्षो विद्यतेऽत्राङो मर्यादार्थकत्वेन भस्येति सूत्रात् पूर्ववर्तिष्वसिद्धत्वं भविष्यति। अत्र पक्षे दूषणं शुनः पश्य। शुना शुने इति प्रयोगेषु भवति। द्वितीयपक्षोऽत्राङोऽभिविधावित्यर्थे कर्मप्रवचनीय संज्ञकत्वात् भाधिकारं यावत् आभीयस्य कार्यस्यासिद्धत्वं बोधयति। पक्षेऽस्मिन् शुनः पश्य। शुना शुने इत्यादौ सम्प्रसारणस्यासिद्धत्वं भवति। अत्र पक्षे नास्ति दूषणमिति।

**( म० भा० ) "यस्यापि प्राग्भादसिद्धत्वं तस्याप्येष न दोषः। कथम्? नास्त्यत्र विशेषोऽल्लोपे न वा निवृत्तौ सत्यां पूर्वत्वेन वा।" अयमस्ति विशेषः। अल्लोपेन निवृत्तौ सत्यामुदात्तनिवृत्तिस्वरः प्रसज्येत। नात्रोदात्त-निवृत्तिस्वरः प्राप्नोति। किं कारणम्? "नगोश्वन् सावर्ण्" (६।४।१८२) इति प्रतिषेधात्। नैष उदात्तनिवृत्तिस्वरस्य प्रतिषेधः। कस्य तर्हि? तृतीयादिस्वरस्य। यत्र तर्हि तृतीयादिस्वरो नास्ति – शुनः पश्येति। एवं तर्हि न वयं लक्षणस्य प्रतिषेधं शिष्मः। किं तर्हि? येन केनचिल्लक्षणेन**

प्राप्तस्य विभक्तिस्वरस्यायं प्रतिषेधः। तत्र तर्हि विभक्तिस्वरो नास्ति बहुशुनीति। यदि पुनरयमुदात्तनिवृत्तिस्वरस्यापि प्रतिषेधो विज्ञायेत। नैवं शक्यम्। इहापि प्रसज्येत कुमारीति। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति नोदात्तनिवृत्तिस्वरः शुन्यवतरतीति यदयं श्वन्शब्दं गौरादिषु पठति। अन्तोदात्तार्थं यत्नं करोति। सिद्धं हि स्याद् ङीपैव।

**अयं भावः** – यस्य प्राग्भस्येति पाठादसिद्धत्वं भवति तन्मतेऽपि नास्ति दोषः। यतोऽल्लोपेन पूर्वरूपेण वानोऽकारस्य निवृत्तौ सत्यां नास्त्यत्र कश्चन विशेषः। उपसंख्यानवादी प्रस्तौति विशेषत्वमिदमस्ति विशेष इत्यादि भाष्येण। तथाहि – श्वन्शब्द आद्युदात्तः ततः शसि प्रत्यये तस्यादनुदात्तौ सुप्पितौ इत्यनुदात्तत्वे कृतेऽल्लोपोऽन इत्यकारस्योदात्तस्य लोपे "अनुदात्तस्य च यत्रोदात्तलोपः" (६। १। १६१) इत्यनुदात्तस्योदात्ते जाते भवत्यत्रोदात्तनिवृत्तिस्वरः। अनुपसंख्यानवादी ब्रूते – नात्रोदात्तनिवृत्तिस्वरः प्राप्नोतीति। अत्र कारणमस्ति। "न गोश्वन्साववर्णराडङ्कुङ्कृद्भ्यः" (६। १। १८२) इत्यनेन तस्य प्रतिषेधो भवति। अयं प्रतिषेधो नास्ति उदात्तनिवृत्तिस्वरस्य किन्तु "सावेकाचस्तृतीयादिर्विभक्तिः" (६। १। १६८) इत्यनेन प्राप्तस्य तृतीयादिविभक्तेरुदात्तत्वस्य। नन्वत्र शुनः पश्येत्यत्र नास्ति तृतीयादिर्विभक्तिः। अत्रोऽत्र भवत्येवोदात्तनिवृत्तिस्वरः। तन्न, "सावेकाचस्तृतीयादिविभक्तिः" इत्यस्यैव लक्षणस्य प्रतिषेधो नास्ति किन्तु विभक्तेः प्राप्तस्योदात्तमात्रस्य। तेनोदात्तनिवृत्तिस्वरस्यापि प्रतिषेधो भवति नास्ति विशेषः। ननु यत्र विभक्तिस्वरो नास्ति – यथा – बहुशुनीति। बहवः श्वानो यस्यां नगर्यां सा बहुशुनी। बहुजस् श्वन् जस् अत्र समासत्वेन प्रातिपदिकत्वे सुपो लुकि स्त्रीत्वविवक्षाया "मन उपधा लोपिनोऽन्यतरस्याम्" (४। १। २८) इति ङीपि भत्वात् सम्प्रसारणेऽल्लोपे बहुशुनीति। पक्षे डापि बहुश्वेति। यद्यत्राविभक्तिकस्थानिकस्याप्यनुदात्तस्योदात्तत्वं विधीयेत तर्हि कुमारीत्यत्रापि प्रसज्येतोदात्तनिवृत्तिस्वरः। स च नेष्टः। आचार्यः श्वन्शब्दं गौरादिगणे पठितवान् तेन ज्ञापयति स्म आचार्यो यद् बहुशुनीत्यत्रोदात्तनिवृत्तिस्वरो न भवतीति। यदि प्रयोगेऽस्मिन्नुदात्तनिवृत्तिस्वर इष्टः स्यात् तर्हि ङीपैव स स्यात्। अन्तोदात्तार्थो। गौरादिगणे श्वन्शब्दस्य पाठो व्यर्थ एव भवेत्।



(म० भा०) "मघोनः पश्य। मघोना मघोने। सम्प्रसारणे कृते।" यस्येति लोपः प्राप्नोति। यस्य पुनः सह तेनासिद्धत्वमसिद्धत्वात् तस्य न भविष्यति। यस्यापि प्राग्भादसिद्धत्वं तस्याप्येष न दोषः। कथम्? वक्ष्यत्येतन्मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकमिति। भूगुणः। भूयान्। भूभावे कृत 'ओर्गुणः' प्राप्नोति। यस्य पुनः सह तेनासिद्धत्वमसिद्धत्वात् तस्य न भविष्यति। यस्यापि प्राग्भादसिद्धत्वं तस्याप्येष न दोषः। कथम्? दीर्घोच्चारणसामर्थ्यान्न भविष्यति। अस्त्यन्यद् दीर्घोच्चारणस्य प्रयोजनम्। किं भूमेति। निपातनादेतत् सिद्धम्। किं निपातनम्? "बहोर्नञ्वदुत्तरपदभूम्नि" (६। २। १७५) इति। अथवा पुनस्तु सह तेनेति।

**अयं भावः** – मघवन्शब्दस्य व्युत्पत्तिपक्षमादाय मघोनः पश्य। मघोना मघोने अत्र प्राग्भादित्यसिद्धत्वपक्षे स्वीकृते दूषणमापतति। तथाहि – महीङ् पूजायामित्यस्माद्धातोः महीयते (पूजां लभते) इत्यर्थे "श्वन्नुक्षन् प्लीहन् क्लेदन् स्नेहन् मर्धन् मज्जन् अर्यमन् विश्वप्सन् परिज्मन् मातरिश्वन् मघवन् (१५७) इत्युणादिसूत्रेण मघवन्शब्दो निपातितः। महेर्हकारस्य घत्वं कनिप्रत्ययः धातोरवुगागमश्चेति। तत्र मघवन् शसि (मधवन् अस्) इत्यवस्थायां भत्वे "श्वयुवमघोनामतद्धिते" (६। ४। १३३) इति वकारस्य सम्प्रसारणे कृते "यस्येति च" (६। ४। १४८) इत्यकारलोपः प्राप्नोति। सत्यकारलोपे "आद्गुणः" इति गुणो न प्राप्नोति। भाधिकारात् प्रागसिद्धत्वे सम्प्रसारणविधायकस्य भाधिकारे पठितत्वेनासिद्धत्वं न सम्भवति। अतः प्राग्भादित्यसिद्धत्वपक्षेऽसिद्धत्वं सम्प्रसारणस्य वक्तव्यम् यस्येति चेत्यकारलोपे कर्त्तव्ये। सह तेनेति पक्षे त्वसिद्धत्वं भवत्येव। अयमेव पक्षो भाष्यकारेण स्वीकृतः। भाधिकारात् प्रागसिद्धत्वं पक्षेऽपि नास्ति दोषः। मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकमिति मत्वैतत्पक्षेऽपि दूषणं परिहृतं पतञ्जलिपादैः। भूगुणः। भूयानित्यत्रायमेषामतिशयेन बहुरित्यर्थे "अतिशायने तमबिष्ठनौ" इतीष्ठनि "बहोर्लोपो भू च बहोः" (६। ४। १५८) बहुशब्दस्य भूभावे प्रत्ययस्यादिभूतस्येकारस्य लोपे च दीर्घे नुमि विभक्त्यादिकार्ये भूयानिति रूपं भवति। अत्र बहोर्भूभावे कृत "ओर्गुणः" (६। ४। १४६) इति गुणः प्राप्नोति, स च नेष्यते। अतः प्राग्भादित्यसिद्धत्वपक्षेऽसिद्धत्वं वक्तव्यम् भूभावस्येति। सह तेनेति यस्य

मतं विद्यते तन्मते त्वसिद्धत्वं भवत्येव। ननु प्राग्भादित्यसिद्धत्वपक्षेऽपि नास्ति दोषः। कथम्? सूत्रे दीर्घोच्चारणस्यास्ति प्रयोजनान्तरमिति। किं प्रयोजनम्? भूमेतिप्रयोजनमस्ति दीर्घोच्चारणस्य। भूमाशब्दास्यार्थं दीर्घोच्चारणमित्यपि नास्ति। तत्तु निपातनात् लभ्यते। कथम्? ''बहोर्नञ्वदुत्तरपदभूम्नि'' (६। २। १७५) इति। अत्र सूत्रे भूम्नीति सप्तम्यन्ते पदे दीर्घोच्चारणात् भूशब्दो निपातनाल्लभ्यते। अथवा भाधिकारं यावदसिद्धत्वं भवतीति पक्ष एव स्यादिति।

**(म० भा०) ''आभादिति चेद् वसुसम्प्रसारणयलोपप्रस्थादीनां प्रतिषेधः''॥ १६ ॥**

**आभादिति चेद्वसुसम्प्रसारणयलोपप्रस्थादीनां प्रतिषेधो वक्तव्यः। पपुषः पश्य। तस्थुषः। निन्युषः चिच्युषः। लुलुवुषः पुपुवुष इति। वसुसम्प्रसारणे कृते तस्यासिद्धत्वादचीत्याकारलोपादीनि न सिद्ध्यन्ति। नैष दोषः। उक्तमेतत् समानाश्रयवचनात् सिद्धमिति। कथम्? वसावाकारलोपादीनि वस्वन्तस्य विभक्तौ सम्प्रसारणमिति। यलोपः सौरी बलाका। सोऽसावण्यकारो लुप्यते। तस्यासिद्धत्वाद्यलोपो न प्राप्नोति। अत्राप्येष एव परिहारः समाश्रयवचनात् सिद्धमिति। कथम्? अण्यकारलोपोऽणन्तस्येति यलोपः।**

**प्रस्थादिषु प्रेयान् स्थेयान्। प्रस्थादीनामसिद्धत्वात् 'प्रकृत्यैकाच' (६। ४। १७३) इति प्रकृतिभावो न प्राप्नोति। नैष दोषः। यथैव प्रस्थादीनामसिद्धत्वात् प्रकृतिभावो न प्राप्नोत्येवं टिलोपोऽपि न भविष्यति। ॥६।४।२२॥**

**अयं भावः** – आभादित्यस्य तात्पर्यमस्ति प्राग्भादिति। पक्षेऽस्मिन् पपुषः पश्य। तस्थुषः। निन्युषः चिच्युशः। लुलुवुषः पुपुवुषः इत्येषु प्रयोगेषु वसोर्वकास्य सम्प्रसारणे कृते आकारलोयणुवङ्कर्त्तव्येषु सम्प्रसारणस्य सिद्धं वक्तव्यमिति पूर्वमेव नवमे वार्तिके ''सिद्धं वसुसम्प्रसारणमज्विधाविति''। अन्यथार्थात् सम्प्रसारणस्यासिद्धत्वे आकारलोपादीनि कार्याणि न स्युः। तत्रैव समानाश्रयवचनात्सिद्धमिति वार्त्तिके समाहितम्। समानाश्रयेऽसिद्धत्वं भवति न तु व्याश्रये। कथमत्र व्याश्रयत्वम्? तत्र वार्तिकव्याख्यावसरे वसावाकारलोपादीनि



वस्वन्तस्य विभक्तौ सम्प्रसारणमिति। यलोपः।'सौरी वलाका' इत्यत्र सूर्येणैकदिक् इत्यर्थे ''तेनैकदिक्'' इत्यणि भत्वात् यस्येति चेत्यकारलोपेऽणन्तात् स्त्रीत्वविवक्षायां ङीपि पुनः भत्वादणोऽकारस्य यस्येति चेत्यनेन लोपे ''सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः'' (६। ४। १४९) इति यलोपे कर्त्तव्ये द्वयोरकारयोरसिद्धत्वात् यकारस्योपधात्वाभावाद् यलोपो न प्राप्नोति। अत्रापि स एव परिहारः समानाश्रयवचनात् सिद्धम् भवति। अणि परतोऽकारलोपोऽणन्तस्य यलोपः। अतोऽत्राप्यसिद्धत्वं न भवति। तेन सिद्धत्वकथनमत्र नापेक्षते।

प्रस्थादिषु। प्रेयान् स्थेयान् इत्यत्रायमेषामतिशयेन प्रिय इत्यर्थे ''अतिशायने तमबिष्ठनौ'' इति इष्ठनि प्रत्यये तद्धितान्तत्वेन प्रातिपदिकत्वे सुपो लुकि ''प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृपदीर्घवृन्दारकाणां प्रस्थस्फवर्वंहिगर्वषित्रब्द्राघिवृन्दाः'' (६। ४। १५७) इति प्रियशब्दस्य प्रादेशे 'टेः' (६। ४। १५५) इति टिलोपं प्रबाध्य 'प्रकृत्यैकाच्' (६। ४। १६३) इति। प्रकृतिभावे गुणे विभक्त्यादिकार्ये कृते प्रेयान् इति भवति। नन्वत्र प्रादेशे कृते प्रकृत्यैकाजिति कर्त्तव्ये प्रादेशस्यासिद्धत्वात् एकाच्त्वाभावेन प्रकृतिभावस्याभावे रूपासिद्धः स्यात् तत्र टिलोपस्य प्रवर्त्तनादिति चेत्, न टिलोपस्याप्यसिद्धत्वात्। वस्तुतः प्रादीनामपवादत्वेन टिलोपं बाधित्वा प्रादिषु कृतेषु टिलोपकर्त्तव्ये प्रादीनामसिद्धत्वान्नादेशाश्रयष्टिलोपो नापि स्थानिलक्षणः तस्यापवादेन बाधितत्वादिति भाष्याशयः।

**॥ असिद्धवदत्राभात्॥ ६। ४। २२॥**

*****

## ॥ पूर्वत्रासिद्धम्॥ ( ८ । २ । १ )

अत्र ''काशिकावृत्तिः'' –

पूर्वत्रासिद्धमित्यधिकार आ अध्यायपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामः पूर्वत्रासिद्धमित्येवं तद्वेदितव्यम्। तत्रेयं सपादसप्ताध्याय्यनुक्रान्ता एतस्यामयं पादोनोऽध्यायोऽसिद्धो भवति। इत उत्तरं चोत्तरोत्तरो योगः पूर्वत्र पूर्वत्रासिद्धो भवति। असिद्धवद्भवति। सिद्धकार्यं न करोतीत्यर्थः। तदेतदसिद्धवचनमादेशलक्षणप्रतिषेधार्थम्, उत्सर्गलक्षणभावार्थं च। अस्मा उद्धर। द्वा अत्र। द्वा आनय। असा आदित्यः, इत्यत्र व्यलोपस्यासिद्धत्वाद्, आद्गुण इत्यकः सवर्णे दीर्घ इति च न भवति। अमुष्मै अमुष्मात्। अमुष्मिन् इति उत्वस्यासिद्धत्वात् स्मायादयो भवन्ति।

शुष्किका शुष्कजङ्घा च क्षामिमानौजढत्तथा।

मतोर्वत्वे झलां जश्त्वे गुडलिण्मान्निदर्शनम्॥

शुष्किकेत्यत्र शुषः क इत्यस्यासिद्धत्वात् उदीचामातः स्थाने यकपूर्वाया इत्येतन्न भवति। शुष्कजङ्घा इति न कोपधाया इति पुंवद्भावप्रतिषेधो न भवति। क्षामिमानिति। क्षामस्यापत्यं क्षामिः क्षामो वा अस्यास्तीति क्षामी। क्षमिः क्षामी वा यस्यास्तीति क्षामिमान्। क्षायो म इत्यस्यासिद्धत्वान्मादुपधायाश्चेति वत्वं न भवति। औजढदिति वहेर्निष्ठायामूढस्तमाख्यदिति णिच् तदन्ताल्लुङ्। चङीतिद्विर्वचने कर्त्तव्ये धत्वढत्वष्टुत्वढलोपानामसिद्धत्वाण्णौ च यष्टिलोपस्तस्य स्थानिवद्भावाद् हत इत्येतद् द्विरुच्यते। अनग्लोप इति प्रतिषेधात् सन्वदित्त्वं नास्ति। तेन औजढदिति भवति। औजिढदित्येतत्तु क्तिन्नन्तस्य उढिशब्दस्य भवति। गुडलिण्मानिति गुडलिहोऽस्य सन्ति इति मतुप्। तत्र ढत्वजश्त्वयोरसिद्धत्वाद्, झय इति वत्वं न भवति। येऽत्र षष्ठीनिर्देशाः सप्तमीनिर्देशाः पञ्चमीनिर्देशाश्च तेषां षष्ठी स्थानेयोगा तस्मिन्निति निर्दिष्टे पूर्वस्य, तस्मादित्युत्तरस्येति च कर्त्तव्ये ना-



सिद्धत्वं भवति। कार्यकालं हि संज्ञापरिभाषमिति पूर्वत्वमासां परिभाषाणां नास्तीति। विप्रतिषेधे परमित्येषा तु परिभाषा येन पूर्वेण लक्षणेन सह स्पर्धते परं लक्षणं तत्प्रति तस्यासिद्धत्वान्न प्रवर्तते। तथा च सति, विस्फोर्यमवगोर्यमिति गुणः परेण हलि चेति दीर्घत्वेन न बाध्यते। अपवादस्य तु परस्यापि उत्सर्गे कर्त्तव्ये वचनप्रामाण्यादसिद्धत्वं न भवति। तेन दोग्धा दोग्धुमित्यत्र धत्वस्यासिद्धत्वाद् होढ इति न भवति। इति काशिकावृत्तिः॥

॥ पूर्वत्रासिद्धम्॥ ८। २। १॥

( म० भा० ) – ''येयं सपादसप्ताध्याय्यनुक्रान्ता एतस्यामयं पादोनोऽध्यायोऽसिद्धो वेदितव्यः। यदि सपादायां सप्ताध्याय्यामयं पादोनोऽध्यायोऽसिद्ध इत्युच्यते य इह सप्तमीनिर्देशाः पञ्चमीनिर्देशाः षष्ठीनिर्देशाश्चोच्यन्ते तेऽप्यसिद्धाः स्युः।'' तत्र को दोषः? ''झलो झलि'' ( ८। २। २६ ) ''ह्रस्वादङ्गात्'' ( ८। २। २७ ) ''संयोगान्तस्य लोपः'' ( ८। २। २३ ) इत्येषां निर्देशानामसिद्धत्वात् तस्मिन्निति निर्दिष्टे पूर्वस्य ( १। १। ६६ ) ''तस्मादित्युत्तरस्य'' ( १। १। ६७ ) ''षष्ठी स्थाने योगा'' ( १। १। ४९ ) इत्येताः परिभाषा न प्रकल्पेरन्। नैष दोषः। यद्यपीदं तत्रासिद्धं तत्त्विह सिद्धम्। कथम्? कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्। झलो झलि ''ह्रस्वादङ्गात्'' ''संयोगान्तस्य लोपः'' ( ८। २। २३ ) उपस्थितमिदं भवति – तस्मिन्नति निर्दिष्टे पूर्वस्य ''तस्मादित्युत्तरस्य'' षष्ठीस्थाने योगेति। यदि कार्यकालं संज्ञापरिभाषमित्युच्यते, इयमपि परिभाषास्ति विप्रतिषेधे परमिति साऽपीहोपतिष्ठेत। विस्फोर्यमवगोर्यमिति गुणाद्दीर्घत्वं स्याद् विप्रतिषेधेन।

**अयं भावः** – पूर्वस्मिन्निति पूर्वत्र। कुतः पूर्वत्रेति प्रश्ने उत्तरं भवति पूर्वत्रासिद्धमिति सूत्रात् पूर्वत्र। सूत्रमिदमष्टमाध्यायस्य द्वितीयपादस्य प्रथमं सूत्रं विद्यते। तर्हि अस्मादेव सूत्रात् पूर्वत्राष्टमस्यैकपादः सप्ताध्यायी चेति। तदेवोच्यते। सपादसप्ताध्यायीति। अष्टमस्य द्वितीयपादादूर्ध्वं पादत्रयं विद्यते। तदेव त्रिपादीति पदनोच्यते। तेन सपादसप्ताध्यायीं प्रति त्रिपादीस्थं शास्त्रमसिद्धं भवतीत्यर्थः

निर्गलति। अत्र शास्त्रे पक्षद्वयमस्ति। यथोद्देशं संज्ञापरिभाषम् कार्यकालं संज्ञापरिभाषं चेति। यदि यथोद्देशपक्षः स्वीक्रियते तदा सपादसप्ताध्याय्यां पठितानां परिभाषाणां दृष्ट्या यत्र विधिसूत्रेषु सप्तमीनिर्देशः पञ्चमीनिर्देशः षष्ठीनिर्देशश्च सन्ति तानि विधिसूत्राणि असिद्धानि भविष्यन्ति। यथा 'झलो झलि' (८।२।२६) इत्यत्र झलीति सप्तम्यन्तं पदं वीक्ष्याव्यवहितत्वं पूर्वत्वञ्चेत्यंशद्वयमुपस्थापयति ''तस्मिन्निति निर्दिष्टे पूर्वस्ये'' ति परिभाषा। तेन झलव्यवहितस्य पूर्वस्य सस्य लोपो भवतीत्यर्थो निष्पन्नो भवति। स च झलो झलीत्यासिद्धत्वान्न प्राप्नोति। अभित्तेत्युदाहरणम्। एवञ्च 'ह्रस्वादङ्गात्' (८। २। २७) इत्यत्र ह्रस्वादिति पञ्चम्यन्तं पदं वीक्ष्य ''तस्मादित्युत्तरस्य'' (१।१।६७) इति परिभाषोपतिष्ठते। स चाव्यवहितत्वमुत्तरत्वञ्चेत्यंशद्वयमुपस्थापयति। तेनायमर्थो भवति – ह्रस्वादङ्गा-दव्यवहितस्योत्तरस्य सकारस्य लोपो भवति झलि परत इति। अकृत, अकृथा इत्युदाहरणे। एवं षष्ठी स्थानेयोगा (१।१।४९) इत्यनया तच्छेषया ''अलोऽ-न्त्यस्य'' (१।१।५२) इति परिभाषया च संयोगान्तस्य लोपः (८।२।२३) इद्गोण्याः (१।२।५०) इति द्वयोर्विधिसूत्रयोरसिद्धत्वात् इष्टोऽर्थो नैव प्राप्नुयात्। इष्टोऽर्थश्चेत्थम् – संयोगान्तस्य पदस्यालोऽन्त्यस्थाने लोपोभवतीति। एवमिद्गोण्या इत्यत्र परिभाषाभ्यामेकवाक्यतया ''गोण्याऽलोऽन्त्यस्य'' स्थाने इत्वं भवति तद्धितलुकीत्यर्थः सम्पद्यते। दद्ध्यत्र मद्ध्वत्र, पञ्चगोणिः दशगोणिरित्यादीन्युदा-हरणानि। भवतु नाम सपादसप्ताध्याय्या दृष्टया त्रिपादीस्थं विधिसूत्रमसिद्धं स्यात् किन्त्वेतत् सिद्धम्। कथम्? कार्यकालं संज्ञापरिभाषमिति पक्षे यत्र कार्यं तत्र परिभाषासूत्रमुपतिष्ठते।'तस्मिन्नितिनिर्दिष्टे पूर्वस्य''तस्मादित्युत्तरस्य' षष्ठीस्थाने योगेति। ननु कार्यकालं संज्ञापरिभाषमिति पक्षे ''विप्रतिषेधे परं कार्यम्'' (१। ४। २) इयं परिभाषापि त्रिपाद्यां प्रवर्तेत। तस्याः त्रिपाद्यां प्रवर्तने को दोषः? विस्फोर्यम् अवगोर्यमित्यत्र गुणात् परत्वेन विप्रतिषेधशास्त्रेण दीर्घत्वं स्यात् विपूर्वकात् संचलनार्थकात् स्फुर्धातोः ''ऋहलोर्ण्य'' इति ण्यति ''पुगन्तलघू-पधस्य च'' इति गुणं प्रबाध्य परत्वात् 'हलि च' (८।२।७७) इति प्राप्नोति। एवं गुरीति धातोरीकारेत्संज्ञकात् ''ऋहलोर्ण्यत्'' इति ण्यति गुणं प्रबाध्य हलि चेति दीर्घः प्राप्नोतीति दोषः।



**( म० भा० ) अत उत्तरं पठति –**

**''पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य''॥ १॥**

**पूर्वत्रासिद्धे नास्ति विप्रतिषेधः। किं कारणम्? अभावादुत्तरस्य। द्वयोर्हि सावकाशयोः समवस्थितयोर्विप्रतिषेधो भवति। न च पूर्वत्रासिद्धे परं पूर्वं प्रति भवति। यद्येवं दोग्धा दोग्धुं धत्वस्यासिद्धत्वाड्ढत्वं प्राप्नोति। काष्ठतट् कूटतट् संयोगादिलोपस्यासिद्धत्वात् संयोगान्तलोपः प्राप्नोति।**

**अयं भावः** – विप्रतिषेधे परं कार्यमिति परिभाषासूत्रस्य त्रिपाद्यामपि प्रवृत्तौ विस्फोर्यम् अवगोर्यमित्यत्र पुगन्तलघूपधस्य च (७।३।८६) इति गुणं प्रबाध्य परत्वाद् ''हलि च'' (८। २। ७७) इति दीर्घः स्यात्। तद्वारयितुं वार्तिकं प्रवर्तते। पूर्वत्रासिद्धेति। तात्पर्यमिदमस्ति यत् परस्परान्यत्रलब्धावकाश-योरेकत्र युगपत्प्राप्तुतः तदा विप्रतिषेधो भवति। अत्र तु गुणदीर्घविधायकसूत्रयोर्युगपत् समवस्थितत्वं नास्ति। त्रिपादीस्थस्यासिद्धत्वात्। अतो विप्रतिषेधस्य निमित्ता-भावात्। अत एव वार्तिकेऽभावादुत्तरस्येत्युक्तम्। त्रिपाद्यां परिभाषाया अनुपस्थानात् गुण एव प्रवर्तते। विस्फोर्यम् अवगोर्यमिति सिद्ध्यतः।

ननु यथोद्देशपक्षे दोग्धा दोग्धुमित्यत्र दुह्धातोः तृचि तुमुनि च प्रत्यये कृते ''दादेर्धातोर्घः'' (८।२।३२) इति हस्य घत्वे कृते तस्यासिद्धत्वात् ''हो ढ'' (८।२।३१) इति ढत्वं प्राप्नोति। एवं काष्ठं तक्ष्णोति तक्षति वेत्यर्थे क्विपि तस्य सर्वापहारिलोपे स्वादिकार्ये ''स्कोः संयोगाद्योरन्ते च'' (८। २। २९) इति ककारस्य लोपे तस्यासिद्धत्वात् ''संयोगान्तस्य लोपः'' (८। २। २३) इति संयोगान्तस्य लोपः प्राप्नोति। एवं कूटं तक्षतीत्यर्थे क्विपि तल्लोपे ककारलोपे तस्यासिद्धत्वात् संयोगान्तलोपः प्राप्नोति। तत्रापवादस्यासिद्धत्वाभावात् वचनप्रामा-ण्यात्। तदेवोक्तं वार्तिके –

**''अपवादो वचनप्रामाण्यात्''॥ २॥**

अर्थात् घत्वविधायकं संयोगादिलोपविधायकञ्चापवादौ स्तः तयोरनव-काशत्वात् तयोरसिद्धत्वं नास्ति। कार्यकालं संज्ञापरिभाषमिति पक्षेऽन्यतराकाङ्क्षया सम्बन्धेन न दोष इति तात्पर्यम्। षकारजश्त्वे चर्त्वे च काष्ठतट् कूटतट् इति प्रयोगौ सिध्यतः। दोग्धा दोग्धुमित्यत्रापि घत्वस्यापवादत्वम्।

(म० भा०) ''पूर्वत्रासिद्धमधिकारः''॥ ३॥

पूर्वत्रासिद्धमित्यधिकारोऽयं द्रष्टव्यः। किं प्रयोजनम्?

''परस्य परस्य पूर्वत्र पूर्वत्रासिद्धविज्ञानार्थम्''॥ ४॥

परः परो योगः पूर्वं पूर्वं योगं प्रत्यसिद्धो यथा स्यात्।

अनधिकारे हि समुदायस्य समुदायेऽसिद्धविज्ञानम्॥ ५॥

अनधिकारे हि सति समुदायस्य समुदायेऽसिद्धत्वं विज्ञायेत। तत्र को दोषः।

''तत्राऽयथेष्टं प्रसज्येत''॥ ६॥

तत्राऽयथेष्टं प्रसज्येत। गोधुङ्मान् गुड्लिण्मानिति – घत्वढत्वयोः कृतयोर्झयः (८।२।१०) इति वत्वं प्रसज्येत।

**अयं भावः** – पूर्वत्रासिद्धमिति अधिकारसूत्रमस्तीति द्रष्टव्यम्। तस्य प्रयोजनं पृच्छति – किं प्रयोजनमिति। एतस्योत्तरं चतुर्थेन वार्तिकेनोच्यते। परः परो योगः पूर्वं पूर्वं योगं प्रत्यसिद्धो यथा स्यात्। अर्थात् त्रिपाद्यामपि पूर्वं प्रति परमसिद्धं स्यादित्यर्थलाभायाधिकारोऽपि द्रष्टव्यः। अन्यथा केवलमिदं विधिसूत्रमेव स्यात् तदा सपादसप्ताध्याय्यपेक्षालब्धपरव्यपदेशोऽनपेक्षितान्तर्गतावयवपौर्वापर्योऽसिद्धो भवतीत्येतावानस्य विधिवाक्यस्यार्थो विज्ञायेत। अतोऽधिकारः कर्त्तव्यः। ''अनधिकारे हि समुदायस्य समुदायेऽसिद्धत्वं विज्ञायेतेति पञ्चमे वार्तिके उक्तं तत्र दूषणमस्ति।'' तच्च षष्ठे वार्तिके दूषणम् वदति। तद्दूषणं विद्यतेऽयथेष्टप्रसङ्गत्वमिति। गोधुङ्मान् गुडलिण्मानिति। अत्र गोदुहोऽस्य सन्तीत्यर्थे गुडलिहोऽस्य सन्तीत्यर्थे च मतुपि प्रत्यये गोदुह्मत् गुडलिह्मत् इति स्थिते प्रथमप्रयोगे ''दादेर्धातोर्घः'' (८।२।३२) इति हकारस्य घत्वे द्वितीयप्रयोगे हकारस्य ''हो ढः'' (८।२।३१) इति ढत्वे च कृते ''झयः'' (८।२।१०) इति वत्वं प्रसज्येत। अत एवैतद्दूषणमपाकर्त्तुं वार्तिककाराः ''तस्मादधिकारः'' इति सप्तमं वार्तिकं ब्रुवते। तस्माद् दोषात् पूर्वत्रासिद्धमित्यधिकारत्वे न ज्ञेय इति भावः। तेन गोदुह्मत् गुडलिह्मत् इति स्थितौ ''दादेर्धातोर्घः'' इति घत्वे गुडलिह्मत् इत्यत्र ''हो ढः'' इति ढत्वे 'झलां जशोऽन्ते' इति जश्त्वस्य सिद्धत्वादेकाचो वश इति



भष्भावे ततो जश्त्वेन गकारे डकारे च यरोऽनुनासिकत्वे प्रत्यये भाषायामिति नित्यानुनासिकत्वेन ङकारे णकारे च 'स्वादिकार्ये' गोधुङ्मान् गुड्लिण्मानिति सिद्ध्यतः। अधिकारे कृते तु 'झयः' इति दृष्ट्या धत्वढत्वयोरसिद्धत्वेन वत्वं प्रसज्येत इति।

(म० भा०) ''अथासिद्धवचन उक्तम्''॥ ८॥

किमुक्तम्? तत्र तावदुक्तम् – षत्वतुकोरसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं चेति। एवमिहापि पूर्वत्रासिद्धवचनादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च। आदेशलक्षणप्रतिषेधार्थं तावत् – राजभिः तक्षभिः, राजभ्यां तक्षभ्याम्, राजसु तक्षसु इति नलोपे कृते 'ऽत' इत्यैस्भावादयः प्राप्नुवन्ति। असिद्धत्वान्न भवन्ति। उत्सर्गलक्षणभावार्थं च – अमुष्मै अमुष्मात् अमुष्य अमुस्मिन्नित्यत्र मुभावे कृते 'ऽत' इति स्मायादयो न प्राप्नुवन्ति। असिद्धत्वाद्भवन्ति। सुपर्वाणौ सुपर्वाणः, णत्वे कृते ''नोपधायाः'' इति दीर्घत्वं न प्राप्नोति। असिद्धत्वाद्भवति।

**अयं भावः** – अथासिद्धवचनमुक्तम्। कुत्रोक्तम्? 'षत्वतुकोरसिद्धः' (६।१।८६) इति सूत्रे। किम् उक्तम्? शास्त्रासिद्धत्वं समर्थितम् तत्र। तत्रत्यं प्रथमं वार्तिकमेतदस्ति।''षत्वतुकोरसिद्धचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं चे''ति। तत्रादेशलक्षणप्रतिषेधार्थं तावत् – कोऽसिञ्चत् योऽसिञ्चत्। एकादेशे कृते 'इणः' इति षत्वं प्राप्नोति। षत्वे कर्त्तव्ये एकादेशस्यासिद्धत्वे षत्वतुकोरितिसूत्रेण कृते षत्वं न भवति। उत्सर्गलक्षणभावार्थं च – अधीत्य प्रेत्य। अधि इ य प्र इय इत्यत्र सवर्णदीर्घे गुणे च कृते ह्रस्वाभावात् ''ह्रस्वस्य पिति कृति तुक्'' तुग्न प्राप्नोति। एकादेशस्यासिद्धवचनात् तुग्भवति। अत्रोत्सर्गस्यादेशेनापहारे कृते स्यासिद्धत्वेऽपि उत्सर्गलक्षणं कार्यं न प्राप्नोति। उत्सर्गस्याभावात्। तत्रत्यं द्वितीयं वार्तिकम् – ''तत्रोत्सर्गलक्षणाप्रसिद्धिरुत्सर्गाभावात्''। तृतीये वार्तिके कारणं प्रस्तूयते यद् देवदत्तस्य हन्तरि हते देवदत्तस्योन्मज्जनं न भवतीति। एतदाशयकं तृतीयं वार्तिकम् – ''असिद्धवचनासिद्धमिति चेन्नान्यस्यासिद्धवचनादन्यस्य भावः'' इति। अर्थात् कोऽसिञ्चत् इत्यत्रैकादेशेनाकारस्यापहारे तस्यैकादेशस्यासिद्धत्वेऽकाररूपस्योत्सर्गस्य तल्लक्षणं कार्यं = षत्वाभावरूपं न

भवति। उत्सर्गस्याभावात्। एवमधीत्येत्यत्रापि सवर्णदीर्घेण ह्रस्वत्वस्यापहारे तस्यासिद्धत्वेऽपि उत्सर्गलक्षणं कार्यं न भवति। अत्रोत्सर्गलक्षणं कार्यं तुग्रूपं न भवति। अतः पुनः वार्तिककारेण चतुर्थं वार्तिकं प्रस्तुतम् – ''तस्मात् स्थानिवद्-वचनमसिद्धत्वं चेत्युक्तम्।'' तस्मात् अधीत्य प्रेत्येत्यत्र स्थानिवद्भावः कोऽसिञ्चदि-त्यत्रासिद्धत्वमिति। तेनोभयत्र तुक्षत्वाभावश्च सिद्ध्यतः। तत्र दोषोद्धारः पञ्चमे वार्तिके विहितः। तथाहि – ''स्थानिवद्वचनानर्थक्यं शास्त्रासिद्धत्वात्'' अत्रत्यं महाभाष्यम् – ''स्थानिवद्वचनमनर्थकम्।'' किं कारणम्? शास्त्रासिद्धत्वात् नानेन कार्यासिद्धत्वं क्रियते। किं तर्हि? शास्त्रासिद्धत्वमनेन क्रियते – एकादेश-शास्त्रं तुक्शास्त्रेऽसिद्धं भवतीति।

'एवमिहापि' यथा षत्वतुकोरसिद्धः इति सूत्रे व्याख्यातम् तद्वत् प्रकृत-सूत्रेऽपि बोद्धव्यम् – तथाहि – आदेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं चेति। आदेशलक्षणप्रतिषेधार्थं तावत् – राजभिः तक्षभिरित्यत्र राजन्शब्दात् तक्षन्शब्दाच्च भिसि प्रत्यये 'नलोपः प्रातिपदिकान्तस्य' (८। २। ७) इति नकारलोपे ''अतो भिस ऐस्'' (७। १। ९) इति ऐसादेशे प्राप्ते पूर्वत्रासिद्धमिति नियमेन नकारलोपस्यासिद्धत्वात् ऐसादेशो न भवति। एवं राजभ्यां तक्षभ्यामत्र न लोपस्यासिद्धत्वात् ''सुपि च'' (७। ३। १०२) इति दीर्घो भवति। एवं राजसु तक्षसु इत्यत्रापि नलोपस्यासिद्धत्वेन ''बहुवचने झल्येत्'' (७। ३। १०३) इत्येत्वं न भवति। उत्सर्गलक्षणभावार्थं च – अमुष्मै अमुष्मात् अमुष्य अमुस्मिन्नि-त्यत्र अदस्शब्दात् क्रमशो ङेङसिङस्ङिविभक्तिषु सकारस्यात्वे पररूपे कृते ''सर्वनाम्नः स्मै'' (८। २। १२) ''ङसिङ्योः स्मात्स्मिनौ'' (८। २। १४) ''टाङसिङसामिनात्स्याः'' (८। २। १५) इत्येतेषु कर्त्तव्येषु ''अदसोऽसे-र्दादुदोमः'' इत्यस्य शास्त्रस्यासिद्धत्वात् अदन्तत्वावस्थायामेव स्मैस्मात् स्मिन्स्या-देशाः भवति। कार्यासिद्धत्वपक्षे मत्वोत्वस्यासिद्धत्वेऽपि अदन्तत्वस्याभावे ते न सिद्ध्यन्ति। एवं सुपर्वाणौ सुपर्वाणः इत्यत्राट्कुप्वाङ्नुम्व्यवायेऽपि (८। ४। २) इति णत्वविधायकशास्त्रस्यासिद्धत्वात् नोपधायाः (६। ४। ७) इति णत्वं सिद्ध्यति।

**॥ पूर्वत्रासिद्धम्॥ । २। १॥**

*****



| | | |
|---|---|---|
| नाम | = | **प० रामरूपमिश्रः** |
| पिता | = | स्व० व्रजभूषणमिश्रः |
| माता | = | स्व० अनन्ती देवी |
| जन्मतिथिः | = | १५.०३.१९४० |
| पैतृकस्थलम् | = | ग्राम = सिहौली, पत्रा० लुहरगाँव, तहसील = गुनौर, |
| | | जिला = पन्ना (म०प्र०) |
| गुरवः | = | प० भूपनारायणझाः |
| | | प० शुकदेवझाः |
| | | प० कालिकाप्रसादशुक्लाः |
| लब्धोपाधयः | = | व्याकरणाचार्यः, सर्वदर्शनाचार्यः, संस्कृत=एम० ए०, |
| | | विद्यावारिधिः (पी=एच्० डी) |
| शोधविषयः | = | पातञ्जलमहाभाष्ये दर्शनान्तरीयतत्त्वविचारः |
| अध्ययनस्थलम् | = | संस्कृतविश्वविद्यालयः, वाराणसी, |
| | | दिल्लीविश्वविद्यालयश्च |
| अध्यापनानुभवः | = | द्वात्रिंशद्वर्षाणि। |
| अन्तिमा सेवा | = | प्राचार्यः, श्रीमुम्बादेवी आदर्शसंस्कृतमहाविद्यालयः, |
| | | भारतीयविद्याभवनम्, मुम्बई=०६ |
| वर्तमानसङ्केतः | = | ऑस्कर ज्योति, बी=२, आजाद नगर नं० = ३, |
| | | समीप वीरा देसाई रोड, अन्धेरी (प०), |
| | | मुम्बई = ४०००५३ |



| | | |
|---|---|---|
| नाम | = | **प० रामरूपमिश्रः** |
| पिता | = | स्व० ब्रजभूषणमिश्रः |
| माता | = | स्व० अनन्ती देवी |
| जन्मतिथिः | = | १५.०३.१९४० |
| पैतृकस्थलम् | = | ग्राम = सिहौली, पत्रा० लुहरगॉव, तहसील =गुनौर,<br>जिला = पन्ना (म०प्र०) |
| गुरवः | = | प० भूपनारायणझाः<br>प० शुकदेवझाः<br>प० कालिकाप्रसादशुक्लाः |
| लब्धोपाधयः | = | व्याकरणाचार्यः, सर्वदर्शनाचार्यः, संस्कृत=एम० ए०,<br>विद्यावारिधिः (पी=एच्० डी) |
| शोधविषयः | = | पातञ्जलमहाभाष्ये दर्शनान्तरीयतत्त्वविचारः |
| अध्ययनस्थलम् | = | संस्कृतविश्वविद्यालयः, वाराणसी,<br>दिल्लीविश्वविद्यालयश्च |
| अध्यापनानुभवः | = | द्वात्रिंशद्वर्षाणि। |
| अन्तिमा सेवा | = | प्राचार्यः, श्रीमुम्बादेवी आदर्शसंस्कृतमहाविद्यालयः,<br>भारतीयविद्याभवनम्, मुम्बई=०६ |
| वर्तमानसङ्केतः | = | ऑस्कर ज्योति, बी=२, आजाद नगर नं० = ३,<br>समीप वीरा देसाई रोड, अन्धेरी (प०),<br>मुम्बई=४०००५३ |